ॐ

# अद्वैतामृतग्रंथः

पंचकवलात्मकः ।

---

विश्वविख्यातकीर्ति-श्रीमज्जगन्नाथसरस्वती-
यतींद्रविरचितस्तथा पंडितमोहन-
लालशर्मकृतटीकासमेत. ।

स च

व्यास कानजीजयकृष्णात्मजलालजीशर्मा तथा सावलेश्वरयु-
पाह्व-शंभुजनुर्गजाननशर्मेत्येतच्छास्त्रिद्वयद्वारा सशोध्य

यदुवंशीय-डोशात्मजरामदासलवीय-
भीमज्यात्मजकानजिभ्यां

मोहमय्यां जगदीश्वराख्यमुद्रणालये मुद्रापित ।

संवद्वा १९५० ख्रिस्तयब्दा १८९४.

---

सर्वोऽप्यधिकारोऽङ्कनकर्त्रो स्वायत्तीकृत

# प्रस्तावना ।

पूर्वं ह्यस्मिन् भारते वर्षे वेदवेदांतशास्त्रादिसमग्रगीर्वाणविद्यापयोधिपारीणा भूमिदेवा विपश्चिद्वर्या अविरला आसन् । तत्रापि साधनचतुष्टयसंयुक्ताद्वैतनिष्ठाजन्यापरोक्षज्ञाननंदनवनविहारिणा श्रीमज्जगन्नाथसरस्वत्याख्यमस्करीन्द्रेण सकलमुमुक्षुजनवैराग्यादिसाधनचतुष्टयसंयुक्तात्मसाक्षात्कारसुलभाय विरचितो नानाविधश्रुतिस्मृतिपुराणवचनैर्दृढीकृतसद्वस्तुयाथात्म्योपयोगी समग्रधर्मप्रकाशकोऽयं अद्वैतामृताख्योग्रंथः। तथा च, हृषीकेशग्रामनिवासिना पण्डितोपपदधारिणा मोहनलालशर्मकृतटीकासमलंकृतः । स च सर्वजिज्ञासुजनावलोकनाय श्रीमत्सद्बोधकब्रह्मनिष्ठवर्य-प्रेमज्यात्मज देवकृष्णशर्माज्ञया तथैव मम कल्याणेच्छुना मित्रवर्येण व्यासकानजीजयकृष्णतनुजेन लालजीशर्मणा संशोधयित्वा मुद्रापणाय पद्मकुलोत्पन्नभट्टिवंशीयदोपा तनुजाय रामदासवर्मणे मह्यं निवेदितवान् । तदहं देशिककृतोपकारमंगीकृत्य लवान्वयोत्पन्नभीमज्यात्मज-कानजीवर्मणः सहायेन सुशोभितैर्मुद्राक्षरैः प्रकाशितवान् । तदिममद्वैतामृतरसास्वादनपटवः निखिलार्याः स्वचित्तभाजने स्थिरीकरिष्यंतीत्याशास्महे येन ममायं सफलीभविष्यति प्रयासः ।

ठ. रामदास डोसी.
पुजारा. ठ. कानजी भीमजी.
ठ. शामजी उमरशी.
प्रसिद्धकर्तारः

॥ श्रीः ॥

# अथाद्वैतामृतग्रंथः प्रारभ्यते ॥

## तस्यायं प्रथमः कवलः

॥ श्रीगणेशाय नमः ॥ ॐ श्रीगुरुभ्यो नमः ॥ ब्रह्माद्या ईशते यस्मात्स्वकृत्ये सच्चिदद्वयम् ॥ तं दयालुं शिवं वंदे सहायं गणनायकम् ॥ १ ॥

ओम् ।

हरिहरसरस्वती यद्गुरुरीड्यः परमहंसानाम् ॥
स जगन्नाथपदोत्तरसरस्वतीशब्दसंवेद्यः ॥ १ ॥

अथ भाष्याद्याकरग्रंथविचारासमर्थान् अनेकजन्मानुष्ठितनित्यनैमित्तिकादिकर्मजातस्वांतशुद्धिसमुत्पन्नसाधनचतुष्टयान् अधिकारिण उपलभमानः करुणामात्रवशीकृतचित्तो यतिवरहृदयकमलप्रकाशनद्युमणिमूर्तिश्रीजगन्नाथसरस्वतीपदबोध्यः परिव्राट् करामलकीकृतवेदांतार्थः स्वरचितसुकुमारपद्यैः सर्वोपनिषदर्थं दर्शयिष्यन् परोक्षप्रियो देव इति वचनमनुस्मरन् परोक्ष्येण परमार्थतत्त्वं निरूपयितुकामः 'यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ॥ तस्यैते कथिता ह्यर्थाः प्रकाशंते महात्मनः' इतिश्रुतेश्चिकीर्षितग्रंथनिर्विघ्नसमाप्त्यर्थं गुरुस्मरणरूपं मंगलमनुतिष्ठन् करिष्यमाणग्रंथं प्रतिजानीते । श्लोकद्वयेन हरिहरेत्यादिना । यद्गुरु. यस्य गुरुः ब्रह्मोपदेशकः गृणाति तत्त्वं उपदिशतीति निर्वचनात् । परमहंसानां परमस्य परमार्थतत्त्वस्य हंसवद्विवेचकानाम् । कर्तृकर्मणोः कृतीति कर्तरि षष्ठी । ईड्यः स्तुत्यः । हरिहरसरस्वतीति नाम्ना प्रसिद्ध आसीदिति शेषः । स जगन्नाथसरस्वतीपदार्थः ॥ १ ॥ ॥

कर्मदिकंठालंकारं सारं वेदांतवारिधेः ॥
रचयत्यमलं ग्रंथमद्वैतामृतसंज्ञकम् ॥ २ ॥

कर्मंदिकंठालंकारं कर्मंदिनां संन्यासिनां कंठस्य भूषणम् । 'भिक्षुः परिव्राट् कर्मंदी पाराशर्यपि मस्करी' इत्यमरः । वेदांतवारिधेः उपनिषत्समुद्रस्य अमृतवत् सात्मभलमविद्यानिवर्तकं अद्वैतामृतसंज्ञकं ग्रंथं प्रकरणं रचयति निबध्नातीत्यर्थः । ननु 'सिद्धार्थं ज्ञातसंबंधं श्रोतुं श्रोता प्रवर्त्तते ॥ शास्त्रादौ तेन वक्तव्यः संबंधः सप्रयोजनः' इति वृद्धोक्तेरत्रानुबंधचतुष्टयस्याप्रदर्शनात् प्रेक्षावतामनादरणीयता स्यात्, न चास्य वेदांतार्थविचारात्मकत्वात्तदीयैरेव तैस्तद्वत्त्वमिति वाच्यम् । तदीयानां तेषां तत्र प्रवर्तकत्वादत्र प्रवर्तकत्वे मानाभावात् । इतिचेन्नाद्वैतामृतसंज्ञकमितिपदेन सूचितत्वान्नात्र प्रवृत्त्यनुपपत्ति मायातत्कार्यनिवृत्तिपूर्विका मरणधर्मणो ब्रह्मणोऽज्ञातस्य विषयत्वं ज्ञातस्य फलत्वं प्रतिपादकभावः संबंधः । अधिकारी तु कर्मंदिशब्देनोक्त इति ॥ २ ॥

आसीद्यतिवरः कश्चिद्विवेकाश्रमसंज्ञितः ॥
यत्प्रसादेन बहवो मुक्तिमार्गमुपागताः ॥ ३ ॥

'अनेकजन्मसंसिद्धस्ततो याति परां गतिम्' इति स्मृतेरनेकजन्मपुण्यपुंजपरिपाकवशाद्वैराग्यं जायते, ततो विवेकः शमादिषट्कम्, ततो मुमुक्षा, ततः प्राप्तोत्तमाश्रमस्य वेदांतविचारद्वारा यथा कृतकृत्यता भवति तं प्रकारं दर्शयितुमपूर्वां कथामुपक्षिपति । आसीद्यतिवर इति । 'आश्चर्यवत् पश्यति कश्चिदेनमाश्चर्यवद्वदति तथैव चान्यः ॥ आश्चर्यवच्चैनमन्यः शृणोति श्रुत्वाऽप्येनं वेद न चैव कश्चित् ॥ सहस्रेभ्य. सहस्रेभ्यः कश्चिदुत्थाय यीयियात् ॥ भिनत्ति मायामाकारं पंजरं केसरी यथा' इत्यादिस्मृतेः कश्चिदेव ब्रह्मविचारप्रवणो भवतीत्याह । कश्चिदिति । अतएव परिव्राट्तम इत्याह । यतिवर इति । विवेकाश्रमसंज्ञितः विवेचनं माया तत्कार्याज्जडात् अनृतात् दुःखात् विरसदानंदस्य पृथक्करणं तदधिष्ठानत्वेन निश्चय इत्यर्थः । तस्य आश्रम आश्रय इति संज्ञा जाता यस्य संज्ञितः । कार्यार्थमीदृशः, वस्तुतः कृतार्थक्रदेवेत्याह । यत्प्रसादेनेति । बहवोऽधिकारिणः मुक्तिमार्गं श्रवणादिकं विवेकं विना श्रवणादिविचारा-

नुपपत्तेः, मुक्त्यर्थं मृग्यते ऽन्वेष्यते साक्षात्क्रियते परमहंसैः, मुक्तिमार्गः परमात्मा तमिति वा उपागता मुक्ताः । नन्वेकजीववादे वामदेवादिमुक्तिश्रवणादर्थवाद एवेति चेन्न, तस्योत्तमाधिकारिविषयत्वात् । 'उपदेक्ष्यंति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः ' इत्यादिस्मृतेः । सर्वाधिकारिजनकल्याणार्थं प्रवृत्तस्य भगवतोऽनेकजीववादस्यैव वचनात्प्रतीतेरिति ॥ ३ ॥

स स्वोचितमठं लोके क्वचनापि विचारयन् ॥
नावाप तं मनो यत्र यतेस्तस्य प्रसीदति ॥ ४ ॥

यद्यपि ' ईश्वरः सर्वभूतानाम्' इतिस्मृतेरीश्वरस्य स्थितिः सर्वदेहसाधारणी, फलं तु मनुष्यदेह एव । तथा च श्रुतिः–पुरुषे त्वेव आविस्तरामात्मा मनुष्याधिकारस्य मुख्यत्वान्नारायणाविर्भावदेहस्य नृदेहमात्रं सुतरां सुदुर्लभं इतिवचनात्पुरुषदेहस्य दुर्लभत्वप्रतिपादनाच्चतुरशीतिलक्षदेहेषु अस्यैव मोक्षसाधनत्वं विवेकद्वारा इति दर्शयन्नाह । स स्वोचितमिति । स्वशब्दस्य सर्वनामत्वात्स्वस्य परस्य उचितं प्रादुर्भावयोग्यं मठं ब्रह्मचर्यादिस्थानं ' मठः छात्रादिनिलयः ' इत्यमरात् । ' प्रसादे सर्वदुःखानां हानिरस्योपजायते ' इति स्मृत्युक्तस्य प्रसादस्यान्यमठेष्वसंभवं दर्शयति । नावापेति । स विवेकाश्रमः क्वचनापि लोके चतुर्दशभुवनेऽपि विचारयन् । यत्र यतेस्तस्य विवेकाश्रमस्य भिक्षोर्मनः प्रसीदति निर्मलं भवति तं मठं नावाप न प्राप्तवानित्यर्थः ॥ ४ ॥

नवांकांकांकनंदत्रिगजसंख्या विलोकिताः ॥
मठास्तेन जगत्यस्मिंस्तेषु लेभे स्थितिं न सः ॥ ५ ॥

एकोनचतुरशीतिमठाः अवेक्षिताः तस्य मनसः स्थितिहेतवो नासन्नित्याह । नवांकांकेति । अंकानां वामतो गतिरितिरीत्या गजशब्देनाष्टत्रिशब्देन त्रय', नंदशब्देन नव, त्रिभिरंकैर्नवनवोच्यते नवशब्देनापि त एव । तथाच । त्र्यशीतिलक्षाः ८३००००० नवनवतिसहस्रं९९००० नवशत ९००एकोनशतं ९९ ( एवमेकीकृत्य ८३९९९९९ ) एतावंतो

मठास्तेन भिक्षुणा दृष्टाः। तेषु मठेषु स भिक्षुः स्थितिं निष्ठां न लेभे न प्राप्तवानित्यर्थः ॥ ५ ॥

एवं गिरिवरारण्यसरित्सागरवापिकाः ॥
पश्यता किल तेनैक्षि पांचजन्याऽभिधो मठः ॥ ६ ॥

एवं तत्र तत्र भ्रमता तेन पुरुषस्वरूपनिष्ठाहेतुर्मठ उपलब्ध इत्याह। एवं गिरिवरेति। गिरिवराश्चारण्यं वनंच सरितश्च सागराश्च वापिकाश्च तास्तथा। किलेति वस्मेक्षायाम्। तेन पश्यता आलोचयता पांचजन्याभिधः 'स्युः पुमांसः पंचजनाः' इत्यभिधानात् पंचजनस्य पुंसः संबंधी पांचजन्यः अभिधा यस्य स तथा तेनैक्षि दृष्टः ॥ ६ ॥

द्विस्थूणः कामगो रम्यो नवद्वारविभूषितः ॥
स्वोचितांचारनिर्वृत्तियोग्यस्तीर्थपदाश्रयः ॥ ७ ॥

मठं विशिनष्टि त्रिभिः। द्विस्थूण इति। द्विस्थूणे विष्टंभके यस्य स तथा। कामगः काम्यंतेऽभिलष्यंते कामा विषयास्तान् गच्छतीति कामगः। अथवा कामा एव गीयंतेऽहर्निशं यत्रेति स तथा। उक्तंच 'जरद्गवः कंवलपादुकाभ्यां द्वारि स्थितो गायति मद्रकाणि॥ तं ब्राह्मणी पृच्छति पुत्रकामा राजोरुमायां लशुनस्य कोऽर्थः' इति। नवद्वारविभूषितः नवद्वाराणीति सप्त शीर्षगानि द्वेऽधः तैर्भूषितः। स्वोचितांचारनिर्वृत्तियोग्यः स्वस्य जीवस्योचिताचारः निष्कामकर्मादिः तेन निर्वृतिः शांतिः 'स शांतिमधिगच्छति' इतिस्मृत्युक्ता तस्यायोग्योऽर्ह इत्यर्थः। तीर्थपदाश्रयः तीर्थं शास्त्रं तेन पद्यते प्राप्यते तीर्थपदं परं ब्रह्म तस्याश्रयः, तत्प्राप्तियोग्य इत्यर्थः ॥ ७ ॥

सर्वलोकोपभोगाप्तिपरमोपायसंभृतः ॥
बहुजन्मसमभ्यस्तैरवाप्यः सुकृतोचयैः ॥ ८ ॥

'यावानर्थ उदपाने सर्वतः संप्लुतोदके ॥ तावान्सर्वेषु वेदेषु ब्राह्मणस्य विजानतः' इत्यत्र प्रसिद्धं ज्ञानिनः सर्वलोकसुखाधिष्ठानभूतब्रह्मानुभवितृत्वं यत्तदुपायत्वं दर्शयन्नाह। सर्वेति। सर्वलोकेषु भूरादिषु ये

उपभोगा विषयानंदसाक्षात्कारास्तेषां प्राप्तिः समुद्रस्नाने सर्वतीर्थस्नानमिव सर्वानंदब्रह्मसाक्षात्कारः तस्याः परमोपायो ज्ञानं भूतं संपादितं यत्र सः । अधिकारिशरीरस्यानेकजन्माभ्यस्तैः सुकृतवृंदैः प्राप्यतामाह । बहुजन्मेति । अनेकजन्मानुष्ठितैः सुकृतोच्चयैः पुण्यसमूहैरवाप्यः ॥ ८ ॥

जगन्मंगलमूर्तिश्रीरामचंद्रार्चनोचितः ॥
यस्मिन्नधिष्ठिते चित्तं विद्रुपः संप्रसीदति ॥ ९ ॥

'ईश्वरानुग्रहादेव पुंसामद्वैतवासना' इत्यादिवचनादद्वैतनिष्ठासंपादनसमर्थपरमेश्वराराधनयोग्यतामाह । जगन्मंगलेति । जगतां भक्तानां मंगलं कल्याणमूर्तिं लीलाविग्रहरूपं यस्य स चासौ रामचंद्रो दाशरथिः तस्यार्चनमाराधनं तत्रोचितो योग्यः । अथवा जगन्मंगलमूर्तिः सर्वजगदीश्वरः श्रीरामचंद्रो रमते सर्वत्र रामः चंदयति आल्हादयति चंद्रः तस्यार्चनं गंगास्रोतोवत्रिरवच्छिन्नभगवद्धर्मान् श्रुत्वा द्रुतायामनसो वृत्तिर्भक्तिः । तदुक्तं भक्तिरसायने ' द्रुतस्य भगवद्धर्माद्धारावाहिकतां गता । सर्वेशे मनसो वृत्तिर्भक्तिरित्यभिधीयते ' इति अन्यत् पूर्ववत् अतएव तस्मिन् सति चित्तप्रसादो भवतीत्याह । यस्मिन्निति । विद्रुप उपासकस्य चित्तं यस्मिन् भगवति सर्वात्मनि चित्ते प्रविष्टे सति पुनर्भगवद्भावनां न त्यजति चित्तमतएव संप्रसीदति निर्मलं भवति तस्य मलिनत्वं दृष्टे श्रुते विषये लाल्सावत्वं भगवत्स्वरूपं श्रुत्वा द्रुतं चित्तं सत् काठिन्यदशां गतं पुनर्द्रुतं तत्स्वरूपं न मुंचति द्रवावस्थाम विष्टहिंगुलादिरंगस्य जतुनः पुनः काठिन्यापनयनेन काष्ठादिसंयोगे जायमाने स एव रंगः प्रतिभाति, शैथिल्यावस्थां प्रविष्टस्तु न तथा अतएवोक्तं ' द्रुते चित्ते विनिक्षिप्तः स्वाकारो यस्य वस्तुनः ॥ संस्कारवासनाभावभावनाशब्दभागसौ ॥ शिथिलीभावमात्रं तु मनो गच्छत्यतापकैः॥न तत्र वस्तु विशति वासनात्वेन किंचन ॥ अतापकैः सूर्यालोकतुल्यैरीषत्तापकैर्विषयैरित्यर्थः । द्रवतायां प्रविष्टं सद्यत्काठिन्यदशां गतं चेतः पुनर्द्रुतौ सत्यामपि तन्नैव मुंचंति इति । अतो भक्तस्यैकदा द्रुते चित्ते भगवदा-

कारता प्रविष्टा यस्य स कृतकृत्यो भवतीत्युक्तम् । ' सर्वभूतेषु यः पश्ये-द्भगवद्भावमात्मनः ॥ भूतानि भगवत्यात्मन्येष भागवतोत्तम ' इति भगवन्निष्ठे चित्ते सर्वथा कामाभावः । तथाच प्रह्लादः– ' अहं त्वकाम-स्त्वद्भक्तः त्वं तु स्वाम्यनपाश्रयः ॥ नान्यथेहावयोरर्थो राजसेवकयोरिव ' पृथुरपि- ' न कामये नाथ तदप्यहं क्वचिन्न यत्र युष्मच्चरणांबुजासवः ॥ महत्तमांतर्हृदयान्मुखच्युतो विधत्स्व कर्णायुतमेष मे वरः ' वृत्रः– ' न नाकपृष्ठं न च पारमेष्ठ्यं न सार्वभौमं न रसाधिपत्यम् ॥ न योगसिद्धी-रपुनर्भवं वा समंजस त्वा विरहय्य कांक्षे ' श्रुतयः– ' दुरवगमात्मतत्त्वनि-गमाय तवात्ततनोश्चरितमहामृताब्धिपरिवर्तपरिश्रमणाः ॥ न परिलषं-ति केचिदपवर्गमपीश्वर ते चरणसरोजहंसकुलसंगविसृष्टगृहाः ' भगव-द्भक्त्या एतादृशे मोक्षपर्यंते सर्वफलनिरपेक्षत्वरूपे परे वैराग्ये सति फलांतरे प्रेम्णोनुदयात् परमानंदरूपे परमात्मन्येव प्रेमापरां काष्ठां आरोहयति । अत उक्तम् । ' इत्यच्युतांघ्रिं भजतोऽनुवृत्त्या भक्तिर्विरक्ति-र्भगवत्प्रबोधः ॥ भवंति वै भागवतस्य राजन् ततः परां शांतिमुपैति साक्षात्' इति । अत्रैवार्थे भक्तिभूमय एकादश उक्ताः । तथाहि । प्रथमं महतां सेवा तद्दयापात्रता ततः ॥ श्रद्धा च तेषां धर्मेषु ततो हरिगुण-श्रुतिः ॥ ततो रत्यंकुरोत्पत्तिः स्वरूपाधिगतिस्ततः ॥ प्रेमवृद्धिः परानंदे तस्याप्यस्फुरणं ततः ॥ भगवद्धर्मनिष्ठातः स्वस्मिंस्तद्गुणशालिता ॥ प्रेम्णोऽथ परमा काष्ठेत्युदिता भक्तिभूमिकाः ॥ भागवते व्यासनारदसंवादे प्रथमस्कंधे नारदेन स्वातीतभववृत्तांतकथनं– ' अहं पुरातीतभवे ऽभवम् ' इत्यारभ्य ' अदान्मे ज्ञानमैश्वर्यं स्वस्मिन् भावं च केशवः ' इत्यंतेन सूचि-ताः । भगवद्गीतास्वप्युक्तम् । ' चतुर्विधा भजंते मां जनाः सुकृतिनोऽर्जु-न ॥ आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ ॥ तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते ॥ प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः ॥ उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतम्॥ आस्थितः स हि युक्तात्मा मामेवानुत्तमां गतिम् ॥ ' बहूनां जन्मनामंते ज्ञानवान्मां प्रपद्यते ॥ वासुदेवः सर्वमिति स महात्मा सुदुर्लभः ' इति । नन्वेवं तमेतमित्यादि-

वचनेन सर्वसुकृतसाध्या ब्रह्मविद्या प्रतिपादिता सर्वापेक्षाधिकरणेऽपि निर्णीता उत्तरमीमांसायां प्रतिपादिता च तत्रैवांतर्भावात् । भक्तेः पृथक्त्वेन निरूपणं व्यर्थं इति चेन्न, स्वरूपसाधनफलाधिकारिवैलक्षण्यात् । द्रवीभावपूर्वका हि मनसो भगवदाकारता सविकल्पकवृत्तिरूपा भक्तिः, द्रवीभावानपेक्षा-द्वितीयात्ममात्रगोचरा निर्विकल्पकमनोवृत्तिः ब्रह्मविद्या । भगवद्गुणवर्णनप्रधानग्रंथश्रवणं भक्तिसाधनम्, तत्त्वमस्यादिमहावाक्यं ब्रह्मविद्यासाधनम् । भगवद्विषयप्रेमोत्कर्षो भक्तिफलम्, सर्वानर्थनिवृत्तिनिरतिशयानंदाविर्भावो ब्रह्मविद्याफलम् । प्राणिमात्रं भक्त्यधिकारी साधनचतुष्टयसंपन्नः परमहंसः परिव्राट् । ब्रह्मविद्याधिकारीति विस्तरस्त्वन्यत्र बोध्योऽतः सुष्ठूक्तं यस्मिन्नधिष्ठिते चित्तं विदुषः संप्रसीदतीति ॥ ९ ॥

**बहुना किमिहोक्तेन पाताले भुवि वा दिवि ॥ निवासयोग्यो नान्योऽस्ति मठः संन्यासिनां सताम् ॥ १० ॥**

ननु स्वर्गादौ पाताले च मर्त्यलोके कुबेरपुर्यादौ च दिव्यदेहानां विद्यमानत्वात्कथं भारतदेहस्यैव साधनप्राधान्यमित्याशंक्य तत्र भोग्यपदार्थानां बाहुल्याद्वैराग्योत्पादकत्वाभावेन नैतत्तुल्यत्वमित्याशयेनाह । बहुनेति । पातालादौ सतां वेदमार्गवर्तिनां भिक्षूणां स्थित्यर्हो मठो न विद्यत इत्यर्थः ॥ १० ॥

**स विवेकाश्रमो भिक्षुर्दिक्षु चंक्रमणार्दितः ॥**
**स्वोचितं तं मठं वीक्ष्य तत्र निष्ठामुपागमत् ॥ ११ ॥**

ननु कुत्रचिदपि स स्थितिं न लेभे किमित्याशंक्य यथा सर्वनिषेधेऽधिष्ठाने निष्ठाविदुषां तथा तस्य यतेर्नरदेहे निवासोऽभूदित्याह । स इति । स यतिः आशासु पुनःपुनर्भ्रमणेन खिन्नः स्वयोग्यं देहं दृष्ट्वा तत्र स्थितिं लेभे इत्यर्थः ॥ ११ ॥

**क्षामे विवेकाश्रमनाम्नि तत्र यतीश्वरे लब्धपदे कथंचित् ॥ उपाजगामाथ शनैर्हसंती**

**काऽप्यंगनाऽनंगविलासभूमिः ॥ १२ ॥**

अथ वृत्तेर्विषयाकारता जन्मपरंपराप्रदा परमेश्वराकारता तन्निवर्तिकेत्याशयेन स्त्रीरूपकालंकारेण तां वर्णयितुमाह । क्षामे इति । नन्वात्मविचारप्रधाने परमार्थग्रंथे स्त्रीस्वरूपनिरूपणं शृंगाररसप्रधानं शांते रसेऽसमंजसं भातीति चेत्सत्यं, अध्यारोपं विना निषेधानुपपत्तेर्यथा कुत्रचिदध्यात्मशास्त्रे बीभत्सरसनिरूपणं शांतपर्यवसन्नं तथा प्रकृते यथा यतेः स्त्रीदर्शनादेर्निषेधः तथा शरीरपात्रातिरिक्तभोगसाधनजातात्कारवृत्तेर्निषेध इत्युभयमपि निषेध्यमित्यर्थः । क्षामे कृच्छ्रचांद्रायणादितपोभिः कृशदेहे । तथाचोक्तम् । 'आहारं कुर्यात्प्राणसंधारणार्थं प्राणाः संधार्यास्तत्त्वजिज्ञासनार्थम् ॥ तत्त्वं जिज्ञास्यं येन भूयो न जन्म' इति तत्र मनुष्यदेहे कथंचिदनेकजन्मपुण्यवशाल्लब्धस्थाने विवेकाश्रमसंज्ञके यतीन्द्रे शनैर्मंदं मंदं स्मितवदना काऽपि अपूर्वा कामविलासाश्रया स्त्री समीपमागतवतीत्यर्थः ॥ १२ ॥

**सा पंचमालापमुपात्तगाना स्रक्चंदनालिप्तशरीरयष्टिः॥**
**प्रतप्तजांबूनदरम्यवर्णा पीतासवा घूर्णितनेत्रपद्मा ॥१३॥**

तामेवांगनां वर्णयति द्वाभ्याम् । सेति । पंचमालापं 'निषादर्षभगांधारषड्जमध्यमधैवताः ॥ पंचमश्चेत्यमी सप्त तंत्रीकंठोद्भवाः स्वराः' इत्यमरोक्तसप्तमस्वरस्य पंचमस्य विष्णुदैवतत्वाद्विप्रकुलत्वात्कोकिलरवत्वाच्च श्रेष्ठत्वम् । तथा च । षड्जं रौति मयूरश्च गवाल्लो वदति चर्षभम् ॥ अजाविकौ च गांधारं क्रौंचो वदति मध्यमम् ॥ अश्वस्तु धैवतं रौति निषादं रौति कुंजरः ॥ पुष्पसाधारणे काले कोकिला रौति पंचमम् ॥ इत्यलमप्रकृतप्रपंचेन । भवेत् समुन्न । पंचमस्वरस्यालापं कृत्वा उपात्तगाना-उपात्तं गानं यया सा । स्रक्चंदनालिप्तशरीरयष्टिः स्रक् सुगंधिपुष्पमाला चंदनं च ताभ्यां लिप्ता दिग्धा शरीरयष्टिः यस्या सा । प्रतप्तजांबूनदरम्यवर्णा प्रतप्तं द्रुतं स्वर्णं तद्वद्रम्यं कमनीयं रूपं यस्याः सा । पीतासवा पीतं पानविषयीभूतं मद्यं यया सा । घूर्णिते नेत्रपद्मे नयनपद्मे यस्याः सा ॥ १३ ॥

दिव्यप्रसूनप्रचितप्रगल्भधम्मिल्लभारोपचितैर्विलासैः ॥
आप्यारुरुक्षून्परमं पदं तत्संमोहयंती जनदुर्निवारा ॥१४॥

दिव्यप्रसूनप्रचितप्रगल्भधम्मिल्लभारोपचितैः दिवि भवानि प्रसूनानि पारिजातानि पुष्पाणि तैः प्रचितः संयुक्तः प्रगल्भः श्रेष्ठः धम्मिल्लः संयतकेशाः ' धम्मिल्लः संयताः कचाः ' इत्यमरात् । तस्य भारेणोपचिताः वृद्धाः तैः कामोद्दीपकचेष्टारूपैर्विलासैः । तत् वेदांतप्रसिद्धं ' तद्विष्णोः परमं पदं ' ' ततः पदं तत्परिमार्गितव्यम् ' इत्यादिवचनैः प्रतिपादितम् । अपि भिन्नक्रमः । आरोढुं कामान् मुमुक्षूनपि संमोहं परमेश्वरवैमुख्यं जनयंती । ननु सा परिहर्तव्येत्याशंक्य कामिभिरनिवार्येत्याह । जनदुर्निवारा जायंते इति जना देहास्तत्राध्यासवंतो ये तैर्दुर्निवारा परिहर्तुमशक्या, विरक्तैः परिहरणीयेति यावत् ॥ १४ ॥

स विवेकाश्रमस्तन्वीं तां वीक्ष्यातीव विस्मितः ॥
मनसा चिंतयामास परिम्लानमुखांबुजः ॥ १५ ॥

समाहितैरेव सदा भवितव्यं भिक्षुभिरित्यर्थं व्यंजयितुं वनितासंनिधिवद्विपयाकारवृत्तिरपि वर्जनीयेत्याशयं द्योतयन्सतां दृष्ट्वा चिंतासागरे निमग्न आसीदित्याह । स इति । स भिक्षुः तामंगनां दृष्ट्वाऽत्याश्चर्यं प्राप्य इव परित आसमंतात् म्लानं मुखकमलं यस्य सः मनसा चिंतयामास । विचारप्रवण आसीदित्यर्थः । विषयसन्निधाने विचारपरेण भवितव्यं भिक्षुनेति स्वाचारेण शिक्षयति । अन्यथानर्थः स्यात् । अतएवोक्तं ' सहसा विदधीत न क्रियामविवेकः परमापदां पदम् ' इति । यावंतोऽनर्थास्तावंतः साहसेन भवंत्यतो विचारः कर्तव्य इति भावः ॥१५॥

बह्वायासैरिदं स्थानं मया प्राप्तं चिरात्किल ॥
अत्राप्ययं महाविघ्नः कुतस्त्यः समुपागतः ॥ १६ ॥

तमेव विचारं ' यथा नाम तथा गुणः ' इतिन्यायेन तस्य दर्शयति, बह्वायासैरित्यादिविंशतिश्लोकैः । मया विवेकाश्रमेण इदमधीकारं शरीरं चिरात् बहुभिर्जन्मभिर्बहुजन्मार्जितैर्धनैः आयासप्राप्तैः पुण्य-

पुंजैर्लब्धम् । क्लिष्टेत्यलंकारे । अत्रापि अस्मिन्देहेऽपि अत्युपसर्गः कुतस्त्यः । किंहेतुक इति न ज्ञायते । क्यादिसंगतिर्ब्रह्मानंदसुखानुभवप्रतिबंधिका विषयाकारवृत्तिरपि यत्र विक्षेपः इति किमुताशनाच्छादनवास इति भावः ॥ १६ ॥

**वैराग्यतीर्थसंन्यासी प्राणेभ्योऽपि प्रियो मम ॥**
**अस्यां सत्यां कथं चात्र स्थितिं प्राप्स्यति कातरः॥१७॥**

ननु गृहस्था अपि विरक्ताः प्रतीयंत इत्याशंक्य केभ्यो विरक्ता इति सोपहासमिदं वचनमित्याशयेनाह । वैराग्येति । ' ब्रह्मलोकतृणीकारवैराग्यस्यावधिर्मतः' इति ब्रह्मादिलोकानिषेधे गृहस्थो विरक्त इति वदतो व्याघात इत्यर्थः । प्राणेभ्योऽपि प्रियो ममेति । यथा लोके पुत्रः प्रियो भवति तथा वैराग्यं ममेति । यथार्थविवेके सति स्वत एव वैराग्यमित्यर्थः । अस्यां सत्यां क्षीणनिद्रौ वैराग्यं भीतं सत्पलायते । प्रबले योद्धरि सति यथा कातरो भीरुर्योद्धा इत्यर्थः ॥ १७ ॥

**शमारण्यदमारण्यादीनां संन्यासिनां तथा ॥**
**मयि वैराग्यतीर्थे चासति काऽत्र स्थितेः कथा॥१८॥**

ननु वैराग्यस्थितिर्मास्तु शमादय एवागमिष्यंतीत्यत आह । शमेति । आदिना उपरमारण्यादीनां परिग्रहः । मयि विवेकाश्रमे वैराग्यतीर्थे चासति अविद्यमाने सति शमारण्यादीनां स्थितिवार्ताऽपि नास्तीत्यर्थः ॥ १८ ॥

**एवं सति मुमुक्षाऽपि तापसी नागमिष्यति ॥**
**उच्छिन्ना मुक्तिरेषा यदयं सर्वे निराश्रया ॥ १९ ॥**

ननु मुमुक्षायां सत्यां किमिमे करिष्यंति अत आह । एवं सतीति । पूर्वोक्तानां संन्यासिनामनागमने तापसी मुमुक्षाऽपि नागमिष्यति । अपि साधनांतरसमुच्चायकः । अनेन मुमुक्षूणां तपःपरायणता विवक्षिता तपस्त्वत्र ' मनसश्चेंद्रियाणां च ऐकाग्र्यं परमं तपः ' इति याज्ञवल्क्योक्तं ग्राह्यम् । पूर्वोक्तसर्वसाधनसंपत्तौ तस्यास्तत्परायणत्वमर्थास्ति सिद्ध-

मिति भावः । ननु सर्वतीर्थं मुक्तिपर्यवसन्नं किमेभिरित्याशंक्य मुमुक्षाभावे सा खपुष्पायमाणा इत्याह । उच्छिन्नेति । ननु मिलित्वा भवंतः सर्वे तिष्ठंत्वत आह । यद्वयं सर्वे निराश्रया इति निष्फला इत्यर्थः ॥१९॥

अस्मत्समाजसंवासस्थानमेष मठः किल ॥
अत्रेयं का दुर्विदग्धा वेतालीव समागता ॥ २० ॥

ननु अस्मिन्मठे भवत्प्रतिपक्षा रागादयस्तिष्ठंतु अत आह । अस्मदिति । वैराग्यादिसंपादनद्वारा मुक्तिपोग्योऽत्रायमेव तेषामन्यत्र सावकाशत्वान्नात्र योग्यता । किलेति पूर्ववत् दुर्विदग्धा मूर्खा वेतालीव यथोत्तमं वर्णं पिशाची प्रविष्टा तं स्वधर्मात्पातयति । तथेयमपि इतिमंत्रनिवर्त्यत्वमपि समानमिति पिशाचीत्वे तद्देह एव दुःसदा तद्वासना तु जन्मपरंपरासदा तत्तद्व्यतिरेको ध्वन्यत इति ॥ २० ॥

पदाऽपि युवतीं भिक्षुर्न स्पृशेद्दारवीमपि ॥
इति वृद्धोक्तयः संति तत्कुतः स्यात्सहस्थितिः ॥ २१ ॥

अतएवाप्तैस्तामेव सर्वविषयप्रधानत्वान्निंदति, पदापीत्यादिभिः । भिक्षुः दारवीं काष्ठमयीं न पश्येच्छिखितामपीत्यादेरपिसमुच्चायकः । एतदुद्देश्य के कस्यचिदपींद्रियस्य व्यापारं न कुर्यादिति भावः । एतस्योत्तरार्द्धं 'स्पृशन्करीव वध्येत करिण्या अंगसंगत' इति । तथा विष्णुः–संभाषणं सह स्त्रीभिरालापमेक्षणे तथा ॥ नृत्यं गानं सभां सेवां परिवादांश्च वर्जयेत् ॥ मेधातिथिरपि–न संभाषेत्स्त्रियं कांचित्पूर्वदृष्टां न संस्मरेत् ॥ कथां च वर्जयेत्तासां न पश्येच्छिखितामपि ॥ २१ ॥

निर्मृष्टघृतमप्याज्यपात्रं संनिधिमुष्मणः ॥
प्राप्य द्रवत्येव तथा योषितां सन्निधौ यतिः ॥ २२ ॥

ननु स्त्रीसान्निध्ये किं दुष्यति यतिर्दुष्यतीति सदृष्टांतमाह । निर्मृष्टेति । निर्मृष्टं शुद्धं घृतं यत्र तद्धृतपात्रमग्निसमीपे यथा द्रवत्येव तथा योषितो जुषंते प्रीतिं कुर्वंति तथा पुरुषपथं वध्नंतीति योषितस्तासां समीपे यतित्वं नश्यतीत्यर्थः ॥ २२ ॥

**जिताहारोऽथवा वृद्धो विरक्तो व्याधितोऽथवा ॥**
**यतिर्न गच्छेत्तं देशं यत्र स्यात्प्रतिमा स्त्रियाः ॥ २३ ॥**

ननु विरक्तस्य संयमिनः किं करिष्यति स्त्रीत्यत आह । जिताहार इति । 'द्वौ भागौ पूरयेदन्नैर्जलेनैकं प्रपूरयेत् ॥ वायोः संचारणार्थं तु चतुर्थमवशेषयेत् ' इति योगोक्तविधिना 'जितं सर्वं जिते रसे' इत्यादिवचनात् । यत्र देशे स्त्रियाः प्रतिमा मूर्त्तिरपि तत्र जितरसो वृद्धो विरक्तो रोगग्रस्तोऽपि न गच्छेत् ॥ २३ ॥

**विषवल्लिमरुद्विंध्ये बाधते प्राणिनं यथा ॥**
**योषित्स्पर्शी तथा वायुर्बाधते मस्करीश्वरम् ॥ २४ ॥**

ननु देशे तत्प्रतिमा यत्र तत्र गमने किं दूषणमत आह । विषेति । यथा विषवल्लीवायुः विंध्याचले पर्वते प्राणिनं बाधते तथा योषित्स्पर्शी वायुः । वायुर्वै गौतम तत्सूत्रमितिश्रुतेस्तदुपाध्यंतःकरणवृत्तिर्योषिद्धिया यतीश्वरं नाशयति । ननु स्थूलस्य सूक्ष्मस्य वा देहस्यात्मनो वा नाशो नाद्यः कर्माधीनत्वात्तस्य न द्वितीयः ज्ञानं विना तन्नाशायोगात् न तृतीयस्तस्य नित्यत्वात् इति चेन्न, विवेके एव पुरुषस्तन्नाशे नश्यत्येव मस्करीश्वर इत्याशयात् इति ॥ २४ ॥

**संभाषणावलोकादि दूरे तिष्ठति योषिताम् ॥**
**अहिदंशस्मृतिरिव स्मृतिस्तासां मृतिप्रदा ॥ २५ ॥**

स्मरणमपि यस्या अनर्थकारि किमुत भाषणादिकमित्याह । संभाषणेति । यथाऽहेः सर्पस्य दंश- दंष्ट्राव्यापारः तस्य स्मृतिर्यथा मरणप्रदा तथा योषितां स्मृतिरपि ॥ २५ ॥

**योषिन्मूला बुधैः प्रोक्ताः सर्वेऽनर्थाः शरीरिणाम् ॥**
**अपि ब्रह्मेंद्रचंद्रादिदेवानां का कथा नृणाम् ॥ २६ ॥**

ननु महतां विदुषां किं करिष्यतीयमित्याशंक्य 'मात्रा स्वस्रा दुहित्रा वा नैवैकासनो भवेत् ॥ बलवानिंद्रियग्रामो विद्वांसमपकर्षति ' इत्याशयेन महतामपि दुर्दशामेतत्संगेनाह । योषिदिति । शरीरवतां सर्वेऽनर्थाः

योषित्संगात्संभवंति महतामपि किमत आह । ब्रह्मेति । ब्रह्मा स्वां पुत्रीं धृतमृगरूपाम्, इंद्रो गौतमपत्नीम्, चंद्रो देवगुरुभार्याम् । आदिशब्देन सौभरिप्रभृतिग्रहः । अन्येषां तु का वार्तेति ॥ २६ ॥

अपि राज्यं नरकवत्स्वर्णं पश्येच्च लोष्टवत् ॥
स्त्रियं कुणपवत्पश्येद्यस्तादृग्दुर्लभो यतिः ॥ २७ ॥

तर्हि भिक्षुः कीदृशोऽत आह । अपीति । राज्यं नरकवत्पश्येत्स्वर्णं लोष्टवत् समलोष्टाश्मकांचनः, स्त्रियं कुणपवत् शववत् । अतएवोक्तम्— ' अहेरिव गणाद्भीतः सन्मानान्नरकादिव ॥ कुणपादिव च स्त्रीभ्यस्तं देवा ब्राह्मणं विदुः ' इति । तादृशः संन्यासी दुर्लभः ॥ २७ ॥

संभाषार्हा ततो नैषा योषा दोषातिगौरवात् ॥
प्रमोषाय प्रवृत्ता ऽपि यतेर्वासस्य दैवतः ॥ २८ ॥

अतः किं करणीयमियं दोषाकरत्वान्न संभाषणीया यतिभिरित्याह संभाषार्हेति । अतोऽपि न संभाष्या । भिक्षुनिवासभूतस्य पुण्यवशाल्लब्धस्यास्य मठस्य प्रमोषाय नैष्फल्याय प्रवृत्ता, अपि हेतुत्वद्योतकः॥२८॥

न चान्योऽत्र नरः कश्चिद्यो ऽस्याः पृच्छेच्चिकीर्षितम् ॥
गमिष्यतीयं किमितः किंवा स्थास्यति संततम् ॥२९॥

तर्हि मनसा न संभाष्या चेदन्योऽस्याश्चिकीर्षितं पृच्छेदत आह । न चान्य इति । इतः गमिष्यतीयं किंवा संततं निरंतरं स्थास्यति किंवा इति पृच्छेद्यः सोऽत्र नास्तीत्यर्थः ॥ २९ ॥

अथवा वयमेवैतां पृच्छामो ऽस्याश्चिकीर्षितम् ॥
प्रत्यक्प्रवणचित्तानां वराकी किं करिष्यति ॥ ३० ॥

संप्रति ब्रह्मनिष्ठाया माहात्म्यमाह । अथवेति । अस्याश्चिकीर्षितं वयमेतां पृच्छामः । प्रतिदेहमंचति भाति प्रत्यक्तत्पदार्थः देहादिभ्यः सर्वेभ्यः प्रातिलोम्येनांतरंचति प्रकाशते त्वंपदलक्ष्यार्थः तस्मिन्प्रवणं निमग्नं चित्तं येषाम् । वराकी क्षुद्रा किमपि न करिष्यतीत्यर्थः ॥ ३० ॥

विरयास्तावदेवैते प्रगल्भंते ऽबलादयः ॥

प्रत्यगात्मरतियावद्दृढा नोदेति देहिनः ॥ ३१ ॥

ननु विषयाः श्रेयः परिपंथिन इत्याशंक्य एकांते निवसतां ब्रह्मात्मनि-ष्ठानां परमहंसानामकिंचित्करा इत्याह । विषया इति । विषयाः स्रगा-दयः । प्रत्यगात्मरतिपु ब्रह्मात्मनिष्ठायाः पूर्वमेव , ननु पश्चात्प्रबला इत्यर्थः ॥ ३१ ॥

आत्मप्रेम्णि समुत्पन्ने विषयप्रेम नश्यति ॥
यथोपित्प्रेम्णि समुत्पन्ने मातृप्रेमेव कामिनाम् ॥ ३२ ॥

ननु विषयप्रेम्णोऽनादित्वात्कथं निवृत्तिरित्याशंक्य भ्रममूलत्वेन शिथि-लत्वाद्वेदांतप्रमायाश्च परमार्थविषयत्वेन दृढत्वात्तन्निवर्तकत्वमिति सदृ-ष्टांतमाह । आत्मेति । ननु विना ज्ञानं विषयप्रेमनाशो न तन्नाशं विना ज्ञानं नेत्यन्योन्याश्रयः इति चेन्न , पूर्वं वैराग्येण साधान्यतो बाह्य विषयत्यागे सूक्ष्मविषयस्य रसरूपस्य ज्ञानान्निवृत्तेः । तथाचोक्तं भग-वद्गीतायाम् ' रसोऽप्यस्य परं दृष्ट्वा निवर्तते ' इति ॥ ३२ ॥

आत्मतत्त्वविदः का भीर्योपित्पिण्डात्प्रकल्पितात् ॥
बिभेति न हि रज्जुज्ञो रज्जुसर्पात्परीक्षितात् ॥ ३३॥

आत्मविदो दृष्टौ द्वितीयस्य भयहेतोरभावात् भयं नास्तीति सदृष्टांत-माह । आत्मतत्त्वविद इति । अतति सातत्येन गच्छतीति आत्मा, सात-त्ये सति गमनाभावःइति न च वाच्यम् , अत्र गमेः प्रकाशार्थकत्वात् । निरंतरप्रकाश आत्मपदार्थः स एव तत्त्वमनारोपितं रूपं सर्वाधिष्ठानं तद्वे त्तीति आत्मतत्त्ववित्तस्य भयं न योपित्पिंडात् । अत्र हेतुः । प्रकल्पितात् सन् वाऽसन् वा नाधी याघातापत्ते , न द्वितीयः प्रतीत्यनापत्तेरत आह । परीक्षितादिति । उभयत्रेति । अथवा धातूनामनेकार्थत्वाद्युपति प्रीतिं करोति अनया भ्रांतः युज्यते सेव्यते सर्वभ्रांतैरिति योपिन्माया तस्याः पिंड इव पिंडः सर्वोऽपि प्रपंचस्तस्मात् प्रकल्पितान्मिथ्याभू-तान् भ्रांतिज्ञानविपयान् आत्मतत्त्ववित् न बिभेति । यथा रज्जुत-त्त्वज्ञ भ्रांतिविषयात्सर्पान्न बिभेति तथा । ननु ज्ञानं यथार्थं ज्ञानत्वात्

इत्यनुमानेन ज्ञानमात्रस्य यथार्थत्वात्कथं भ्रांतिज्ञानविषयत्वेन प्रपंचस्य मिथ्यात्वमिति चेन्न, नेदं रजतमित्युत्तरकाले बाधदर्शनात् । विसंवादिप्रवृत्तेश्च भ्रमसिद्धिः । प्रवृत्तिस्त्वसंसर्गाद्विहादेवेति न च वक्तव्यम् । सुषुप्ते व्यभिचारात् भ्रमो नास्तीत्युक्तवतः स्वीकारे मतहान्यापत्तेरस्वीकारे निषेधानुपपत्तेरिति । ननु सत्यस्यैव रजतस्य प्रतीतिरस्तु दोषवशात् इति चेन्न, संनिकर्षाभावेन सत्यस्येदंरूपेण प्रत्यक्षानुपपत्तेः। ज्ञानलक्षणास्वीकारेऽनुमानकथोच्छेदापत्तेरत्र रजतं नास्तीति एतद्देशप्रसक्तस्यैव निषेधदर्शनादिति । नन्वंतरस्य रजतस्य लाघवात्स्वीकारे किं बाह्यकल्पनया नूतनरजतकल्पनया चेति चेन्नांतरसत्त्वेऽहं रजतमिति प्रत्ययः स्यान्न त्विदमिति निषेधोऽपि तादृश एव स्यादिति । अथासदेवेदं रजतमभादिति प्रतीतेरसदेव रजतमिति चेन्नासतः प्रतीत्यनुपपत्तेर्बाधानुपपत्तेश्चासदस्तीति सत्त्वासत्त्वयोः समानाधिकरण्यानुपपत्तेरस्ति चेत् व्याघातः नास्ति चेन्निषेधानुपपत्तिरिति प्रसक्तप्रतिषेधेऽन्यत्राप्रसंगे परिशिष्यमाणे संप्रत्ययः परिशेष इति न्यायेनानिर्वचनीयमेव शुक्त्यादौ रजतादिकमुत्पद्यतेऽतः कल्पितसर्वदृष्टांतेन कल्पितात्प्रपंचात्तत्त्वविदो भयं नास्तीति सुष्ठूक्तम् ॥ ३३॥

पुंस्त्रीपंढविभागाख्यं तमस्तावदुदेति च ॥
यावन्नोदेति चिद्भानुश्चित्तोदयमहीभृति ॥ ३४ ॥

नन्वियं स्त्री पुरुषोऽयमिति ज्ञाने कथं न भयजनकत्वं स्त्रीपिंडादेरित्याशंक्य यद्दृष्टौ स्त्रीपुरुषविभागस्तस्यैव भयं, यस्य तु " यत्रत्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत् " इत्यादिश्रुत्युक्तीत्मभावं प्राप्तस्य स्त्रीपुंविभागकल्पकमज्ञानं नास्ति तस्य कथं भयमित्याह । पुंस्त्रीति । पुमांश्च स्त्री च पंढश्च तेषां विभागः पृथक्निश्चयः तमाख्याति प्रत्याययति तत् । किम् । तमोऽज्ञानम् । ताम्यति विपर्ययं गच्छत्यनेन इति व्युत्पत्तेः । इदं तमस्तावदुदेति यावच्चित्तोदयाचले चिद्भानुः वृत्त्यारूढश्चिदात्मनोदेति । ज्ञाने जाते तमो नश्यतीत्यर्थः । आत्मदृष्टेः स्त्रीपुंविभागो नास्त्यत्र प्रमाणं

भागवतम्– " दृष्ट्वाऽनुयांतमृषिमात्मजमप्यनग्नं देव्यो ह्रिया परिदधुर्न सुतस्य चित्रम् ॥ तद्वीक्ष्य पृच्छति मुनौ जगदुस्तवास्ति स्त्रीपुंभिदा न तु सुतस्य विविक्तदृष्टेः"इति । द्वितीयार्द्धे भयं भवतीतिश्रुतेर्द्वितीयस्य भयहेतोरभावात् ज्ञाने च निर्भय इत्यर्थः ॥ ३४ ॥

**वैराग्यतीर्थसचिवे विवेकाश्रमसंज्ञके ॥ मयि व्याघ्र इवाजानां प्रौढिः का वास्ति योषिताम् ॥ ३५ ॥**

अतएवाह । वैराग्येति । वैराग्यसहाये विवेके सति योषितां का प्रौढिः किं सामर्थ्यम् । कस्मिन्सति कासामिवातो दृष्टांतमाह । व्याघ्रे सति अजानां प्रौढिर्महत्त्वं नास्ति स्थितिरेव नास्तीत्यर्थः ॥ ३५ ॥

**इति निश्चित्य संन्यासी दासीमिव पुरस्थिताम् ॥ मन्यमानः स्त्रियं कांतामूचे ऽनूचानसत्तमः ॥ ३६ ॥**

तथापि व्यवहारदृष्टौ भिक्षुस्तां दृष्ट्वा किं चकारेत्यत आह । इतीति । अनूचानसत्तमः गुरोः सकाशात्सांगवेदाध्यायी ' अनूचानः प्रवचने सांगे ऽधीती गुरोस्तु यः 'इत्यमरः । पुरः स्थितां दासीमिव त्रिगुणरज्जुरिवातिदृढाऽप्यविवेकिनां माया तथापि ज्ञानिनः शुश्रूषामेव करोतीति दृष्टांताभिप्रायः । तामविवेकी कमनीयां मन्यमान एव न वास्तवीमूचे उक्तवानित्यर्थः ॥ ३६ ॥

**काऽसि कस्यासि ललने कुत्रत्या किंच वांछसि ॥ नोचिताऽस्मिन्मठे भाति स्थितिस्तव वरानने ॥ ३७ ॥**

यद्वचनमूचे तदेवाह । काऽसीति । नच स्त्रीरूपे निश्चिते पुनः प्रश्नानुपपत्तिरिति वाच्यम्, निर्णयार्थं तस्याः प्रश्नोपपत्तेः । स्थूलदेहरूपा सूक्ष्मरूपा कारणरूपा वा आत्मरूपा वा नाद्यः देहमात्रस्य भूतात्मकत्वात् । न द्वितीयः तस्यापि तन्मात्रत्वात् । न तृतीयस्तस्य सर्वसाधारणत्वात् । इदमेवेयमित्यभावाच्च चतुर्थं तु इष्टापत्तिरेवास्माकमिति न स्वात्मभिन्नस्याज्ञानकार्यत्वात्तद्रूपास्तु तथापि पुत्रस्थितिः पृच्छ्यते ऽत आह । कुत्रत्येति । आश्रयप्रश्नः जडमयपचाश्रया जीवाश्रया ईश्वराश्रया शुद्धाश्रया वा

नाद्यः स्वकार्यस्याश्रयत्वानुपपत्तेः,न द्वितीयः आत्माश्रयाद्यापत्तेरतएव न तृतीयः न चतुर्थः शुद्धत्वानुपपत्तेः । कथं तर्ह्याश्रयत्वविषयत्वभागिनी निर्विभागचितिरेव केवला इति वृद्धवचनमिति वाच्यम्, मूढजनाश्वासनमात्रत्वात् । अतो निरूपणानर्हत्वान्नासीति भावः । अतएव वांच्छापि तु त्वत्कर्तृका गतेत्याह । किं वांच्छसीति । अतएव तरंगवत्प्रतीतिमात्रशरीरे वरानने अस्मिन्मठे तव स्थितिर्योग्या न । वनितादिविषयाकारवृत्तिः संन्यासिनां योग्या न इति भावः ॥ ३७ ॥

यत्र संन्यासिनः शांताः दांता उपरतास्तथा ॥
तितिक्षवः समाधिस्थाः पश्यंत्यात्मानमात्मना ॥ ३८॥

अतएवाह । यत्रेति । संन्यासिनः इहामुत्रफलभोगत्यजनशीलाः आत्मना विवेकेनात्मानं कार्यकारणाधिष्ठानं पश्यंति साक्षात्कुर्वंति । किंभूताः शांताः वशीकृतांतरेंद्रियाः । दांताः वशीकृतबाह्येंद्रियाः । उपरताः इंद्रियनिवर्तकयत्नं विनैव निवृत्तबाह्यांतरेंद्रियाः । तितिक्षवः सुखदुःखादिद्वंद्वसहिष्णवः । समाधिस्थाः निःसंकल्पाः, सदा समाहिता इत्यर्थः ॥३८॥

यत्र देहेंद्रियप्राणमनोबुद्धिभ्य ईक्ष्यते ॥
विविक्तः प्रत्यगात्माऽयं यतिवर्यैर्मुमुक्षुभिः ॥ ३९ ॥

यत्र संन्यासिन इत्यादिनां पंचानां पंचमेनान्वयः । यत्र मठे यतिश्रेष्ठैर्मुक्तिमिच्छद्भिरपरोक्षः "परसाक्षादपरोक्षात्" इतिश्रुतेः । प्रत्यगात्मा देहादिभ्यः पृथगालोक्यते ॥ ३९ ॥

यत्र वेदानुवचनैर्यज्ञैर्दानैस्तपश्रयैः ॥
तथैवानशनैरात्मज्ञानमिच्छंति सूरयः ॥ ४० ॥

यत्र वेदानुवचनैः मंत्रब्राह्मणाध्ययनैः । तद्विहितैर्यज्ञैर्दानैर्द्रव्यत्यागैः । तपश्रयैः कृच्छ्रचांद्रायणादिभिः । अनशनैः कामरहितैः रागद्वेषरहितैंद्रियविषयसेवनरूपैरात्मज्ञानमिच्छंति । आत्मानं विविदिषंतीत्यर्थः । तथाच श्रुतिः– "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषंति ॥ यज्ञेन दानेन तपसा नाशकेन" इति । 'यज्ञो दानं तपश्चैव पावनानि मनीषिणाम्'

इतिस्मृतेश्च । कर्मणामंतःकरणशुद्धिद्वारोपयोगः सूचितः ॥ ४० ॥

इहामुत्रफलोद्विग्ना शक्तितात्पर्यनिर्णयम् ॥
ब्रह्मण्यसंगे कुर्वंति श्रुतीनां यत्र पंडिताः ॥ ४१ ॥

मनसि शुद्धे किं भवतीत्याशंक्य साधनचतुष्टयसंपन्ना असङ्गे ब्रह्मणि वेदांतानां तात्पर्यमवधारयंतीत्याह । इहामुत्रेति । यत्र पंडिताः 'प्रवाहपतिते कार्ये कामसंकल्पवर्जितः ॥ तिष्ठत्याकाशहृदयो यः स पंडित उच्यते । पंडितत्वविषयिणी मतिर्येषां ते पंडिता । ऐहिकामुष्मिकफलभोगविरक्ता असंगे ब्रह्मणि शक्तितात्पर्यं निश्चिन्वंतीत्यर्थः ॥४१॥

पांचजन्याभिधे तस्मिन्मठेऽशठजनाश्रये ॥
विश्वमंदिरयोग्यायास्तव नैवोचिता स्थितिः ॥ ४२ ॥

तस्मिन्नशठजनाश्रये पंडितजनयोग्ये मठे विश्वमंदिरयोग्याया विश्वो जाग्रदवस्थाभिमान्यात्मा तद्योग्यमंदिरं स्थूलशरीरम् । सूक्ष्मकारणयोरप्युपलक्षणम् । तत्र योग्यता तव वृत्ते अत्र परमहंसानां योग्ये स्थाने स्थितिर्नार्हत्यर्थ ॥ ४२ ॥

विवेकाश्रमवाक्यं तदाकर्ण्याकर्णलोचना ॥
वक्तुं प्रत्युत्तराण्येषा क्रमेणैव प्रचक्रमे ॥ ४३ ॥

भिक्षोर्वाक्यं श्रुत्वा सा किं चकार अत आह । विवेकाश्रमेति । तत्पूर्वोक्तं विवेकाश्रमवाक्यं श्रुत्वा विशालनयना क्रमेणैव प्रत्युत्तराणि वक्तुं प्रचक्रमे, चित्तवृत्तिरित्यादित्रयोविंशतिश्लोकैः ॥ ४३ ॥

चित्तवृत्तिरहं भद्र ज्येष्ठाऽस्मि भगिनी तव ॥
त्वं पुनर्मा न जानासि यदुत्पन्नोऽसि संप्रति ॥ ४४ ॥

किमुवाच सेत्यत आह । चित्तवृत्तिरिति । विवेकात्पूर्वं विषयाकारा वृत्तिस्तिष्ठति पुनरनेकजन्मार्जितपुण्यवशाद्विवेको जायते इति सूचयितुमाह । हे भद्र कल्याणरूप अहं तव ज्येष्ठा भगिनी अस्मि । यद्यस्मादिदानीमुत्पन्नो भवसि अतो मा न जानासि ॥ ४४ ॥

ये ये मठास्त्वया त्यक्ता यश्चेदानीमुपाश्रितः ॥
तान् सर्वान्पालयंतीं मां विद्धि वत्साधिदैवताम् ॥४५॥

किं कृत्यं कृतं त्वयाऽत्र स्थितवत्येत्यत आह । ये ये इति । इतिवीप्सयाऽनंतत्वं संमतं मठानाम् । हे वत्स ये ये त्वया त्यक्ताः त्वद्रहिताः यश्च मठः संप्रत्याश्रितः तान्सर्वान्पालयंतीमधिदैवतां मां जानीहि॥४५॥

वांच्छामि विषयान्सर्वान् शब्दादीन् हृदयंगमान् ॥
तदुपस्थापकं तत्तत्कर्मापीच्छामि शोभनम् ॥ ४६ ॥

किंस्वभावा त्वमित आह । वांच्छामीति । अहं सर्वान्मनसः प्रियान् शब्दादीन् विषयानिच्छामि । ननु कारणं विना कार्यं न जायते तस्मात्तेऽपि दुर्लभा इत्यत आह । तदुपस्थापकं तत्प्राप्तिसाधनं शुभकर्मजन्यं पुण्यमदृष्टमपीच्छामि ॥ ४६ ॥

न कर्मत्यागमिच्छामि तत्फलत्यागमेव च ॥
यथेच्छति भवान्मूढः कर्मदित्वमुपागतः ॥ ४७ ॥

ननु' कर्मणा बध्यते जंतुर्विद्ययाऽमृतमश्नुते 'इत्यादिवचनात्कर्मत्याग एव किं न क्रियते त्वयेत्याशंक्य विपर्यस्तैर्विषयासक्तैः कर्म त्यक्तुं न शक्यत इत्याह । न कर्मेति । अहं कर्म न त्यजामि तत्फलमपि न त्यजामि यथा भवान्कर्मदित्वं संन्यासित्वं प्राप्तः । मूढः ससारानभिज्ञ- 'सा निशा पश्यतो मुनेः' इति स्मृते' । एतेन भवदुपस्थितं पूज्यत्वं मूर्खत्वं च समानाधिकृतमेकस्मिन्न वक्तव्य विरुद्धोक्तित्वात् । त्वं पूज्यो मूढश्चेति लोकेऽपि कश्चिन्नहि वक्तीत्यपास्तम्, स्मृत्युक्तज्ञानीपरत्वेन तत्पदस्य व्याख्यातत्वादिति ॥ ४७ ॥

त्यक्त्वा पुत्रैषणां वित्तैषणां लोकैषणामपि ॥
भिक्षा कार्या प्रतिग्रहमितीदं साहसं महत् ॥ ४८ ॥

नन्वेषणात्रयत्यागपूर्वकसंन्यास' श्रुत्या विहित' स कथ त्यक्तुं शक्योऽत आह । त्यक्त्वेति । एषणात्रयं त्यक्त्वा प्रतिग्रह भिक्षा इति अतिसाहसमविचारप्रभावः ॥ ४८ ॥

यस्यादौ संनिवेशोऽध्ययनमपि तथा यस्य गेहेष्वकांतेष्वर्थानुष्ठानमिष्टं विविधवसुचयैर्वेद एष प्रहेयः॥
प्रांते यत्संन्निवेशोऽध्ययनमपि तथा यस्य कांतारदेशेऽर्थानुष्ठानं च भिक्षाश्रुतिचय इह सो हेय इत्यज्ञदौस्थ्यम् ॥ ४९ ॥

यस्यैतेऽष्टचत्वारिंशत्संस्कारा इत्यादिवचनविहिताधानादिसंस्कारसंस्कृतदेहस्य स्वाध्यायोऽध्येतव्य इत्यध्ययनविधिनाऽधीतसांगवेदस्य यज्ञाद्यनुष्ठानरतस्य श्रेयो भवतीत्याह । यस्येति । यस्य वेदस्यादौ गर्भे एवं सनिवेशो यद्विहितसंस्कारस्थापनम् । अध्ययनमपि तथा अष्टवर्षं ब्राह्मणमुपनयीतेति अध्यापयीतेत्यध्यापनविधिनाऽध्ययनं प्राप्तं उपनयनानंतरमेव विहितम् । यस्य वेदस्य कमनीयेषु गृहेषु अर्थस्य यागादेर्विविधद्रव्यैरनुष्ठानं विहितं ' कुर्वन्नेवेह कर्माणि जिजीविषेच्छतꣳसमाः ' इतिश्रुतेर्जीवितावधिकर्म विहितं यथा सा हेया । प्रांते प्रकर्षेणांतः मरणकालः तस्मिन् यत्सन्निवेशः यस्य वेदस्य संनिवेशः तद्विहितसंन्यास अध्ययनमपि तथांत एव । यस्य वेदस्य कांतारेऽतिदुर्गमे वने जनशून्ये देशेऽर्थानुष्ठानं विहितम्, ' अरतिर्जनसंसदि ' इतिस्मृतेः । भिक्षाश्रुतिचयः सप्तागारानसंकृप्तानित्यादिविहितः भिक्षाचयो येन स वेदः न हेयो न त्याज्य इत्यज्ञदौस्थ्यं मूढजनहठमात्रमेव ॥ ४९ ॥

ज्योतिष्टोमाद्भवेत्स्वर्ग इतीयं गुडजिह्विका ॥
नग्नो मुंडश्चरेद्भिक्षामिति तत्त्वार्थदं वचः ॥ ५० ॥

विहितसंन्यासश्रुतिमनुवादपूर्वकमाक्षिपति । ज्योतिष्टोमादिति । यथा रोगनिवृत्त्यर्थं ग्राहितव्ये औषधे प्रथम गुडादिकं दीयते तथैव संसारानर्थव्रातनिवर्तके वेदांते प्रवर्तयितुं गुडजिह्वान्यायः । नग्नः दिगंबरः मुंडः संन्यासी भिक्षां चरेदिति वचः तत्त्वार्थदं परमार्थव्यंजकम् ॥५०॥

इत्नीमां कल्पनां प्रवंजन्मन्यकृतमतिश्रयाः ॥
निर्मायया रचयंतश्चा रंका नाथविमोहिनः ॥ ५१ ॥

इतीति । इमां वेदविहितां कल्पनां उत्प्रेक्षां पूर्वजन्मनि अकृतपुण्या अतएव निर्भाग्या भाग्यरहिता अज्ञाः शास्त्रबोधरहिता रंकाश्च अनाथाश्च दरिद्रा ईश्वररहिताः कुर्वंति ॥ ५१ ॥

अहो सौभाग्यमेतेषां मुंडानां भिक्षया महत् ॥
यदेतद्वचनाद्भूपा हित्वा राज्यं श्रिता वनम् ॥ ५२ ॥

अर्थांस्तुतिद्वारा निंदामेव करोति । अहो इति । एषां संन्यासिनां भिक्षया महत् पूज्यं दैवं अनेकेषु जन्मसु ब्रह्मचर्याद्याश्रमैरनुष्ठितं निष्कामकर्मजन्यं यदेतेषां भिक्षूणामुपदेशाद्राजानः युधिष्ठिरप्रभृतयः, वनं वन्यते सेव्यते विरक्तैः परमहंसैरिति वनम् । अथवा वन्यते सम्यग्भज्यते ऽनुभूयते परब्रह्मवनं नारदोपदेशाद्दक्षपुत्राः सनकाद्युपदेशात्पृथुप्रभृतयः प्राप्ताः । राज्यत्यागे राजसेविनो बहवः पुरुषा दुःखिता इति तद्भावः ॥ ५२ ॥

भिक्षाचर्यं श्रुतिप्रोक्तमित्यवश्यं यदीष्यते ॥
श्येनसंदंशमुख्यैः किमपराद्धमितीर्यताम् ॥ ५३ ॥

ननु संन्यासश्रुतिर्निरवकाशेत्यत आह । भिक्षेति । यदिश्रुतिप्रोक्त इतिहेतोरवश्यमीष्टपारिव्राज्यं श्येनाः कपोतादिभक्ष्याः पक्षिणः सम्यदंशंति पुत्तिकाप्रभृतयः । आदिनाऽगदोषादिनिमित्तेन क्षीरहिताः गृह्यंते । किमपराद्धमिति कथ्यतां, भावे निष्ठा तत्र सा सावकाशेति भावः ॥५३॥

त्यक्त्वा सर्वाणि कर्माणि श्रौतस्मार्तानि सर्वथा ॥
परमः क्रियते धर्मो भिक्षाचर्यं मुमुक्षुभिः ॥ ५४ ॥

अनुवादपूर्वकं संन्यासं क्षिपति द्वाभ्याम् । त्यक्त्वेति । श्रौतानि अग्निष्टोमादीनि, स्मार्तानि, वैश्वदेवादीनि, सर्वाणि, कर्माणि, विहाय, परमः सर्वकर्मफलभूतः धर्मः संन्यासः । न च कर्माभावस्य धर्मत्वं कथमिति वाच्यम्, वेदप्रतिपाद्यः प्रयोजनवदर्थो धर्म इतिलक्षणस्य तत्रापि सद्भावात् । त्यागसंकल्परूपस्य तत्त्वेऽपि बाधकाभावात् मोक्षमिच्छद्भिः संपाद्यते ॥ ५४ ॥

भिक्षां च कुर्वतामेषां तदलाभे बुभुक्षया ॥
मरणं वा भवेन्नित्यं करणं वाऽपि किंचन ॥ ५५ ॥

एषां भिक्षूणां क्षुन्निवृत्तीच्छया भिक्षां कुर्वतामभावाभे मरणं किंचिन्नित्यं करणीयं भवेत् ॥ ५५ ॥

वित्तैषणादिव्युत्थानप्रतियोग्यात्मचिंतनम् ॥
विहायाभिवदन्वेदो भिक्षाचर्यं न लज्जते ॥ ५६ ॥

जायमानो ब्राह्मणस्त्रिभिर्ऋणैर्ऋणवानितिश्रुतिं ' ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत् ॥ अनपाकृत्य मोक्षं तु सेवमानो व्रजत्यधः ' इति स्मृतिं चाऽऽश्रित्य ब्रूते । वित्तैषणेति । वित्तैषणा पुत्रैषणा भाव-प्रतियोगिभ्यः एषणास्तद्वान् ऋणत्रयवानात्मा तच्चिंतनं ऋणत्रयापाकरणं च विहाय संन्यासं विदधत् वेदो न लज्जते । अपितु लज्जत एवेत्यर्थः ॥ ५६ ॥

वदंति वृद्धाः शतशो यथा यक्षस्तथा बलिः ॥
निर्भाग्यानां श्रुतिः का वा भिक्षातोऽन्यां क्रियां वदेत् ॥ ५७ ॥

या श्रुतिर्भिक्षां विदधाति सा मंदभाग्यानुद्दिश्यैवेत्याह । यक्षानुरूपो बलिरिति न्यायमनेकशो वृद्धा वदंति श्रुतिः निर्भाग्यानां भाग्यात्कर्मफलान्निर्गतास्तेषां भिक्षातोन्यां कां क्रियां वदेदपितु भिक्षामेव वदेदित्यर्थः ॥ ५७ ॥

आत्मा द्रष्टव्य इत्याद्या यद्वेदांताः प्रचक्षते ॥
तदस्मदादिभिः किंवा नात्मप्रत्यक्ष ईक्ष्यते ॥ ५८ ॥

ननु यदि परमात्मा सर्वैर्दृश्येत तदा तद्दर्शनविधानं व्यर्थं स्यादित्यत आह । आत्मेति । यद्वेदांता वदंति स आत्मा ऽस्माभिः किं प्रत्यक्षं न दृश्यते अपितु दृश्यते इत्यर्थः ॥ ५८ ॥

हस्तपादाद्यवयवसंनिवेशविशेषयुक् ॥
प्रत्यक्षमिक्षते ह्यात्मा विधिस्तत्र निरर्थकः ॥ ५९ ॥

कीदृशस्तर्हीत्यत आह । हस्तेति । हस्तपादाद्यवयवानां सन्निवेशविशेषः रचनाविशेषस्तं युनक्ति तेन वा युज्यते स प्रत्यक्ष एवमत्र विधिर्निष्फल एवेत्यर्थः ॥ ५९ ॥

अथौपनिषदः कश्चिद्देहादन्योऽस्ति सोऽपि च ॥
सर्वेषां प्रिय एवात्मा तदर्थं च प्रियं जगत् ॥ ६० ॥

नन्वेतन्नाशस्य प्रत्यक्षसिद्धत्वात्कृतनाशाकृताभ्यागमतर्कविरोधाच्च कथमयमात्माऽत आह । अथौपनिषद इति । अथेति पक्षांतरद्योतकः । उपनिषदा श्रूयते औपनिषदः देहविलक्षणः आत्मा सर्वेषां प्रियः सर्वं जगत्तदर्थं प्रियं तच्छेषभूतम् ॥ ६० ॥

तत्किं वित्तसुतादीनां प्रियाणामात्मनः परम् ॥
त्यागोऽयमुच्यते कस्माद्देहश्चायं निपीड्यते ॥ ६१ ॥

तत्तस्मादात्मनः परं प्रियाणां वित्तादीनामयं त्यागः किमुच्यते अयं भोगः यथेष्टदेहत्यागेन किं निपीड्यते ॥ ६१ ॥

य औपनिषदः कश्चिद्देहादन्यः प्रियः परः ॥
आत्माऽस्ति तं तर्पयतु विषयैरिंद्रियार्पितैः ॥ ६२ ॥

ननु वित्तादित्यागं विना कथं वेदांतप्रतिपाद्यात्मसुखप्राप्तिरित्यत आह । य औपनिषद इति । यदि कश्चिद्देहादन्यः परः प्रिय आत्माऽस्ति तमिंद्रियप्रदर्शितैर्विषयैस्तर्पयत्वित्यर्थः ॥ ६२ ॥

हंतात्मा क्लिश्यते किंवा स्नानमृच्छौचमुंडनैः ॥
अधःशय्यारण्यवासब्रह्मचर्यशमादिभिः ॥ ६३ ॥

विपर्यस्तानां सांप्रतमाचारं निषेधति । हंतात्मेति । हंतेति कष्टे । स्नानादिभिरधःशय्यादिभिर्देहः किं क्लिश्यते ॥ ६३ ॥

शृण्वंतु मधुरान् शब्दान्वीणानारीमुखोद्गतान् ॥
स्पृशंतु मृदुलाः शय्यास्तथा सारंगलोचनाः ॥ ६४ ॥

तर्हि किं कर्तव्यमत आह । शृण्वंत्विति । वीणा च नारीमुखं च ता-

भ्यामुद्गतास्तान् मधुरान् श्रवणमात्रेण चित्ताकर्षकान् । मृदुलाः कोमलाः शय्याः तथा सारंगलोचनाः मृगाक्षीः स्पृशंतु ॥ ६४ ॥

पश्यंतु कनकाभानि नारीरूपाणि सर्वदा ॥
भक्षयंतु च लेह्यादिविधान्यन्नान्यहर्निशम् ॥६५॥

स्वर्णवर्णानि नारीणां रूपाणि सर्वकाले पश्यंतु । लेह्यानि मध्वादीनि, चोष्याणि आम्रादिफलानि, भक्ष्याणि अपूपादीनि, भोज्यानि पायसादीनि अन्नानि आस्वादयंतु सततम् ॥ ६५ ॥

भाले कुरुध्वं कस्तूरीं मौलौ कुसुममालिकाः ॥
चिंतयंतु सदा सौख्यं मम भूयो भवेदिति ॥ ६६ ॥

भाले मस्तके कस्तूर्यादिलेपनं कुरुध्वम् । मुकुटे कुसुममालाः धारयंतु । ममेदशं सुखसाधनं पुनर्भवेदिति ॥ ६६ ॥

इत्यादि बहु जल्पंतीं चित्तवृत्तिं किलाबलाम् ॥
विवेकाश्रम आहैतां हसन्किंचिन्निजाग्रजाम् ॥ ६७॥

इत्यादि बहु वचनं वदतां चित्तवृत्तिं किल अबलात्वेन मतां निजाग्रजां निजात् विवेकादग्रे जाता किंचित् हसन् विवेकाश्रमः फलसमाप्तिपर्यंत आह । एतां मत्यक्षाम् ॥ ६७ ॥

चित्तवृत्ते विपर्यस्ता सतीं त्वं भाषसे बहु ॥
तदस्तु नाम किं वा नः क्षीयते बहुभाषितैः ॥ ६८ ॥

हे चित्तवृत्ते विपर्ययं प्राप्ता सती बहु कुत्सितं किं भाषसे । नोऽस्माकं चिदात्मनां धूलिभिराकाशस्येव किं क्षीयते बहुभाषितैः, अपितु न किमपीत्यर्थः ॥ ६८ ॥

अविवेकतमोजातं निराकर्तुं न हि क्षमः ॥
सूर्यकोटिप्रभापुंजः का कथाऽन्यान्यतेजसाम् ॥६९॥

इदमेव सदृष्टांतमाह । सूर्यकोटिप्रभायाः पुंजः हि यस्मादविवेकांधकारसमूहं दूरीकर्तुं न समर्थः . [illegible] पार्थत्वात् अन्या-

ज्ञानतमोनिवर्तने अन्यतेजसामप्यादीनां तु का वार्ता । निवर्तने वि-
रोधाभावादिति भावः ॥ ६९ ॥

अविद्यायां निमग्नानां सैवातिमधुरायते ॥
विट्क्रुमिः किं विजानाति माधुर्यं शर्कराश्रयम् ॥७०॥

नन्वविद्याया निवृत्तिः सर्वैर्मुमुक्षुभिः प्राप्यते इत्यत आह । अविद्या-
यामिति । सैवाविद्या मधुरायते अत्र दृष्टांतमाह । विट्क्रुमिः पुरीषकीटः
शर्कराश्रयं माधुर्यं किं विजानाति । स्त्रीपुत्रादिविषयासक्तः क्रुमी विट्
इव परमहंसैरनुभूयमानं निरतिशयानंदं कथं विजानीयादित्यर्थः ।
अतएव यावज्जीवश्रुतिरविरक्तविषया तथैव ते अपि श्रुतिस्मृति-
चोद्ये इत्यर्थः ॥ ७० ॥

लोकालोकात्परं भागमाश्रिता ये हि जंतवः ॥
ते किं जानंति रूपाणि सुवर्णादिगतान्यपि ॥ ७१ ॥

अत्रैव दृष्टांतांतरमाह । लोकालोकेति ये जंतवः लोकालोकाचलात्परं
भागमाश्रिताः तेऽत्र सुवर्णादिरूपाणि किं जानंति । अत्यंतगाढतमोनि-
मग्नानां यथा रूपज्ञानं नास्ति तथा अविद्यातमोग्रस्तानामनंतपरिपूर्ण-
ज्ञान न भवत्यत्र दृष्टांततात्पर्यमिति ॥ ७१ ॥

अविवेकी विजानाति तत्त्वार्थं यदि कश्चन ॥
बधिरोऽपि विजानीयात्तंत्रीकंठोत्थितान्स्वरान् ॥७२॥

अत्रैव दृष्टांतांतरमाह । अविवेकीति । अविवेकी मूढतमः कश्चन परमा-
र्थरूप विजानीयात् । तदा बधिरोऽपि तंत्री च वीणा कंठश्च ताभ्यामु-
त्थिता प्रादुर्भूता स्वराः 'स्वतो रंजयति श्रोतुश्चित्तं स स्वर उच्यते'
इतिलक्षणलक्षिताः शब्दविशेषास्तान् श्रुत्वाऽवधारयेदित्यर्थः ॥ ७२ ॥

तत्त्वमाधुर्यविज्ञः स्यात्ययविद्यैकसंश्रयः ॥
मातृदुग्धरसाभिज्ञस्तदा स्यात्कमठार्भकः ॥ ७३ ॥

अत्रैव पुनराह । तत्त्वेति । यदि तमोग्रस्तः तत्त्व परमार्थं प्रत्यगभिन्नं परं

ब्रह्म तस्य माधुर्यं निरतिशयानंदो विरक्तैरनुभूयमानः तद्भिन्नः स्यात्तदा क्रमठः कच्छपः तस्य बालोऽपि मातृदुग्धरसं जानीयादिति ॥ ७३ ॥

**अज्ञानाभिनिविष्टानां तत्त्वगंधोऽपि दुर्मिलः ॥**
**कर्पूरसौरभाभिज्ञा भिल्लाः किं लशुनप्रियाः ॥ ७४ ॥**

दूरमेते विपरीते विषूचीविद्या या चाविद्येति श्रुतितात्पर्यं पूर्वमुक्तमपि विवेकार्थमविद्यात्यागार्थं च मूढानां विवेकिनां च महद्भेदं दर्शयति । अज्ञानेति । अज्ञानकार्येषु देहादिष्वहंममाभिमानवतां तत्त्वस्य परमार्थस्य लेशोऽपि दुर्घटः । तथाचोक्तं वृद्धैः—'अहंममेति संविदन् दुःखतो विमुच्यते ॥ असंविदन्विमुच्येत यदीप्सितं तदाचर' इति । तत्र दृष्टांतः । लशुनप्रिया भिल्लाः कैवर्तजातिविशेषाः पर्वतादिवासिनः किं कर्पूरसुगंधं जानंति, नेत्यर्थः ॥ ७४ ॥

**त्रिभेदतापतप्तानां तत्त्वच्छायासुखं कुतः ॥**
**शीतस्पर्शस्तुरंगाणां पतंगांगयुजां कुतः ॥ ७५ ॥**

यत्पूर्णानंदरूपं विरक्तैरनुभूयते तत्स्त्रीपुत्रादिषु रममाणानां नास्तीति सदृष्टांतमाह । त्रिभेदेति । त्रयो अध्यात्माधिभूताधिदैवरूपा भेदा यस्य स त्रिभेदः स एव तापः तेन तप्ताः । तत्त्वस्य ब्रह्मानंदस्य छायासुखं ब्रह्माकारवृत्त्यानुभूयमानं नास्ति तेषामित्यर्थः । पतंगः सूर्यः तदंगे स्यंदनभूते रथे युंजंति तेषामश्वानां शीतस्पर्शो नास्तीत्यर्थः ॥ ७५ ॥

**चित्तवृत्ते ततो ऽभद्रे ऽभिनिवेशं परित्यज ॥**
**विषयेषु विधेह्यस्मद्वचनेष्ववधानताम् ॥ ७६ ॥**

पूर्वोक्ता दृष्टांता यदर्थमुक्तास्तदिदानीं प्रकृते योजयति । चित्तवृत्ते इति । हे चित्तवृत्ते अभद्रे कल्याणविमुखे 'स्वःश्रेयसं शिवं भद्रं कल्याणं मंगलं शुभम्' इमरः । विषयरतानां कल्याणं कदापि नास्तीत्यर्थः । विषयासक्तं त्यज, अस्मद्वचनेषु वेदांतवाक्येषु सावधानतां कुरु । अन्यथा दुःखानिवृत्तेरित्यर्थः ॥ ७६ ॥

चित्तवृत्ते समाश्रित्य प्रियचित्सुखमीश्वरम् ॥
दुःखांतिविषयासंगं वांच्छती किं न लज्जसे ॥ ७७ ॥

उत्तमपुरुषसंगिनं दृष्ट्वा पुनस्तस्यासंगमालोच्य लोकेऽपि वदंति ' त्वं न लज्जसे' इतिन्यायमात्रं निर्दिशति। चित्तवृत्ते इति। हे चित्तवृत्ते " सत्यं ज्ञानमनंतं ब्रह्म, आनंदो ब्रह्म' इत्यादिशास्त्रप्रसिद्धं नित्यनिरतिशयं चिदानंदरूपं सर्वैरभिलषणीयं परं ब्रह्म मिलित्वा 'मुक्तिमिच्छसि चेत्तात विषयान्विषवत्त्यजेत्' इत्यादिशास्त्रनिषिद्धे दुःखपर्यवसिते विषयासंगे इच्छां कुर्वती न लज्जसे। निर्लज्जाऽसीति भावः ॥ ७७ ॥

चित्तवृत्ते मा वृणीष्व विषयान्व्यभिचारिणः ॥
सति प्रियेऽनुरक्तेऽस्मिन्नात्मन्यव्यभिचारिणि ॥ ७८ ॥

व्यभिचारित्वादपि विषयास्त्यक्तव्या इत्यत आह। चित्तवृत्ते इति। हे चित्तवृत्ते विषयास्त्यक्तव्याः यद्धेतुगर्भं विशेषणं व्यभिचारित्वात् मिथ्यात्वाच्च। रज्जुकल्पितसर्पदंडधारादिवदिति यन्नैवं तन्नैवं, यथात्मा स न त्यक्तव्यः सद्रूपत्वात्प्रियत्वादनुगतत्वादव्यभिचारित्वाद्रज्जुवदित्याह। सतीति। सद्रूपे नित्यप्रिये सर्वमेमास्पदेऽनुरक्ते सर्वानुस्यूते सदैकरसे आत्मनि विद्यमाने सति ' गृहे चेन्मधु विंदेत किमर्थं पर्वतं व्रजे ॥ दिष्टस्यार्थस्य संसिद्धौ को विद्वान् यत्नमाचरेत्' इतिन्यायेन गृह एव नित्यसुखलब्धे विनाशिसुखे मा यापा इत्यर्थः ॥ ७८ ॥

आत्मानंदांबुधिस्थायाश्चित्तवृत्ते तवापरैः ॥
किं सुखैर्दुग्धपाथोधिमीनस्येव पयोंतरैः ॥ ७९ ॥

तदेव सदृष्टांतमाह। आत्मेति। हे चित्तवृत्ते निरतिशयं परिपूर्णचिदानंदसमुद्रनिमग्नायास्तव विषयसुखैः परिछिन्नैर्दुःखदैः किं भ्रांतिमात्रसिद्धैर्न तृप्तिरस्ति। मृगतृष्णाजलेन इव इत्यर्थः। तत्र दृष्टांतः। दुग्धसमुद्रमीनस्य क्षारसमुद्रजलैर्न तृप्तिरित्यर्थः ॥ ७९ ॥

आत्मन्यानंदवार्धौ त्वमुन्मज्जसि निमज्जसि ॥
चित्तवृत्ते विषयतः किमन्यदभिवांच्छसि ॥ ८० ॥

इष्टसाधने हि सर्वेषां प्रवृत्तिर्जायते तथा चेष्टं जगति सुखमेव । तदपि द्विविधं नित्यमनित्यं चार्थेंद्रियजन्यं न तृष्णानिवर्तकम् , तथाचोक्तम्-'न जातु कामः कामानामुपभोगेन शाम्यति ॥ हविषा कृष्णवर्त्मेव भूय एवाभिवर्द्धते' इतिसप्तद्वीपाधिपतयो नृपा वैन्यगदादयः 'अर्थैः कामैर्गता नांतं तृष्णाया इति शुश्रुम' इति । ननु 'विनाश्रयं न तिष्ठंति पंडिता वनिता लता' इति न्यायेनाहं निरालंबना क स्यास्यामीत्याशंक्य सर्वानंदानामधिष्ठानभूते पूर्णानंदे नित्ये समुद्रवदगाधेऽपरिच्छिन्ने निमग्ना भवेत्याह । आत्मनीति । नित्यनिरंतरप्रकाशे सुखसमुद्रे उन्मज्जनमुत्थानकाले जगरमतीतिरव्युत्थाने चाप्रतीतिर्निमज्जनं स्वभावतोऽपि यथा घटः उत्पद्यमान आकाशपूर्ण एवोत्पद्यते तथा वृत्तय उत्पद्यमानाश्चिदानंदपूर्णा एवोत्पद्यंते सर्वस्यैव प्रपंचस्य हे चित्तवृत्ते तवाधिष्ठान सत्तातिरिक्तसत्ताशून्यत्वात् । अत आनंदसमुद्रे उन्मज्जननिमज्जनेस्त्व एव विषयतः विषयान्स्वीकृत्य किमन्यत्र किमपीत्यर्थः । विषयरूपाति भांति विषयन्मात्मका एवेति भावः । अभिवांच्छसि इच्छां करोषि यतो विषयेच्छा न सुखदा । उक्तंच 'यावती यावती जंतोरिच्छोदेति यथायथा ॥ तावती तावती दुःखबीजमुष्टिः प्ररोहति' इति । इच्छा न कर्तव्येत्यर्थः ॥ ८० ॥

आत्मैव सुखरूपस्ते चित्तवृत्ते प्रियं श्रिता ॥
विषया न सुखात्मानः किं त्विपत्सुखहेतवः॥ ८१ ॥

नन्वेवं तर्हि विषयाः कि न सुखसाधनं नेत्याह । आत्मैवेति । एवोन्यपयोगव्यवच्छेदकः न विषया । पूर्वनिर्वचनद्वयादित्यर्थ । क तर्हि सोऽत आह । हे चित्तवृत्ते प्रियं पूर्णानंदं श्रिता यदप्यस्ता विषया न सुखरूपाः सुखार्थिभिस्तर्हि किं वांछ्यंते सुखाभासे सुखत्रांत्यैव परिच्छिन्नसुखहेतुत्वादित्याह । किंत्विति ॥ ८१ ॥

चित्तवृत्ते परित्यज्य सुखं किंचित्सुखांतरे ॥
यदीच्छते तं अपात्मसम्यं विषयजं ... ॥ ८२ ॥

नन्वनादिकालादारभ्यास्मिन्सुखे निमग्नाऽस्मि कथं त्यक्तुं शक्यमिदमित्याशंक्य तत्त्यागं विना तदपि दुर्लभमित्याह । चित्तेवृत्ते इति । हे चित्तवृत्ते किंचित्सुखं परिछिन्नं विहाय सुखांतरे नित्यानंदे तव यदीच्छा तं पूर्णानंदं श्रय । आत्मैव सुखं आत्मसुखस्तन्निष्ठा भवेत्यर्थः । ननु विषयान्स्वीकृत्यैव तन्निष्ठा भविष्यामीति चेन्न तत्त्यागं विना तन्निष्ठाया असंभवादित्याह । विषयजं सुखं जहीत्यर्थः ॥ ८२ ॥

चित्तवृत्तेऽविनाश्येव सुखं त्वं यदि वांछसि ॥
तर्हि देहोपाधिनाशादनाश्यात्मसुखं श्रय ॥ ८३ ॥

ननु देहादिषु विषयभोगसाधनेषु सत्सु नित्यसुखं प्राप्तुं शक्यमित्याशंक्य तदध्यासमूलनाशादात्मसुखं प्राप्तुं शक्यमित्याह । चित्तवृत्ते इति । हे चित्तवृत्ते त्वं चेन्नित्यमेवानंदमिच्छसि तदा देहाः स्थूलसूक्ष्महेतुरूपा उपाधयः परिछेदकाः । आकाशस्य घट इव तेषां नाशः ब्रह्मात्मसाक्षात्कारेण बाधः मुद्गरेण नभःपरिछेदकस्य घटस्येव तस्मात् । अविनाशि त्रिकालाबाध्यमात्मसुखं परिपूर्णानंदं श्रय तन्निष्ठा भवेत्यर्थः । आत्मसाक्षात्कारेण विषयमात्रेच्छानिवृत्तौ यदात्मसुखं तन्निरुपममेवात एवोक्तं वृद्धैः–' यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम् ॥ तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम् ' इति । अत आत्मसुख एव प्रीतिः कार्येत्यर्थः ॥ ८३ ॥

आंतरं सुखमात्मानमवाप्यांतःस्थया त्वया ॥
चित्तवृत्ते बहिर्निष्ठाश्चिंत्यंते विषयाः कुतः ॥ ८४ ॥

केन प्रकारेणाहं नित्यतत्त्वमनुभवेयं स प्रकारो वक्तव्य इत्यत आह । आंतरमिति । अंतःस्थया देहादिभ्यः सर्वेभ्यो योऽभ्यंतरः प्रत्यगात्मा नेतिनेतीत्यादिना सर्वस्य प्रपंचस्यांतो निषेधस्तन्निष्ठया वा त्वया आंतरं सदा प्राप्तं ब्रह्मानंदमवाप्य हे चित्तवृत्ते बाह्या विषयाः कुतश्चिंत्यंते । पुनः तच्चिंता न भवतीत्यर्थः ॥ ८४ ॥

सुखात्मा तत्प्रकाशात्मा चिदात्मा ते करे स्थितः ॥
का चित्तवृत्ते वांछा ते जडे विषयजे सुखे ॥ ८५ ॥

यथा कश्चिद्धस्तस्थितं मध्वादि द्रव्यं विहाय करंलढितन्यायविषयतां मा यातीत्याह । सुखात्मा इति । हे चित्तवृत्ते 'सुखं सर्वः समीहते' इति न्यायेन सुखरूपः आत्मा ज्ञात एवानंदोऽत आह । तत्प्रकाशात्मा आनंदप्रकाशस्वरूपः। वाद्यः किमत आह । चिदात्मा ते करे स्थित इव नित्यमाप्त एव । यथा करे स्थिते वस्तुनि आमलकादिफले संशयादि नास्ति तथा तत्स्वरूपभूते ब्रह्मात्मनि न कश्चित्संदिग्धेन विपर्येति नाभावं निश्चिनोति इति । अतो जडे वाह्यविषयाधीनेऽनित्ये सुखे वांच्छा न कर्तव्येत्यर्थः ॥ ८५ ॥

यत्प्रसादाद्विषयजं सुखं ते प्रतिभासते ॥
तदात्मसुखमुत्सृज्य चित्तवृत्ते किमीहसे ॥ ८६ ॥

"एतस्यैवानंदस्यान्यानि भूतानि मात्रामुपजीवंति" इति श्रुतेराह । यदिति । यस्य परिपूर्णानंदस्य प्रसादात् प्रतिबिंबत्वात् विषयजन्यं सुखं तव भासते । भ्रांत्या यथा शुष्कास्थिनि श्वनः स्वदंतविदरीतपन्नमपि रक्तं भासते । स्वदधिष्ठानभूतचिदात्मसुखं त्यक्त्वा किं वृथा चेष्टसे । वृथा चेष्टा बालानां पशुबुद्धीनामेव नतु विवेकवतामित्यर्थः ॥ ८६ ॥

पशुर्गुडं विहायोच्चैर्यथा यवसमिच्छति ॥
तथाऽऽत्मसुखमुत्सृज्य विषयान्किं नु वांच्छसि ॥ ८७ ॥

यः पदार्थेष्ववृप्तिं दृष्ट्वा पुनस्तत्रैव रमति सः 'दृष्ट्वाप्यत्यंतवैरस्यं यः पदार्थेषु दुर्मतिः ॥ बध्नाति भावनां भूयो नरो नासौ स गर्दभः' इतिश्लोकविषयतां यातीत्याह । पशुरिति । यथा पशुर्गुडादिकं त्यक्त्वा शुष्कतृणमेवेच्छति तथा विषयेषु तृप्तिमदृष्ट्वापि पुनस्तत्रैवासक्तिं करोति स पशुरेवेत्यर्थः । सत्त्वाकृतिमात्रेण नरः पूर्णानंदं त्यक्त्वा विषयान् किं नु वांच्छसि । किमर्थं विषयान् वांच्छसीत्यर्थः ॥ ८७ ॥

उष्ट्रः कंटकवृक्षार्थी त्यजत्याम्रसुपल्लवान् ॥
चित्तवृत्ते जहासीत्थमात्मानं विषयार्थिनी ॥ ८८ ॥

विषयरसजिहासामकुर्वंत उष्ट्रतुल्यतामप्याह । उष्ट्र इति । उष्ट्रो लंबग्रीवो दीर्घपृष्ठपशुः आम्रपल्लवान् त्यजति कंटकवृक्षानिच्छति । हे चित्तवृत्ते ब्रह्मानंदं त्यक्त्वा विषयेच्छां कुर्वती त्वमपि मूर्खेत्यर्थः ॥ ८८ ॥

हंत भ्रमसि किं नाम शुनीव विषयार्थिनी ॥
आत्मानंदं समासाद्य चित्तवृत्ते स्थिरा भव ॥ ८९ ॥

भोगेच्छामत्यक्तवतीं शुनः साहश्यमप्याह । हंतेति । हंतेति कष्टेऽनुकंपायां वा । यथौदनार्थिनी शुनी सरमा पष्ट्यादिप्रहारं प्राप्यापि प्रतिगृहं भ्रमति तथा विषयेषु पराधीनतादिदोषं दृष्ट्वाऽपि पुनस्तदर्थं यतते । स तत्तुल्य इत्यर्थः । तस्यास्तु ब्रह्मानंदाविर्भावयोग्यताऽपि नास्ति "पुरुषे त्वाविस्तरामात्मा" इत्यादि श्रुतेः, सा तु क्षुन्निवृत्त्यर्थिनी । हे चित्तवृत्ते त्वया तु परमेश्वराविर्भावयोग्यशरीरं लब्ध्वा पूर्णानंदनिमग्नया भवितव्यमिति । अन्यथा जन्मपरंपरया दुःखभोक्त्री भविष्यसीत्यर्थः ॥ ८९ ॥

गुणान् हित्वा परस्योच्चैः खलो दोषान्यथेक्षते ॥
हित्वाऽऽत्मानं चित्तवृत्ते विषयानेवमीक्षसे ॥ ९० ॥

विषयजिहासामकुर्वती त्वमतिनिचखलतुल्या पूर्वमुक्ताऽधुना तु त्वय्येरेक्यमावनादतिनिचतरखलतुल्यता तवेत्याह । गुणानिति । यथा खलो दुर्जनः परस्य विद्यमानगुणान् त्यक्त्वा उच्चैरुत्कृष्टस्यापि दोषानविद्यमानानपि पश्यति तथा हे चित्तवृत्ते स्वात्मानं त्यक्त्वा विषयान्पश्यसि । वस्तुतोऽविद्यमानानपि । भ्रांताऽसीति भावः ॥ ९० ॥

बहुना किमिहोक्तेन चित्तवृत्ते वदामि ते ॥
आत्मानंदेन संपूर्णा स्थिरा भव कृपां कुरु ॥ ९१ ॥

भक्तं यावज्जाग्रेदितिन्यायेन सिद्धांतरहस्यमुपदिशति । बहुनेति अर्थतत्त्वो विस्तरेण किं भविष्यति । हे चित्तवृत्ते परिपूर्णानंद

सदा त्वां प्राप्तमपि माययाऽप्राप्तमिव तां ज्ञानेन निवर्त्य त्वं चिरकालं भ्रमंती विषयेभ्यः तृप्तिं न प्राप्नुवंती अधुना त्वदुपदेशेन लज्जां प्राप्नुवतो ममोपरि दयां कृत्वा विषयाशया खंडिता परिपूर्णानंदेनैव पूर्णांगा भविष्यसि, न त्वन्यथा सहस्रप्रकारैरपि, अतस्तत्रैव स्थिरा भव॥९१॥

**न चैकांतेन विषयाश्चित्तवृत्ते सुखप्रदाः ॥**
**उपात्ता अनुपात्ता वा प्रायशो दुःखदा इमे ॥ ९२ ॥**

ननु विषयाः सेव्याः सुखदत्वात् आत्मवदित्याशंक्य विषया असेव्या दुःखदत्वात् यन्नैवं तन्नैवं यथाऽऽत्मेत्याशयेन तेषां दुःखदत्वं प्रतिपादयति । न चैकांतेति । हे चित्तवृत्ते विषया एकांतेनात्मवदव्यभिचारत्वेन न सुखप्रदाः, आद्यंतवत्त्वाद्व्यभिचारिण एव । ननु प्राप्ता सुखदा एव, नेत्याह । उपात्ता इष्टसाधनत्वेन गृहीताः अपि रज्जुबुद्ध्य सर्पवद्दुःखदा इमे दृश्यत्वान्मिथ्या अपि । नन्वनुपात्ता एव सुखदा भवंतु अत आह । अनुपात्ता अपि बाहुल्येन विरहिणां कामिनीविरहप्राप्त्युवेरशापितपक्षवद्दुःखदा एव विवेकिनः, मूढानां मधुसंपृक्तविषान्नवत् विषा एव । रागिणां सर्वथा दुःखरागानुविद्ध एव । सर्वोऽपि सुखानुभवः राग एवोद्भूतः सन् विषयप्राप्त्या सुखरूपेण परिणमते । रोगो हि प्रतिक्षणं संवर्धमानः स्वविषयाप्राप्त्या दुःखयत्येव, भोगे जाते करणतृष्णाशांतिस्तु रागिणः सुखमिंद्रियचापल्यादनुपशयंति दुःखं भोगाभ्यासेन वैतृष्ण्यं न भवति, करणानां प्रत्युत रागो वर्धते, करणकुशलता च न जातुकाम इति पूर्वोदाहृतस्मृत्या ततो दुःखरूपपरिणामत्वात्परिणामे दुःखरूपत्वं सुखानुभवसमयेऽपि दुःखत्वं सुखप्रतिकूलं द्वेष्ट्येव, रागी नानुपहत्य भूतानि भोगः संभवति द्वेषस्य तापात्मकत्वाद्दुःखसाधनानि परिहर्तुमशक्नुवन्परितप्तो मुह्यति, अतोऽपि दुःखमेव सुखानुभवो नाशकाले संस्कारमाधत्ते, स च स्मरणं, तच्च रागं, स च मनःशरीरवाक्चेष्टाम्, सा च पुण्यापुण्यकर्माशयौ, तौ जन्मादीनि, संस्कारदुःखदा तापमोहयोरप्येवं संस्कारौ ज्ञेयौ। एवं कात्स्न्येऽपि दुःखानुवेधान्मत्तं विषयसुखं दुःखमेवेति 'त्रिभिर्गुणमयैर्भावै·

रेभिः सर्वमिदं जगत्' इति स्मृतेः, सर्वस्यैव त्रिगुणात्मकत्वेन जगतः सुखदुःखमोहात्मकत्वेन दुःखरूपत्वमेवेति । तथाच स्मृतिः– 'ये हि संस्पर्शजा भोगा दुःखयोनय एव ते ॥ आद्यंतवंतः कौंतेय न तेषु रमते बुधः' इति । तदुक्तं पतंजलिनापि–भगवता परिणामतापसंस्कारदुःखैर्गुणवृत्तिविरोधाच्च दुःखमेवसर्वं विवेकिन इति ।. सांख्याचार्यैरपि– 'दृष्टवदानुश्रविकः स ह्यविशुद्धिक्षयातिशययुक्तः तद्विपरीतः श्रेयान् व्यक्ताव्यक्तज्ञविज्ञानात्' इति । अतः सुष्ठूक्तं मायशो दुःखदा इमे इति ॥९२॥

**भृंगसारंगमातंगपतंगशफरीगणान् ॥**
**नेक्षसे चित्तवृत्ते किं विनष्टान्विषयाशया ॥ ९३ ॥**

विषयसंगात् ये नष्टास्तानुदाहरति । भृंगेति । यथा भृंगो गंधलोभेन कमलं न जहाति निशायां निरुद्धः कमलेन साकं गजेन चर्व्यते । सारंगो मृगः शब्दरसेन निरुद्धक्रियः व्याधेन ताड्यते । मातंगो हस्ती मदनेन वशीकृतः करिणीसंगेन बध्यते । पतंगः पक्षी दीपरूपं पश्यन् भस्मीभवति । तथाचोक्तम्– 'योषिद्धिरण्याभरणांबरादिद्रव्येषु मायारचितेषु मूढः ॥ प्रलोभितात्मा ह्युपभोगबुद्ध्या पतंगवन्नश्यति नष्टदृष्टिः' इति । शफरी मत्स्यी रसनया विद्धा भवति । उक्तं भगवता व्यासेनापि–'कुरंगमातंगपतंगभृंगमीना हताः पंचभिरेव पंच ॥ एकः प्रमादी स कथं न हन्यते यः सेवते पंचभिरिंद्रियैश्च' इति ।'लोहदारुमयैः पाशैः पुमान्बद्धो विमुच्यते॥ पुत्रदारमयैः पाशैर्बद्धो नैव प्रमुच्यते' इति । हे चित्तवृत्ते विषयाशया विनष्टान् भ्रमरादीन् पश्यसि, यदि विषयाशां न त्यक्षसि तदेदृशीं दशामनुभविष्यसीत्यर्थः ॥ ९३ ॥

**शब्दैः सुखैकहेतुश्चेत्कोकिलालापवत्ततः ॥**
**प्रार्थ्यते विषयासक्तैः किं नरा समभाषितम् ॥ ९४ ॥**

अधुना प्रत्येकं शब्दादीनां सुखहेतुत्वेऽन्वयव्यभिचारस्यन्यानि दर्शयति । शब्द इति । यदि शब्दः सुखहेतुः स्यात्तदा कोकिलशब्दवत् स-

रशब्दो विषयरतैः किं नेष्यते; शब्दत्वाविशेषात् सुखहेतुत्वाभावेन व्यभिचारात् । सुखत्वेन शब्दत्वेन कार्यकारणभावाभावादित्यर्थः॥९४॥

स्पर्शः सुखं प्रसूते चेदंगनालिंगनादिवत् ॥
अंगारालिंगनादीनि विषयी किं न वांछति॥९५॥

स्पर्शस्य सुखहेतुत्वे व्यभिचारमाह । स्पर्श इति । चेत् स्पर्शः सुखमुत्पादयति स्त्र्यालिंगनादिवत् । अंगारालिंगनादीनि, आदिना तस्या एव मृताया ग्रहणम् ॥ ९५ ॥

रूपं चेत्सुखमाधत्ते ततो विषयलंपटैः ॥
कनकस्येव काकस्य किं न रूपमपेक्ष्यते ॥ ९६ ॥

रूपस्यापि तं दर्शयति रूपमिति । यदि रूपं सुखं जनयति ततो विषयासक्तैः स्वर्णस्येव काकस्य रूपं किं न वांछ्यते अपितु नेष्यते ॥ ९६ ॥

आनंदप्रद एव स्याद्रसो यदि च सेवितः ॥
रसालफलवत्तर्हि सेव्यं किं नेंद्रवारुणम् ॥ ९७ ॥

रसस्यापि सुखहेतुत्वे व्यभिचारं दर्शयति । आनंदेति । यदि सेवितो सुखप्रद एव स्यात्तदा आम्रफलवत् 'आम्रश्चूतो रसालः स्यात्' इत्यमरः । इंद्रवारुण्याः फलमिंद्रवारुणं कटुफलम् । वसलुंवेति भाषया पश्चिमदेशे प्रसिद्धम् । 'विशाला त्विंद्रवारुणी' इत्यमरः ॥ ९७ ॥

गंधः संधत्त आनंदं यदि मंदानिलाहृतः ॥
धूपधूमवदेयं स्यात्प्रेतधूमोऽपि तोषितः ॥ ९८ ॥

प्रकारांतरेणापि व्यभिचारमाह । य एवेति । य एव विषयः पायसादिरति-
प्रियोऽपि सुखजनकोऽपि स एव दुःखदो भवति । अन्नरसापरिणामे
सतीत्याह । अजीर्णं मंदाग्न्यादिदोषादपरिपक्वं मरणायैव कल्पते
नतु सुखाय खंडपायसमपि । एवं सर्वेऽपि विषया ये सुखसाध-
नत्वेन प्रसिद्धास्ते दुःखदा एवेति भावः ॥ ९९ ॥

चित्तवृत्ते ततोऽनंतं तथाऽनतिशयं सुखम् ॥

आत्मरूपमुपादाय स्वस्था भव भवौषधम् ॥ १०० ॥

प्रकृतोपदेशमुपसंहरन्न सिद्धांतमुपदिशति । चित्तवृत्ते इति । हे चित्तवृत्ते
देशकालवस्तुपरिच्छेदरहितं निरतिशयानंदं आत्मरूपमादाय स एव
अहमस्मीति साक्षात्कृत्य । किंभूतमतएव भवस्य जन्ममरणप्रवाहस्य
रोगस्यौषधमिव निवर्तकम् । स्वस्था स्वस्य स्वाधारत्वानुपपत्तिरिति
चेत्सत्यं, स्वशब्देन परंब्रह्म तन्निष्ठा तदभिन्नसत्ता सती तद्रूपा भवेत्यर्थः ।
एतेन भेदाभेदविकल्पोऽप्यपास्त इति ॥ १०० ॥ विषयान् दु खदान्
हित्वा पूर्णानंदे रतिं कुरु ॥ इतिनिरूपितेनाथ तुष्यतां परमेश्वर ॥ १ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यहरिहरसरस्वती-
प्रियशिष्यपरमहंसपरिव्राजकाचार्यजगन्नाथ-
सरस्वतीविरचिते अद्वैतामृते
प्रथमः कवलः संपूर्णः ॥ १ ॥

इत्यद्वैतामृततरंगिण्यां टीकायां प्रथमः कवलः समाप्तः ।

# अद्वैतामृतग्रंथे

## द्वितीयः कवलः ।

ॐ नमः परमहंसाय ।

विवेकाश्रमवाक्यानि समाकर्ण्याथ सादरात् ॥
चित्तवृत्तिः क आत्मेति जिज्ञासां समुपाददे ॥ १ ॥

॥ श्रीगणेशाय नमः ॥ ॥ एवं पूर्वकवलेन विषयखंडनेनैहिकामुष्मिकभोगेभ्यो वैराग्यं दर्शितम्, रागस्यैव मुख्यत्वेन मोक्षपरिपंथित्वात्तन्निवृत्तौ विषयवैमुख्येन सकलसाधनसंपन्नस्य ज्ञानेऽधिकार इति दर्शयितुं विचारस्यैवात्मजिज्ञासां दर्शयति । विवेकाश्रमेति । अथ विवेकाश्रमोपदेशानंतरं सा चित्तवृत्तिरादरपूर्वकं विवेकाश्रमवाक्यानि सुपूर्तिहंतचयरूपाणि श्रुत्वा इतिजिज्ञासां समुपजग्राह । इतीति किम् । क आत्मा अन्नमयः स्थूलदेहः प्राणमयो वा मनोमयो वा विज्ञानमयो वा ऽऽनंदमयो वाऽतिरिक्तो वा सर्ववर्णाश्रमादिव्यवहारस्य प्रथमे देहस्थितिप्रयोजकत्वात्, द्वितीये सेंद्रियप्रवर्तकत्वात्, तृतीये सर्वविधिनिषेधशास्त्रस्य तत्प्रयुक्तत्वात्, चतुर्थे कर्तृत्वादिव्यवहारस्य सत्त्वात्, आनंदमयोऽप्यास्वादितिशास्त्रात्पंचमेऽप्यात्मत्वप्रतीतेः । एतेषां क आत्मा इत्यहं नो जाने । उपदिश ब्रह्मन्निति भावः ॥ १ ॥

समभ्यग्रमुपासीना विवेकाश्रममाह सा ॥
कोऽयमात्मा य आनंदरूप उद्घोष्यते त्वया ॥ २ ॥

अथ समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठमिति श्रुत्युपदिष्टं गुरूपसदनप्रकारमाह । समभ्यग्रमिति । नम्रीभावपूर्वमासीना सा चित्तवृत्तिः उवाच । य आनंदरूप आत्मा त्वया कथ्यते स एव क इति । वक्तव्यमिति शेषः ॥ २ ॥

आत्मापहतपाप्मा यः सोऽन्वेष्टव्यो विपश्चिता ॥
स विजिज्ञासितव्यश्चेत्यथोयं श्रुतिशासनम् ॥ ३ ॥

देवासुराधिपतिभ्यामायासेन महता प्रेप्सिता देवराजेन च कथंचित्प्राप्ता तस्मान्महार्हा इयं विद्या इति तस्याः स्तुत्यर्थाख्यायिकापूर्वं छांदोग्ये यत् प्रजापतिवाक्यमाह । आत्मा इति । पापसंसर्गशून्यः सोऽन्वेष्टव्यः शास्त्राचार्योपदेशैर्ज्ञातव्यः ॥ ३ ॥

याज्ञवल्क्योऽपि मैत्रेयीमुवाचात्मप्रियां प्रति ॥
द्रष्टव्य आत्मा श्रोतव्यो मंतव्यश्च विचक्षणैः ॥ ४ ॥
सनिदिध्यासितव्यश्चेत्यात्मनो दर्शनाच्छ्रुतेः ॥
मननादथ विज्ञानात्सर्वं विज्ञातमित्यपि ॥ ५ ॥

यथा याज्ञवल्क्यो मैत्रेयी परमरहस्यमुपदिदेश तत्तुल्यां मां ज्ञात्वा परमयोग्यं तत्त्वं सुगमोपायेनोपदिशेत्यभिप्रायं सूचयंती बृहदारण्यकाख्यायिकां कथयंती माह । याज्ञवल्क्योऽपीति । आत्मप्रियां मैत्रेयीं प्रत्युक्तवान् । विवेकिभिरात्मा द्रष्टव्यः । कैः साधनैरत आह । श्रोतव्यः मंतव्यः स निदिध्यासितव्यः । श्रवणमनननिदिध्यासनानि साक्षात्कारसाधनानि । तथाच श्रुतिः—"आत्मा वा रे द्रष्टव्यः श्रोतव्यो मंतव्यो निदिध्यासितव्यः" इति । अथ कोऽयमत्र विधिरिति विचार्यते तत्र प्रकटार्थकारादयोऽपूर्वविधिं स्वीकुर्वते यथाप्यप्रमाप्तस्य प्राप्तिफलको विधिरपूर्वविधिर्यथा व्रीहीन्प्रोक्षतीतिवदत्राप्यत्यंताप्राप्तत्वादपूर्वविधिः । वेदांतश्रवणं ब्रह्मसाक्षात्कारहेतुरित्यन्वयव्यतिरेकप्रमाणं नास्ति । लोके कृतश्रवणस्यापि बहुशस्तदनुत्पत्तेर्गर्भस्थवामदेवस्य श्रवणं विनाऽप्युत्पत्तेरिति विवरणकारादयो नियमविधिमंगीकुर्वते व्रीहीनवहंतीतिवत् । इतिहासपुराणादिषु तत्त्वज्ञानसाधनत्वं बुद्ध्वा तत्र प्रवृत्तौ पक्षेऽप्राप्तस्य वेदांतश्रवणस्य विधिर्नियमविधिरेवेति । वार्तिकानुसारिणस्तु परिसंख्यां विधिमाहुः । द्वयोः प्राप्तावितरव्यावृत्तिपरः परिसंख्या यथा इमामगृभ्णन्निति मंत्रो गर्दभरशनाग्रहणनिवृत्त्यर्थः तथा वेदांतश्रवणे प्रवृत्तस्य व्यापारांतरेऽपि प्रवृत्तिः तन्नि-

वृत्तित्तिफलकः परिसंख्याविधिरिति । केचित्तु कंचिदपि विधिं न मन्वते श्रवणमात्रोपदेशजज्ञानमेवेति । कथं तर्हि विध्यर्थितव्यप्रयोग इति स्वाभाविकप्रवृत्तिविमुखीकरणायेत्यवेहीति वाचस्पत्यादय इति । ननु परस्परविरुद्धनानामतमप्रमाण भविष्यतीति चेन्न, 'उपेयप्रतिपत्त्यर्था उपाया ह्यव्यवस्थिताः' इतिन्यायेन अकल्पितवस्तुप्रतिपादनतया कल्पमानेषु पदार्थेषु विरोधो न दोषावहः इतिवार्तिकपरिमलोक्तेश्चेति प्रकृत्युपादानकं जगदिति सांख्या वदंति। श्रुतिविरुद्धमिति दर्शयंत्या यया श्रुत्या विरोधस्तामर्थतः पठति । आत्मन इति । सर्वं विज्ञातमित्यपि याज्ञवल्क्यो मैत्रेयीमुवाचेत्यन्वयः ॥ ४ ॥ ५ ॥

**ततो ब्रूहि तमात्मानं चिदानंदात्मकं मुने ॥**
**विवेकाश्रम येनाहं त्यजेयं विषयानिमान् ॥ ६ ॥**

यस्मिन्विज्ञाते सर्वमिदं विज्ञातमिति ब्रह्मज्ञानाज्जगज्ज्ञानमिति लोकविरुद्धमन्यज्ञानादन्यज्ञानं घटज्ञानात्पटज्ञानमपि भवेदेवं सशयमापन्ना पृच्छेत्याह । तत इति । ततः पूर्वोक्तहेतो', हे मुने विवेकाश्रम येन नित्यपूर्णानंदज्ञानेन इमान् दृश्यान् परिछिन्नान्विनाशिनोऽतृप्तिहेतून् विषयानंदान् अहं त्यजेयं तं चिदानंदस्वरूपमात्मानं वदेत्यर्थः ॥ ६ ॥

**आत्मैव तावदतिरिक्ततया न भाति**
**देहेंद्रियासुनिचयात्कुत एव तस्य ॥**
**आनंदता न हि परं प्रतिभाति पुंसां**
**शब्दादिजन्यसुखतः सुखमन्यदीषत् ॥ ७ ॥**

प्रथमश्लोकविकल्पितदेहादिभिन्न आत्मा न प्रतीयते इत्याह । आत्मेति । हे मुने देहश्च इंद्रियाणि च बाह्यानि करणान्यंतःकरणानि चासवः प्राणाश्च तेषां चयः संघातः तस्माद्भिन्नतया आत्मा न प्रतीयते तस्यात्मन आनंदता पुनः ,आश्रयाभावात् । नन्वर्थाभावे लोके आनंदशब्दप्रयोगो दृष्टेवेत्यत आह । नहीति । हि यस्माल्लोके पुंसां शब्दादि-

जन्यसुखतो भिन्नं स्वल्पमपि परं निरतिशयं यद्ब्रह्मवादिभिरुच्यते सुखं तत्र भासते ॥ ७ ॥

**तस्मादस्मत्प्रबोधाय कार्यकारणसंघतः ॥**
**मुंजैषिकावन्निःकृष्य स्वेष्टमात्मानमीरय ॥ ८ ॥**

मुंजादिषिकामिव श्रुत्युक्तदृष्टांतपूर्वकं पृच्छति । तस्मादिति । यस्माद्धेतोः संघातविलक्षणः कस्यचिन्न भाति तस्मान्मम मूढायाः आत्मसाक्षात्काराय कार्यं स्थूलदेहः कारणं सूक्ष्मदेहः तस्य समुदायात् मुंजादीषिकामिव पृथक्कृत्य स्वस्य विवेकाश्रमस्येष्ठं साक्षात्कृतं पूर्णानंदं करामलकवत् दर्शय । कृपासिंधोः पूर्णकामस्य तव स्पृहा काचिदपि नास्तीति मया विज्ञाप्यते इति भावः ॥ ८ ॥

**इत्युक्तिं चित्तवृत्त्युक्तामाकर्ण्य स यतीश्वरः ॥**
**इत्थं विचारयामास क्षणमात्रं निमीलितः ॥ ९ ॥**

चित्तवृत्तिप्रश्नवाक्यं श्रुत्वा विवेकाश्रमः किं चकारात आह । इत्युक्तमिति । यतिराजः चित्तवृत्त्युक्तां पूर्वोक्तां वचनावलिं श्रुत्वा क्षणमात्रं निरुद्धचित्तव्यापारः सन् आलोचयामास, वक्ष्यमाणप्रकारेणाव्युत्पन्ना इत्यादिसार्धपंचभिः ॥ ९ ॥

**अव्युत्पन्ना विपर्यस्ता श्रुतिश्रद्धाविवर्जिता ॥**
**बोधनीया कथं चैषा रंडा पंडितमानिनी ॥ १० ॥**

कीदृशं विचार चकारात आह । अव्युत्पन्नेति । एषा साक्षिमत्यक्षा । अस्य वाक्यस्येदं तात्पर्यमिति कार्यकारणभावरूपव्युत्पत्तिहीना देहादिष्वात्मप्रत्ययवती श्रुतिषु वेदांतवाक्येषु विश्वासवर्जिता अत एव रंडा पतिवर्जिता सर्वश्रुतिस्मृतिवाक्ये विश्वासाभावादेव आत्मानमपंडितमपि पंडितं मन्यते । यथा 'व्याचष्टे यः पठति यः शास्त्रं भोगाय शिल्पिवत् ॥ यतते न त्वनुष्ठाने ज्ञानबंधुः स उच्यते ' इतिलक्षणोऽव्युत्पाद्यस्तथेयं यथं मया व्युत्पादनीयेति ॥ १० ॥

यो हि कुर्याद्वज्रभेदं यः पिबेदाशुशुक्षणीम् ॥
यस्तरेद्वाऽब्धिं दोर्भ्यां स नेशो मूर्खबोधने ॥ ११ ॥

मूर्खबोधने व्यतिरेकदृष्टांतत्रयमाह । यो हीति । हिशब्दोऽसंभवद्योतकः । यः वज्रस्य हीरकस्य विजातीयेन विदारणं कुर्यात्, वा योऽग्निं पिबेत्, यो भुजाभ्यां समुद्रपारं गच्छेत् । यथैतदसंभवितं तथा मूर्खबोधनमशक्यमिति ॥ ११ ॥

विपर्यस्तमतिं मूर्खं बोधयामीति यो वदेत् ॥
मूर्खमूर्द्धाभिषिक्तं तं दूरतः परिवर्जयेत् ॥ १२ ॥

मूर्खबोधने सामर्थ्यं वदंतं हसति । विपर्यस्तेति । यो विपर्ययग्रस्तं मूर्खं व्युत्पादयामीति वदेत् त मूर्खराजानं दूरतः परिहरेत् । तादृशसयोगो न करणीयः इत्याशयः । यथा 'सत्सगतिः कथय किं न करोति पुंसाम्' इतिकरणीयत्वेन स्तूयते तथा । 'अरतिर्जनससदि' इति इतरस्य निषेधोऽपीति । यथा तया बहवो मुक्तास्तथेतरया सक्ता भवंतीति ॥ १२ ॥

सुविस्पष्टेऽपि विषये विपर्यस्तो न तुष्यति ॥
पित्तोपहतजिह्वस्य गुडदः किं करिष्यति ॥ १३ ॥

नन्वात्मनो संदिग्धत्वेन स्पष्टत्वात् कथं तद्बोधनमशक्यमित्याशक्य स्वदोषादेव राज्ञो भरर्सुत्राक्यादिवाव्युत्पत्तिः, अत्र मठे दुर्ज्ञेभेत्यत्र दृष्टांतमाह । सुविस्पष्टेऽपीति । विपर्यय प्राप्नोति सन्निहितेऽपि प्रत्यक्षयोग्येऽपि वाक्यार्थज्ञानपूर्वकतोष पूर्णानंदप्राप्तिरूप न गच्छति । पित्तेनोपहता नाशिता रसप्रत्यक्षजनकता यस्या जिह्वायास्तादृशी रसज्ञा यस्य स तथा तस्य गुडदः सर्वोऽपि रसस्तस्य निष्फलो भवति ॥ १३ ॥

माश्रित्येयं व्युत्पादनीया । अद्वैतसाक्षात्कारं विना मम स्थितिरपि तथा प्रकृतेऽपीति ॥ १४ ॥

**विवेकाश्रम एवं स्वमनसा परिचिंतयन् ॥**
**उवाच चित्तवृत्तिं तां बद्धमूलतमस्तराम् ॥ १५ ॥**

विवेकाश्रम एवं पूर्वोक्तप्रकारेण मनसा विचारयन् दृढमूलाज्ञानपरिभाविता तां चित्तवृत्तिं कथयामास ॥ १५ ॥

**त्यक्त्वा कांतारसंचारं राजमार्गमुपागता ॥**
**बोधनीयाऽसि केनापि प्रकारेणात्मसंशये ॥ १६ ॥**

किमुवाच विवेकाश्रम इत्यत आह । त्यक्त्वेति । कांतारं दुर्गमं स्त्रीपिशाच्यादिभिः कालाजगरभयंकर कामतस्करोपरचितं क्रोधव्याघ्रनिनादितं झिल्लीस्वनपरोक्षनिंदकवचनवार्णशूलितमनिष्टसूचकमत्यक्षाप्रियवादिदुर्जनोलूकव्याकुलित लौकिकरूपशोर्षे क्रियमाणकर्मपर्वतदुरारोहं तृष्णाननकरिणीपालितं वनं तत्संचारो भ्रमणं विहाय वेदांतमार्गं त्वं प्राप्ता । आत्मसंशयवारणं यथा तथा बोधनीया केन च प्रशस्ते न प्रकारेणेत्येतेन वैराग्यकाल एव बाह्यदुःखनिवृत्तिरिति सूचितम् ॥१६॥

**तद्गच्छ चित्तवृत्ते त्वं मृद्भांडं स्थूलमानय ॥**
**समंतरालपरिधिकल्पितच्छिद्रपंचकम् ॥ १७ ॥**

'इंद्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः ॥ मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान्परः ॥ महतः परमव्यक्तमव्यक्तात्पुरुषः परः ॥ पुरुषान्नपरं किंचित्' इतिश्रुत्युक्तसूक्ष्मतारतम्यक्रमेण मत्यगात्मबोधनार्थं दृष्टांतं संपादयति । तद्गच्छेति । हे चित्तवृत्ते कल्पितच्छिद्राणां पंचकं यत्र समंतरालमध्यं परिधिर्मंडलं यस्य तं स्थूलमृद्भांडमानय ॥ १७ ॥

**शरावमानय तथा दीपं स्थूलदशाश्रयम् ॥**
**आनीयात्रापवरके गाढध्वांतसमाश्रये ॥ १८ ॥**
**निधाय दीपं भूभागे तस्योपरि वरानने ॥**
**निधाय भांडं तत्पुंजं घटिस्तच्छिद्रसन्निधौ ॥ १९ ॥**

तथा दीपस्त्वघटकं स्थूलत्वर्पोश्रयं शरावमानय । गाढांधकाराश्रये आवरणसहिते भूभागे दीपं स्थापयित्वा हे वरानने दीपस्योपरि तद्घटम- धोमुखं विधाय तस्य घटस्य यानि पंच छिद्राणि तद्बहिर्देशे॥१८॥१९॥

**वीणां शिरीषपुष्पं च सुवर्णं पानकं तथा ॥**
**कस्तूरीं च क्रमेणैव निवेशय सुमध्यमे ॥ २० ॥**

प्रथमछिद्रबहिर्देशे समीपे शब्दसाधनं वीणां, द्वितीये स्पर्शसाधनं शिरी- षपुष्पम्, तृतीये रूपज्ञानसाधनं तेजोरूपं सुवर्णम्, चतुर्थे रसव्यंजकं द्रव्यंक्षौद्रादि, पंचमे गंधव्यंजकां कस्तूरीम् । एवं क्रमेण हे सुमध्यमे स्थापय ॥ २० ॥

**तथा कृते तया प्राह विवेकाश्रमयोगिराट् ॥**
**अस्मिन्ध्वांतापवरके तन्वि किंचित्प्रपश्यसि ॥ २१ ॥**

तथा मुमुक्षां भाम्रया यथा उपदिष्टं तथा कृते सति भिक्षुराह । तामुवा- च । हे तन्वि अस्मिन् घटे त्वं किं किं प्रपश्यसि ॥ २१ ॥

**सा प्रत्याह प्रपश्यामि स्थितं वीणादिपंचकम् ॥**
**एवमुक्ते चित्तवृत्या विवेकाश्रम आह ताम् ॥ २२ ॥**

सा प्रत्याह वीणादिपंचकं स्थितं शब्दादिसाधनं पश्यामि । चित्तवृत्त्या एवमुक्ते सति तां विवेकाश्रम आह ॥ २२ ॥

**वीणादयः प्रकाशंते स्वतो वा छिद्रतोऽपि वा ॥**
**भांडतो वाऽन्यतो वेति संशयं मे निराकुरु ॥ २३ ॥**

किमाह अत्र आह । वीणेति । वीणादयः पंच स्वतो भासंते छिद्रतो भांडतो वाऽन्यतो वेति मे संशयं दूरीकुरु ॥ २३ ॥

**सा प्रत्याह पुनर्माला शालासौभाग्यसंपदः ॥**
**वीणादयो न भासंते स्वतो न सुषिरैरपि ॥ २४ ॥**
**न भांडेनापि किं त्वंतःस्फुरता दीपतेजसा ॥**
**प्रकाश्यंते यत्रीन्द्रे मे वीणाद्या विनिवेशिताः ॥ २५ ॥**

विवेकाश्रमवाक्यं श्रुत्वा सा योषा पुनः भतिवाक्यं द्वाभ्यामाह । न

अत्याहेति । हे यतिराज शालायाः सौभाग्यस्य संपद्रता वीणादयोन स्वतःछिद्रैरपि न घटेनापि न भासंते, किंत्वंतःप्रकाशमानेन दीपतेजसा इमे वीणाद्याः स्थापिता भासंते ॥ २४ ॥ २५ ॥

पुनराह हसन् भिक्षुर्दीपतेजोगिरा त्वया ॥
विवक्षितं किमत्रास्ति शरावं वा दशाऽपि वा॥२६॥

भिक्षुराह पुनः स हसन् । हे बाले दीपतेजःपदेनात्रास्मिन्समुदाये किं विवक्षितं त्वया शरावं घृताधारं मृण्मयं पात्रं वर्त्तिका च ॥ २६ ॥

अन्यद्वेति वद व्यक्तं यत्रासक्तं मनस्तव ॥
चित्तवृत्तिः पुनः प्राह शरावं न विवक्षितम् ॥ २७ ॥

अन्यद्वेति व्यक्तं स्पष्टं यथा स्यात्तथा भण यत्र तव मनः आसक्तं लग्नम् । पुनश्चित्तवृत्तिः प्राह । शरावं न विवक्षितम् ॥ २७ ॥

न दशा स्नेहसंपन्ना किं तु यच्चंपकाकृतिः ॥
शरावसस्नेहदशावशात्स्फुरति किंचन ॥ २८ ॥

तैलादिस्नेहसंयुक्ता कार्पासदशाऽपि न विवक्षिता चंपकपुष्पाकारास्नेहयुक्तशरावदशावशात्किंचन स्फुरति ॥ २८ ॥

तेजोगिरा मया योगिंस्तदेवात्र विवक्षितम् ॥
विवेकाश्रम ईदृश्या तद्गिरा तोषमाप सः ॥ २९ ॥

हे योगिन् तदेव मया तेजःपदेन वक्तुमिष्टम् । स विवेकाश्रम ईदृश्या तस्या वाण्या तोषं प्राप्तः ॥ २९ ॥

निमीलिताक्षो रोमांचकंचुकोदंचितांगकः ॥
मुचन्नयनतो वारि निश्चलोऽचलराडिव ॥ ३० ॥

तुष्टः सन् किं चकार ऐहिकामुष्मिकभोगविरक्ताः मत्यक्परायणाः संतुष्टस्य निरीहस्य स्वात्मारामस्य परसुखं कुतस्तत्कामलोभेन धावतोऽर्थेहया दिश इत्यादिप्रसिद्धनिरतिशयपरिपूर्णानंदभराप्लुतचित्ताः परमहंसा यदनुभवंति ततोऽन्यन्न किंचिच्चकारेत्याह द्वाभ्याम् । निमी-

लिताक्ष इति । अचलराजवत् निश्चलो बभूवेत्यन्वयः । निमीलितानि मुद्रितानि अक्षीणींद्रियाणि येन । कंचुकसदृशरोमांचेनांचितानि व्याप्तानि अंगानि यस्य सः । नेत्राभ्यां जलं त्यजन् । पुनः किं कुर्वन्–॥३०॥

**आत्मन्येवात्मना पश्यन्नात्मानमखिलात्मकम् ॥**
**बभूवांधो गलद्बंधो बाह्येषु विषयेष्वयम् ॥ ३१ ॥**

आत्मनि बुद्धौ विवेकेनात्मानं सच्चिदानंदं सकलप्रियं चाधिष्ठानं पश्यन्ननुभवन् । अतएव बाह्यविषयेष्वात्मातिरिक्तेष्वंधस्तज्ज्ञानरहितः । कुतः । गलद्बंधः, क्षीणबंधत्वादित्यर्थः । 'अयं परसाक्षादपरोक्षात्' इतिश्रुतेः सदाऽपरोक्षः । तथोक्तम्– ' मनः प्रत्यक्चित्ते सविधमवधायात्तमरुतः प्रहृष्यद्रोमाणः प्रमदसलिलोत्संगितदृशः ॥ यदालोक्याह्लादं ह्रद इव निमज्ज्यामृतमये दधत्यंतस्तत्त्वं किमपि यमिनस्तत्किल भवान्' इति । अस्यार्थः– हे शिव यत्किमपि तत्त्वमिदंतया वक्तुमशक्यं "यतो वाचो निवर्तंते अप्राप्य मनसासह" इतिश्रुतेर्विषयानंदोऽपि चेद्वागविषयस्तर्हि परमहंसैः समाहितैरनुभूयमान आनंदः सुतरामविषयः किमु वक्तव्यमिति । सच्चिदानंदस्वरूपं वस्त्वालोक्य वेदांतवाक्यजन्याखंडाकारवृत्त्याऽपरोक्षीकृत्य यमिनः शमादिसाधनसंपन्नाः परमहंसाः अंतर्देहादिबाह्यसुखविलक्षणं निरतिशयानंदं दधति पूर्वं विद्यमानमेव धारयंति । नित्यत्वात्तस्य तत्तत्त्वं किलेति प्रसिद्धं शिवमद्वैतं तुरीयं मन्यंते । "सत्यं ज्ञानमनंतं ब्रह्म ॥ आनंदो ब्रह्म" इत्यादिश्रुतिप्रसिद्धो भवान्, न नित्यज्ञानाद्याश्रयः तार्किकादिसंमतः । तत्राह्लादस्य निरतिशयत्वं दर्शयन् दृष्टांतमाह । अमृतमये ह्रदे निमज्ज्येव यस्य लेशमात्रमप्यनुभूय सुखिनो भवंति, किमु वक्तव्यं तस्य निमज्जनरूपसर्वांगसंबंधेनेति । नन्वद्वैतानंदेकः दृष्टांत इति चेत्सत्यं, तथापि लोकमतिदार्ढ्यविमुक्तं कथंचिदधिकाराज्जनः प्रवर्त्ततेति । ईदृशानंदानुभवे साधारणहेतुमाह, मन इत्यादिना । चित्ते हृदयकमले मनः संकल्पविकल्पात्मकं अवधाय निरुध्य । कीदृशं मनः । प्रत्यक् चक्षुरादींद्रियद्वारा

बहिर्विषयप्रवृत्तिमतिकुलतयाऽतमुखतयैवांचतीति प्रत्यक् । कीदृशाः यमिनः । सविधं समकारं यथास्यात्तथा आत्तमरुतः शास्त्रोपदिष्टमार्गेण कृतप्राणायामाः । इंद्रियनिरोधरूपप्रत्याहारः प्रत्यक्पदेन सूचितः । चित्ते इत्यनेन धारणामूलाधारस्वाधिष्ठानमणिपूरकानाहतविशुद्धचाज्ञाख्यचक्रान्यतमदेशे चित्तावस्थानम् । अवधायेत्यनेन ध्यानसमाधी । तत्र प्रत्ययस्यैकतनताध्यानम्, विच्छिद्य जायमानः प्रत्ययः संततप्रत्ययः समाधिः । अष्टांगयोगो निदिध्यासनमुक्तम् । साक्षात्कारहेतुः । एवं ह्यानंदानुभवहेतुमुक्त्वा कार्यमाह । प्रहृष्यद्रोमाणः प्रहर्षपुलकितांगाः । प्रमदसलिलोत्संगितदृशः हर्षाश्रुपूर्णा नेत्राः । यमिनामानंदानुभवे इदं लिंगमुक्तमिति । अविलीयमानेनापि निर्विकल्पः समाधिरेवोक्तः । उक्तं च–' समाधिनिर्धूतमलस्य चेतसो निवेशितस्यात्मनि यत्सुखं भवेत् ॥' न शक्यते वर्णयितुं गिरा तदा स्वयं तदंतःकरणे न गृह्यते' इति । एतेन सदा समाहितैरेव भिक्षुभिर्भवितव्यमिति स्वाचरणेन सूचितमिति ३१

चित्तवृत्तिःपुनस्तस्मिन्विषये तावन्निमिता ॥
बभूव तादृशं वीक्ष्य विवेकाश्रममंतिके ॥ ३२ ॥

तस्य यतिराजस्य तादृशीं दशां दृष्ट्वा सा बाला किं चकारेत आह चित्तवृत्तिरिति । तस्मिन्समीपे देशे समाहितं विवेकाश्रमं दृष्ट्वाऽश्चर्यं प्राप्ताऽऽसीत् ॥ ३२ ॥

पूर्वापरपरामर्शं चकारैव च सा हृदि ॥
ममात्मतत्त्वबोधाय प्रवृत्तोऽयं यतिः किल ॥ ३३ ॥

यथावस्थितयन्त्रित उत्पन्ने तथा समाधिकाले वृत्तिरपि गगनकुसुमायमाने वेति सूचितं कथाप्रस्तावार्थं वा वक्तव्यम् । विस्मयानंतरं सा किं कृतवतीत्यत आह । पूर्वेति । सा चित्तवृत्तिर्मनसे पूर्वापरविचारं चकारैव न त्वन्यविषयव्यापृताऽऽसीत् । मुमुक्षुभिः शास्त्रश्रवणकाले सावधानैर्भवितव्यमिति सूचितं सार्धचतुर्भिस्तस्याविचारमेव दर्शयति । ममेति । अयं यतिः मम तत्त्वसाक्षात्काराय यत्नशीलः आस्ते ॥ ३३ ॥

तत्रोपमोपमेयत्वं कृतं भांडशरीरयोः ॥
इंद्रियच्छिद्रयोरेवं संमतं हृच्छरावयोः ॥ ३४ ॥

कोऽसौ पूर्वापरविचारोऽत आह । तत्रेति । तस्मिन्दृष्टांते उपमा मृद्भांडं उपमेयं शरीरं छिद्राणामुपमानत्वं तदुपमेयत्वं चक्षुरादीनां शरावस्योपमानत्वं हृदयस्योपमेयत्वम् ॥ ३४ ॥

अंतःकरणसस्नेहदशयोर्दीपजीवयोः ॥
पंचामी विषया वीणाद्याश्रया उपदर्शिताः ॥ ३५ ॥

घृतादिसहितवर्त्युपमेयत्वमंतःकरणस्य दीपोमानत्वं उपमेयत्वं जीवस्य वीणाद्याश्रयाः उपमास्थानीयाः तन्निमित्तकाः शब्दादयो विषया उपमेया दर्शिताः स्वामिनः ॥ ३५ ॥

तदनेन प्रकारेण चिदात्मा मे निरूपितः ॥
भिन्नो देहेंद्रियादिभ्यः स्वप्रकाशोऽन्यभासकः ॥ ३६ ॥

अनेनोपमानोपमेयभावेन किं निर्णीतमत आह । तदिति । अनेन प्रकारेण मे मह्यं त्वंपदार्थः आत्मा निरूपितः । देहादिसंघातभिन्नो देहादिभासकः स्वप्रकाशो ऽवेद्यत्वे सत्यपरोक्षव्यवहारविषयः धर्मादिवारणाय विशिष्यं घटादिवारणाय विशेषण ज्ञानं ज्ञानव्यवहारहेतुप्रकाशः ज्ञानत्वात् । यन्नैवं तन्नैव यथा घट इत्यनुमानं प्रमाणं स्वप्रकाशे । नन्वेतत्प्रमाणवेद्यत्वे स्वप्रकाशत्वहानिरन्यथाऽपि तद्धानिरेवेति चेन्नानेनावेद्यत्वस्यैव बोधनात् । न च नैयायिकमतेऽर्थांतरं सिद्धसाधनं वा व्यवसायज्ञानहेतुप्रकाशस्यानुव्यवसायस्य तन्मते सिद्धत्वादिति वाच्यम् । व्यवसायव्यवहारसिद्धयर्थमनुव्यवसायस्य स्वीकृतत्वात्तद्व्यवहारसिद्धयर्थं ज्ञानांतरस्वीकारेऽनवस्थापत्तेर्न च स्वप्रकाशवादिनं प्रत्ययमुपालंभ इत्यन्यत्र विस्तरः ॥ ३६ ॥

प्रसंगादनुसंधानं मुकुरप्रतिबिंबितम् ॥ प्राप्य प्रत्यंचमात्मानं जन्तो माहदशोज्झितः ॥ ३७ ॥

पुनरपि तस्य भावनायां दशां चित्तवृत्तिवचनद्वारा निरूपयति । प्र-

संगादिति । अनुसंधीयते चिंत्यते मुमुक्षुभिर्मुक्तैरनुभूयते इत्यनुसंधानम् । कर्मणिल्युट् । प्रातिलोम्येन देहादिभ्योऽतरंचति मकाशते प्रत्यक्शुद्धः कूटस्थः त्वंपदार्थः, अतति सातत्येन गच्छति आत्मा, नच सातत्ये गमनाभाव इति वाच्यम्, गतेर्ज्ञानार्थकत्वस्यापि स्वीकृतत्वात् । निरंतरपूर्णप्रकाश आत्मपदार्थस्तत्पदलक्ष्यः, तयोरैक्येनानुसंधीयमानं माप्याखंडपरिपूर्णचित्सदानंदमनुभूय आत्मनस्तत्पदार्थत्वे आत्मन आकाशः संभूत आत्मेत्येवोपासीतेत्यादयः आगमाः प्रमाणम् । नन्वेवमनुभूय स्वरूपं कीदृशो जातोऽत आह । मुकुरप्रतिबिंबितं यथा स्यात्तथा बाह्यदशोज्झितो जातः । मुकुरो दर्पणः तत्प्रतिबिंबितमुखं प्रत्यग्भूतमपि यथा पराक्त्वं गच्छति । इदं च बाह्यदशाविशेषणम् । तथा च दर्पणतुल्यावाह्यव्यष्टिसमष्टिरूपाः स्थूलसूक्ष्मकारणदेहाः तद्दशास्तत्प्रतिबिंबितविराट्सूत्रेशरूपास्तदंतरगता विश्वतैजसप्राज्ञरूपाः ताभिरुज्झितः रहितः, तुरीय इत्यर्थः । तथाचोक्तम्– 'यं वक्त्रं मुकुरा इवेंद्रियमनोदेहाः पराग्दृश्यतां निन्युस्तत्स्थविभादिनाऽपि च विराट्सूत्रेशभावं गतम् ॥ तं प्रत्यग्दृगदृश्यमक्षरमणुं त्यक्तोपनेत्रत्रयाः श्रीगोपाल्मुपास्महे श्रुतिशिरोवंशीरवैर्दर्शितम् ' इति । उक्तमायोऽपि उच्यते । श्रीगोपालं वयमुपास्महे इत्यन्वयः । तत्र लीलाविग्रहासक्तो वंशीरवैर्दर्शितं नंदनंदनं तद्रूपां पालकं उपासते इति स्पष्ट एवार्थः । श्रुतिशिरोदर्शितं श्रुतिशिरांसि वेदांताः तैर्बोधितम् । तत्र गोभिर्वेदांतवाक्यैः पाल्यंते रक्ष्यते विषयसुखं परिहृत्य केवलमेवानुभूयते, गाः वेदवाणीः पालयति वा, गाः दृगुपलक्षितानींद्रियाणि पालयति वा, गाः वेदार्थभूतान् यज्ञविशेषोपलक्षितान् पालयति वा, गां भूमिं तदुपलक्षितं जगत्पालयति स्वमत्तास्फूर्त्याध्यासेन रक्षति वा गोपालस्तम् । तं कम् । मुकुरा दर्पणा मुखमिव च विराडादिभावं प्राप्तं इंद्रियमनोदेहाः पराक्त्वेन दृश्यभावं निन्युः स्थूलत्वादिना, वस्तुतः, प्रत्यग् सर्वांतरं दृक् प्रकाशमदृश्यं करणागोचरमक्षरं नित्यं पूर्णमणुं वेदांतभिन्नप्रमाणैरवे-

थम् । कथंभूता वयम् । त्यक्तोपनेत्रत्रयाः त्यक्तोपाधित्रयाः ॥ ३७ ।

**परं त्वस्यात्मनो ज्योतीरूपता मानतः कुतः ॥**
**इति पृष्टव्य एवासाविति तं पाणिना ऽस्पृशत् ॥३८॥**

आत्मनः स्वप्रकाशत्वे संदिहाना तत्र प्रमाणं प्रष्टुं यतिराजं समाधेर्व्यु-त्थापयति सा नारीत्याह । परंत्विति । सा नारी तं भिक्षुं हस्तेना-स्पृशत् । इति किम् । असौ भिक्षुर्मया इति प्रष्टव्य एव । अस्मिन्समये निर्वेदो न कर्त्तव्य इति मुमुक्षून् शिक्षयति । इति किम् । अस्यात्मन-स्तु पुनः ज्योतिरूपता । कुतः । मानतः यद्यप्यनुमानमुक्तं नैयायिक-मन्यं ज्ञानरूपत्वे विवदमानं प्रति परं तथाऽप्यहं परमानंदनिमग्नेच्छया श्रौतात्मनि श्रुतिप्रमाणमेव पृच्छामीत्याशयः ॥ ३८ ॥

**स्पृष्टस्तया परागवृत्तिचेताः कर्मंदिपुंगवः ॥ उन्मी-**
**लिताक्षो ऽनौचित्यं तस्या वीक्ष्य जगाद ताम् ॥३९॥**

तया स्त्रिया स्पृष्टः संन्यासी किं चकारात आह । स्पृष्ट इति । परा-ग्वृत्तिचेताः पराक्षु बाह्येषु शब्दादिषु वर्तते चेतो यस्य सः । उन्मी-लिते विकासिते ऽक्षिणी येन सः । कर्मंदिपुंगवः यतिश्रेष्ठः तस्या नार्याः तत्रानौचित्यमयोग्यत्वं वीक्ष्य तां जगाद उक्तवान् ॥ ३९ ॥

**देहः परमहंसानां न स्पर्शार्होऽपि कस्यचित् ॥ विशे-**
**षतश्च नारीणां कामादिमलिनात्मनाम् ॥ ४० ॥**

किं जगादेत्याह । देह इत्यादिसप्तदशभिः । परमहंसानां देहः कस्य-चित्कर्त्तारिषष्ठी । न स्पर्शार्हः स्प्रष्टुमयोग्यः । कैमुतिकन्यायमाह । कामादिमलिनात्मनां नारीणां विशेषतः किमुत स्पर्शार्ह इत्यनुषंगः । कामादिभिर्मलिनः मन्युकः अमेध्यपूर्णं आत्मा देहो यासां तास्तथा तासाम् । तथोक्तं च– ' अमेध्यपूर्णे कृमिजालसंकुले स्वभावदुर्गंधमशौ-चमध्रुवम् ॥ कलेवरं मूत्रपुरीषभाजनं रमंति मूढा न रमंति पंडिताः ' इति । ननु देहस्य कर्माविकारत्वात्तन्मन्तुकस्तत्कृतश्च पुरुषागमपीति चेत्सत्यम् । न रमंतीत्यस्य तत्राध्यासं कुर्वंति । अत्रविकारे दर्ता मम-

तां न कुर्वती विवेकिनो देहेऽत्रापि तात्पर्यात् । वस्तुतस्तु परमहंसानां सर्पस्त्वग्वत्त्यक्तदेहाभिमानानां देहस्वरूपं सच्चिदानंदः न स्पर्शार्हः न प्राप्तुं योग्यः नारीसदृशकामिनाम् । तथाच स्मृतिः– ' अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते ' इति ॥ ४० ॥

न हि ज्ञानेन सदृशं पवित्रमिह विद्यते ॥
इति प्राह प्रपन्नाय गुडाकेशाय केशवः ॥ ४१ ॥

ननु परमहंसदेहस्य वास्तवस्यास्पृश्यत्वे पवित्रत्वं हेतुस्तत्रैव किं प्रमाणमित्याशंक्य तत्पावनत्वे स्मृतिर्भागवती प्रमाणमित्याह । नहीति । इह व्यवहारकाले ज्ञानतुल्यं पवित्रं शोधकमनादिमायानिवर्तकमन्यन्न विद्यते । एवं कः कस्मै माहात आह । केशवः प्रपन्नाय विधिवदुपसन्नाय गुडाकेशाय गुडाका निद्रा तस्या ईशाय जितनिद्रायार्जुनाय प्राह प्रकर्षेण प्रीतिवश उक्तवान् ॥ ४१ ॥

तस्मात्प्रत्यक्परिज्ञानगोदया विमलीकृतः ॥
देहो यतीनां न परस्पर्शपंकमिहार्हति ॥ ४२ ॥

तथा च प्रयोगः। ज्ञानिदेहोऽस्पर्शार्हः ज्ञानपूतत्वात् , यन्नैवं तन्नैवं यथा कामिदेहः न चायं तथा तस्मात्तथेत्याशयेन निगमयति । तस्मादिति । यतीनां देहः परस्पर्शपंकमिह लोके नार्हति । हेतुगर्भं विशेषणमाह । प्रत्यक्परिज्ञानगोदया विमलीकृतः प्रतीचिपरिज्ञानं साक्षात्कारः गोदया इव गां वारि ददातीति गोदा गंगादिनदी तया निर्मलीकृतो यथा देहः तथा यतिदेह इत्यर्थः ॥ ४२ ॥

शौचं तु द्विविधं प्रोक्तं बाह्यमाभ्यंतरं तथा ॥
मृज्जलाभ्यां स्मृतं बाह्यं मनःशुद्धिस्तथांतरम् ॥ ४३ ॥

अतएव दृष्टांतदार्ष्टांतरूपेणोक्तस्य शौचस्य द्वैविध्यं स्मृतिं प्रमाणयति । शौचमिति । शौचं शुचेर्भावः । शौचं द्विविधम्– बाह्यमाभ्यंतरं तथा । बहिर्भवं किंस्वरूपमत आह । मृज्जलाभ्यां मृच्च जलं च मृज्जले ताभ्याम् । अंतःशौचमाह । मनःशुद्धिरस्तथांतरं रा-

गद्वेषादिनिवृत्तिपूर्वकनिर्विकल्परूपेण स्थितिः, पूर्वोक्ता चाशुद्धिशौंच प्रत्युक्तात् । मनःसहितकल्पितसर्वप्रपंचनिवृत्ति ॥ ४३ ॥

इतिस्मृत्या समादिष्टं यस्य शौचद्वयं भवेत् ॥
स यात्यधिकृतिं भिक्षुपादसंवाहनादिषु ॥ ४४ ॥

भिक्षुदेहस्पर्शे कस्याधिकारो यस्य शौचद्वयं तस्येत्याह । इतिस्मृत्ये॰ ति । पूर्वोक्तस्मृत्युक्तं यस्य शौचद्वयं भवेत् स भिक्षुपादसंवाहनादिषु भिक्षुचरणमर्दनादिषु अधिकारं प्रलभते । अथवा भिक्षुभिः पचते ज्ञाय॰ ते प्रकटीक्रियते भिक्षुपादः परमात्मा तस्य संवाहनं ज्ञानम् । आदिना वैराग्योपरतिपूर्वकजीवन्मुक्तिर्गृह्यते । नहि पूर्वोक्तशौचद्वयं विना ते भवत इत्यर्थः ॥ ४४ ॥

कविषयमात्रेच्छानिवृत्तौ तस्यादार्ढ्ये सतीतरेच्छानिवृत्तेः। कथं तर्हि 'बलवानिंद्रियग्रामो विद्वांसमपकर्षति' इति वचनमिति चेन्न, तस्य विविक्तसेवीतरपरत्वात्। तीव्रतरवैराग्यरक्षितमुमुक्षया तेषां तद्रक्षणं फलितमिति किं तन्निषेधवचनमत आह। नांगमंगेन संस्पृशेत् संन्यासी स्वांगेनान्यांगस्य स्पर्शनं न कुर्यात्। न च पूर्वमुक्तं पादसंवाहनमतः पूर्वोत्तरविरोध इति वाच्यम्, तस्यान्यपरत्वेन व्याख्यातत्वात्। निःसंगेन विविक्तसेविना भिक्षुणा भवितव्यमित्यत्र तात्पर्यात्। अतएवोक्तम्–'निःसंगतामुक्तिपदं यतीनां संगादशेषाः प्रभवंति दोषाः॥आरूढयोगोऽपि निपात्यतेऽधः संगेन योगी किमुताल्पसिद्धिः' इति बादरायणेन ॥४५॥

श्राद्धोऽधिकारी विधिषु न्यायविद्भिरुदाहृतः॥
निषेधेषु पुनर्मूढः श्राद्धश्चाश्राद्ध एव च ॥ ४६ ॥

ननु विधिनिषेधाधिकारी कोऽस्तीत्यत आह। श्राद्ध इति। श्रद्धा गुरुशास्त्रवाक्यविश्वासरूपाऽस्यास्तीति श्राद्धः, अर्श आद्यच्। श्रद्धावान् विधिषु निषेधेष्वधिकारी उदाहृतः। यथा" स्वर्गकामो यजेत अहरहःसंध्यामुपासीत" इत्यादिवाक्यविहितयागसंध्योपासनादिषु श्रद्धावानधिकारी। न्यायविद्भिः मीमांसाधिकरणतात्पर्यज्ञैः कथिते निषेधे विधौ च किं तत्त्वविदधिकृतोऽस्त आह। पुनर्मूढः, पुनःशब्द एवार्थः। मूढ एवाधिकारी न तत्त्ववित्, तस्य कर्तृत्वाभावात्। 'तत्त्ववित्तु महाबाहो गुणकर्मविभागयोः॥ गुणागुणेषु वर्तंत इति मत्वा न सज्जते' इति स्मृतेः। मूढस्य कर्तृत्वे स्मृतिरपि– 'प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः॥ अहंकारविमूढात्मा कर्ताहमिति मन्यते॥' निषेधवाक्यं न कलंजं भक्षयेदित्यादि तत्रापि मूढः अज्ञः' कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः,' इतिस्मृतेरधिकारी श्राद्धश्च। ननु 'अकुर्वन्विहितं कर्म निंदितं च समाचरन्॥ प्रसक्तश्चेंद्रियार्थेषु नरः पतनमृच्छति' इत्यादिस्मृतेर्निषिद्धाचरणस्य प्रत्यवायजनकत्वात्। निषिद्धे कर्मणि श्रद्धावतः कथं प्रवृत्तिरत आह। अश्राद्ध एवेति। अनिष्टाचरणसमये श्रद्धावत्वा-

मद्यात् वल्कटे रागे सति बुद्धिभ्रंशो भवति ततो मूढस्य प्रमादिनः कर्त्तव्याकर्त्तव्यविचाराभावेन श्राद्धोत्पादकवाक्यास्फूर्तौ निषेधे प्रवृत्तिसंभवात् । विवेकाभावे किं किं न कुर्वंति सर्वमनिष्टमाचरंति अतएव निःसंगतायाः मुक्तिपदत्वमुक्तम् । व्यामोहाहृते श्लोके संगस्यानर्थजनकत्वं गीतायाम्— संगात्संजायते कामः कामात्क्रोधोऽभिजायते ॥ क्रोधाद्भवति संमोहः संमोहात्स्मृतिविभ्रमः॥स्मृतिभ्रंशाद्बुद्धिनाशो बुद्धिनाशात्प्रणश्यति ॥ विवेक एव पुरुषस्तन्नाशो नष्ट एवेति तद्व्याख्यातृभिरुक्तात्पुरुषत्वाभावादश्राद्ध एवेति भावः । एवश्चौ च प्रसिद्धिवाचकः ॥ ४६ ॥

श्वचांडालादिभिः स्पृष्टा विषयासंगदूषिता ॥
योषित्परमहंसस्य स्पृशत्यंगं कथं मम ॥ ४७ ॥

प्रसंगमाप्त विधिनिषेधाधिकारिणमुक्त्वा प्रकृतमाह । श्वचांडालेति । श्वानश्च चांडालाश्च ते आदयो येषां तैः स्पृष्टा विषयासंगदूषिता विषयाणामासंगः आसक्तिः तेन दूषिता योषित् नारी मम परमहंसस्यांगं कथं स्पर्शं कर्तुमर्हा इति । अथवा परमहंसस्यांगं स्वरूपं सच्चिदानंदरूपम्, " असंगो न हि सज्जते " इतिश्रुतेरसंगं श्वादिभिः स्पृष्टा श्वादिभक्ष्ये देहे ऽध्यासवती अतएव विषयासक्ता वृत्तिः कथं स्पृशति । पूर्णानंदं विरक्तैरनुभूयमानं न केनापि प्रकारेण प्राप्नोति । तथाच श्रुतिः— " दूरात्सुदूरे तदिहांतिके च " इति, बहिर्मुखानां कोटिजन्मभिरप्यप्राप्यत्वात् । अर्थस्तु पूर्वभागस्योक्त एव, विरक्तानां तु तत् बह्वांतिके आत्मैव यथाकाशादिपूरितघटात् अत्रादौ निःसारितेऽप्याकाशं तदस्थमवशिष्टं तथा ऽऽत्मातिरिक्तनिषेधे आत्मा ब्रह्मैवेत्यभिप्राये विषयांधकूपपतितानां परब्रह्मदर्शनं दुर्लभमित्यर्थः ॥ ४७ ॥

स्वलोऽङ्गुल्याऽपि संस्पृष्टः स्कंधमारोहतीति यत् ॥
वदंति वृद्धा दुःशीले तत्तथ्यं रचितं त्वया ॥ ४८ ॥

हे मिथ्रो मया ते क्रिमपकृतमत आह । खल इति । खलः पूर्वापरविचारशून्यः अंगुल्याऽपि संस्पृष्टः । अविवेकनादिसमुबायकः । स्कंधं स-

मारोहतीति यद्वृद्धा वदंति तत्त्वया तथ्यं सत्यं रचितं संपादितम् । यथांगुलीस्पृष्टा केनचिच्छिष्टेन भ्रांत्या काचिन्नारी तत्पुरुषस्कंधारोहणमिव कृत्वा तेन पुरुषेणासंबद्धेनापि स्वं संबद्धं सत्यमिव करोतीति लोके प्रसिद्धम् । तथा हे चित्तवृत्ते दुःशीले मत्तोऽतिरिक्तत्वेन सदसद्भ्यामनिरूपिणीयतया इदं जगन्मयि चिद्रूपे त्रिकालमसदपि तथ्यं रचितमिव भातीत्ययमेवापकार इति भावः ॥ ४८ ॥

स्पृशेन्न किंचित्संन्यासी तं च नान्यो नरः स्पृशेत् ॥
बाह्याभ्यंतरशुद्ध्याढ्यो निवसेत्स्फटिकोपमः ॥ ४९ ॥

हे चित्तवृत्तेऽतएव निषेधः श्रूयते इत्याह । स्पृशेदिति । संन्यासी किंचिद्वस्तु रागादिद्वाराऽनर्थजनकं न स्पृशेत्, च पुनः अन्यो नरः तं संन्यासिनं न स्पृशेत् । तर्हि संसारे भिक्षुः कथं संतिष्ठेदित्याशंक्य समाहितो रागद्वेषरहितस्तिष्ठेदिति सदृष्टांतमाह । बाह्येति । जगत् द्विविधं बाह्यमाभ्यंतरं च तस्य शुद्धिः तद्विषयस्फुरणाभावः । न च दर्पणसदृशे मनसि पदार्थे प्रतिबिंबिते कथं तत्स्फुरणाभावः इति वाच्यम् । यथा स्वप्रतिबिंबिते वस्तूनि दर्पणकर्तृकस्फुरणाभावः स तथा भिक्षुमनसि संकल्पाभाव इत्याह । स्फटिकोपमः उपाधिसन्निधानेऽपि यथा स्फटिकस्तथा निःसंकल्पो वसेदित्यर्थः तथा च स्मृतिः–रागद्वेषवियुक्तैस्तु विषयानिंद्रियैश्चरन् ॥ आत्मवश्यैर्विधेयात्मा प्रसादमधिगच्छति ॥ न चांगस्पर्शस्य पूर्वमुक्तत्वात्पुनरुक्तिरितिवाच्यम्, पूर्वमंगस्पर्शनिषेधोऽत्र वस्तुमात्रस्य निषेधात्, भिन्नार्थविवक्षायाः पुनरुक्तेः कथांतरैरप्यदूषितत्वात् ॥ ४९ ॥

अप्रक्षालितकंथा ये ये चाप्रक्षालितांबराः ॥
अप्रक्षालितशय्याश्च ये चाक्षालितदंडकाः ॥ ५० ॥

यथा के स्प्रष्टव्या अत आह, चतुर्भिरप्रक्षालितेत्यादिभिः । न प्रक्षालिता कंथा यैः । न प्रक्षालितमवरं वस्त्रं यैः । अप्रक्षालिता शय्या शयनस्थानं यैः । न प्रक्षालितो दंडो यैः ते स्मृत्यादिविहिताचाररहिता इ-

त्यर्थः । "आचारहीनं न पुनंति वेदाः" इत्यादिवचनैराचारस्यापि समतत्वात् । वस्तुतस्तु पूर्वविशेषणेन स्थूलशोधनम्, द्वितीयेन सूक्ष्मस्य, तृतीयेन 'शय्यामहं द्वादशमेक आहु' ' इत्यत्राहंत्वस्य शय्यात्वेन वर्णनादहंपदार्थस्य, चतुर्थेन कायवाङ्मनोरूपत्रिदंडस्य शोधनं बोध्यमिति ॥ ५० ॥

ये धातुसंग्रहोद्युक्ताः ये मठेष्वधिकारिणः ॥
ये यानारूढकुणपाः स्त्रीसंभाषणलोलुपाः ॥ ५१ ॥

पुनः कथंभूताः त्वक्कूर्चकस्पर्शार्हाः । ये धातुसंग्रहोद्युक्ताः धातूनां कांचनादीनां संग्रहः तद्युक्ता उद्योगवंतः । ये मठेषु अधिकारवंतः मदीयत्वाभिमानवंतः । ये यानेष्वश्वादिष्वारूढाश्च ते कुणपाः मृतदेहतुल्याः 'अश्वारूढं यतिं दृष्ट्वा' इत्यादिनिषेधलंघिनः । स्त्रीसंभाषणादिषु लोलुपा अत्यासक्ताः अष्टांगमैथुनवर्जितब्रह्मचर्यरहिताः । अथवा दधाति धारयति पोषयंति स्वसत्तास्फुरणेन धातुश्चिद्धातुः तस्य संग्रहः । उपादेयत्वेन ग्रहणं ज्ञानं विषयत्वेन तत्र उद्युक्ता । विषयानंदप्रादुर्भावार्थं भोगसाधनविषयसंपाद नतत्परा इत्यर्थः । पूर्वोक्तमठान्यतमशरीरमठेषु अधिकारिणः पुनः पुनः शरीरग्रहणबद्धपरिकरा, यानं देहस्तत्रारूढा अहमभिमानवंतः, अतएव कुणपाः मृतदेहतुल्या', यतो देहमात्मत्वेन पश्यंति अतएव स्त्रीसंभाषणलोलुपाः । स्त्रीरूपावृत्तिस्तया संभाषणं पुरंजनवत् तदनुकरणम् । यथा पुरंजनः स्वपत्न्यामासक्तः तस्यां भुंजानायां भुंक्ते तस्यां पिबत्यां पिबति गच्छंत्यां गच्छति उदासीनायामुदासीनो भूततुल्योऽभूत्, जाग्रत्यां जागर्तिस्म शयानायां शेतेस्म पश्यंत्यां पश्यतिस्म स्पृशंत्यां स्पृशति जिघ्रंत्यां जिघ्रति रसं एह्लत्यां रसमनुभवति शब्दं शृण्वंत्यां शब्दं शृणोतिस्म स्वभावतो न किंचित्करोतिस्म इति भागवतप्रसिद्धेः । ध्यायंतीवेति श्रुतस्तदशा इमे वस्तुतस्तु एवेत्यर्थः ॥५१॥

वृथाकथानुरक्ता ये परिहासप्रियाश्च ये ॥
ये चाथर्वणकार्यज्ञा ये विज्ञा लोकसंग्रहे ॥ ५२ ॥

वृथाकथानुरक्ताः निष्फलश्रवणलोलुपाः परिहासः मिथो येषाम् । ये

चाऽथर्वणवेदविहितमारणोच्चाटनादिकार्यकुशलाः । ये लोकानां संग्रहणं प्रियवचनादिना स्वसमीपप्रापणं तत्र विज्ञाः विशेषज्ञानवंतः । द्वितीयपक्षेऽपि दृथाकथा आत्मज्ञानतत्साधनकथाव्यतिरिक्तकथा मृगतृष्णाकथावत् वृथैव वासिष्ठोक्तधातृकथावत् । अत एवं परिहासो धनार्थं धनस्वामिनो हास्यादिना प्रसन्नताकरणं प्रियं येषाम् । तदपि मृगतृष्णाजलपानवदशांतिकरमेव विषयाशया यद्यत्कर्म क्रियते तद्बंधकमेव जन्ममरणादिप्रवाहसाधनं तत्र चतुराः । अतएव लोकस्य परलोकसाधने विज्ञाः ॥ ५२ ॥

**प्रमादिनो बहिश्चित्ताः पिशुनाः कलहोत्सुकाः ॥**
**यतिपाशाश्चित्तवृत्ते स्प्रष्टव्यास्ते त्वया खलु ॥ ५३ ॥**

अतएव प्रमादिनः मृत्युयुक्ताः 'प्रमादं वै मृत्युकरं ब्रवीमि' इति स्मृतेः । तत्र हेतुः । बहिश्चित्ता बहिर्मुखा विषयाभिनिवेशवंतः परमेश्वरविमुखा इति यावत् । पिशुनाः सूचकाः स्वदोषमाच्छाद्य परस्मिन्नविद्यमानमपि दोषं कथयंतः तदुपजीव्यघातकाः, स्वजीवनविघाते प्राप्ते कलहोत्सुकाः कलहे वाग्युद्धे उत्कंठावंतः एनं मारयित्वाऽपि स्वकार्यं साधयिष्याम इत्यादिवचनकथने आदरवंतः । यतिपाशा कुत्सितयतयः । यतिशब्दस्येंद्रियसंयमे शक्तिः । तदर्थाभावे दरिद्रे लक्ष्मिशब्दवत् नाममात्रेण यतयः हे चित्तवृत्ते त्वया स्प्रष्टव्याः त्वत्कर्तृकस्पर्शनार्हास्ते एव । खल्विति उत्प्रेक्षाव्यंजकशब्दवत्तथा स्पर्शनिषेधे एव तात्पर्यमिति भावः ॥ ५३ ॥

**शयानमपि यं कंचिन्नरं विज्ञो न बोधयेत् ॥**
**किं पुनर्योगिनं प्रत्यक्चिताकंचुकितांबरम् ॥ ५४ ॥**

कैमुतिकन्यायेनापि शयानबोधने दोषमाह । शयानमिति । विज्ञः निषेधशास्त्रज्ञः यं कंचिन्नरमपि शयानं निद्रागतं न बोधयेत् । किं पुनः प्रत्यक्चिताकंचुकितांबरं प्रतीचः सर्वांतःप्रकाशस्य चिता ध्यानं तदेव कंचुकितांबरं यस्य चोल्वस्राच्छादितदेहं यथा देह आच्छादितो न

चाक्षुषो भवति तथा प्रत्यक्परायणस्य योगिनः परमहंसस्य, यत्तु ''अस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्'' इति श्रुत्युक्तसर्वात्मभावं प्राप्तस्य समाहितस्य प्रतीतिमात्रजगत्प्रतीतिरहितस्य बोधने यत्पापं तत्किं वक्तव्यमिति ॥ ५४ ॥

**आस्तामेतच्चित्तवृत्ते नापराधोऽयमत्र ते ॥**
**त्वत्संवादापराधोत्थो दंडोऽयं पारमेश्वरः ॥ ५५ ॥**

'सुखस्य दुःखस्य न कोऽपि दाता परो ददातीति कुबुद्धिरेषा' इतिवचनमाश्रित्य 'गुणदोषदृशिर्दोषः गुणस्तुभयवर्जितः' इत्याश्रित्य वा भिक्षुस्तस्या नार्या दोषाभावं प्रकटयन्नाह । आस्तामिति । हे चित्तवृत्ते एतत् त्वत्कर्तृदोषोद्भावनं भवतु एतद्विचारेणालं कृत्यं नास्ति । 'महात्मान परच्छिद्रं न पश्यंति' इत्यनेन द्योतितमित्याशयेन नापराधोयमत्र ते अत्र मदुत्थापने तवापराधो नास्ति, अयं परमेश्वरेण संपादितः दंडः । ननु 'नादत्ते कस्यचित्पापं न चैव सुकृतं विभुः' इत्यादिवचनेन परमेश्वरस्य समदर्शित्वेन ये तन्निष्ठास्ते समदर्शिनो भवंति । 'शुनि चैव श्वपाके च पंडिताः समदर्शिन.' इतिवचनात् तस्य समदर्शित्वे किं वक्तव्यमत आह । त्वत्संवादापराधोत्थः त्वया सह मत्कर्तृकं यत् न संभाषेदिति निषेधलंघनं स ममापराध एव तेन उत्थः उत्पन्न इत्यर्थ. ॥ ५५ ॥

**अथ ब्रूहि मयोदीर्णं त्वया भद्रेऽवधारितम् ॥**
**न वेति नहि जानेऽहमन्यत्रासक्तमानसः ॥ ५६ ॥**

यावत्संशयादिकं न निवृत्तं मुमुक्षोस्तावद्देशिकेनोपदेश. कर्तव्य इति शिक्षयति । अथेति । हे भद्रे मया उदीर्णमुपदिष्टं त्वयाऽवधारितं निश्चितं न वा इत्यहं नो जाने । हिर्हेत्वर्थः । तत्र हेतुमेवाहमन्यत्रासक्तमानस· अन्यत्रान्यस्मिन्प्रपंचभिन्ने ब्रह्मणि आसक्तं लीनं मनो यस्य सः । 'भिक्षुणा सर्वदा ब्रह्मपरायणेन समाहितेन भवितव्यम्' इत्युपदिष्टमनेनेति ॥ ५६ ॥

**विवेकाश्रमसंभाषामेषाऽऽकर्ण्यापि न व्यथाम् ॥**
**निस्तवृत्तिः प्राप किंतु स्वापराधममन्यत ॥ ५७ ॥**

भिक्षुवचनं श्रुत्वा सा नारी किं चकार 'सत्संगतिः कथय किं न करोति पुंसाम्' इत्यादिवचनस्तुत्या तत्संगतिमाहात्म्यं प्रकटयंती जगाद । विवेकेति । एषा साक्षिप्रत्यक्षसिद्धा चित्तवृत्तिः विवेकाश्रमस्य संभाषां वचनं श्रुत्वाऽपि व्यथां पीडां न प्राप किंतु स्वस्या अपराधं, तुरेवार्थः । स्वदोषेन तु स्वान्पेन अमन्यत । किंशब्द उत्प्रेक्षाव्यंजकः ॥ ५७ ॥

**दुष्टस्यापि स्वभावेन दैवात्सत्संनिधौ सति ॥**
**न प्रसीदति यस्यात्मा प्रस्तरः स कथं नरः ॥ ५८ ॥**

यस्य सत्संगतावपि न परमेश्वरसंमुखता तस्य बोधनमशक्यमित्याह । दुष्टस्यापीति । स्वभावेन दुष्टस्य दोषसहितस्यापि दैवात् पूर्वजन्मसंपादितपुण्यवशात् सत्संनिधौ सति यस्यात्मा मनः न प्रसीदति निर्मलं सत्सत्परायणं न भवति स प्रस्तरस्तृणसमूहः तृणकाष्ठादिरचितो नराकार एव कथं नरः । नरजन्मसाध्यनारायणतत्त्वाविर्भावः फलं तदस्य नास्ति तज्जन्मवृथैवेति भावः ॥ ५८ ॥

**उवाच च परिम्लानमुखांभोजा ऽपरायतः ॥**
**नम्रीभूतशिरा इत्थं प्रश्रयन्याययुग्वचः ॥ ५९ ॥**

पुनः सा नारी किं चकारात आह । उवाचेति । सा नारी इत्थं वक्ष्यमाणप्रकारेण वचः उवाच । कीदृशम् । प्रश्रयन्याययुक् प्रश्रयः शिक्षितत्वं न्यायो युक्तयविरुद्धत्वं धर्माविरुद्धत्वं ताभ्यां युज्यते प्रश्रयन्याययुक् नारी । कथंभूता । नम्रीभूतशिराः । कुतः । परिम्लानमुखांभोजा ऽपरायतः भिक्षुसमाप्युरयापनापरायतः परितो म्लानं ग्लानं मुखांभोजं मुखांबुजं यस्याः सा ॥ ५९ ॥

**परापराधसंभूतः सतां कोपाद्युशुक्षणिः ॥**
**पराज्ञानपरामर्शं विना शाम्यति नार्णवैः ॥ ६० ॥**

ननु किमर्थमयं भिक्षुरपराधक्षमार्थं प्रार्थ्यते एतदपराधाभिदाहो जठा-

दिना शाम्यतीत्यत आह, परापरावेति षड्भिः । परापराधसंभूतः परस्य परमेश्वरस्यापराधः श्रुतिस्मृतिरूपाज्ञापालनाभावः तेन संभूतः उत्पन्नः सतां शिष्टानां वेदानां वा कोपाग्निशिखाग्निः कोपाग्निः पूर्णानंदाज्ञानजन्यदाहो बाह्यविषयमात्याऽमाध्या वा न शाम्यति । अर्णवैः सप्तसमुद्रैः । संकोचे मानाभावेन ब्रह्मांडपदार्थैरपि । देवादिभोगामृतादिभिरज्ञानजन्यकामाग्निर्न निवर्तते । कथं तर्हि शाम्यत्यत आह । पराज्ञानपरामर्शं विनापरस्य ब्रह्मणः शुद्धस्याज्ञानं तदाश्रितं तद्विषयकं च जीवाश्रयत्वे आत्माश्रयाद्यापत्तेः, ईश्वराश्रयत्वे तस्याज्ञत्वापत्तेः, 'इष्टापत्तेर्यः सर्वज्ञः' इत्यादिश्रुतिविरोधापत्तेः । अतएवोक्तं वृद्धैः—आश्रयत्वविषयत्वभागिनी निर्विभागचितिरेव केवला ॥ पूर्वसिद्धतमसो हि पश्चिमो नाश्रयो भवति नापि गोचरः ॥ निर्विभागचिति जीवेश्वरविभागवर्जितं शुद्धं चैतन्यम् । एवार्थमाह, केवला । तत्र हेतुमाह । पूर्वसिद्धतमसः अनाद्यज्ञानस्य । हि हेतौ । पश्चिमः पश्चाद्भवः अज्ञानोपाधिकृतः । कार्यकारणोपाधिको जीव ईशो वानाश्रयः नापि गोचरः विषय इति । तस्यार्थः । कथं तर्हि जीवाश्रयाज्ञपदेति तदाश्रयत्वेन प्रतीयमानत्वात् । न च यद्यदाश्रयत्वेन प्रतीयते तस्यैव तदाश्रयत्वम् । यथा भूतलाश्रितो घटस्तत्रैवेति वाच्यम्, शुक्त्याश्रयत्वेन प्रतीतस्यापि रजतस्य शुक्त्यधिष्ठानचैतन्यस्यैवाश्रितत्वेन स्वीकारात् । तथा जीवाश्रयत्वेन प्रतीतमपि तदधिष्ठाने शुद्ध एव स्वीकृतं न च तत्रापि विक्षेपादिकं करिष्यति तच्छुद्धतामपहरिष्यतीति न वाच्यम्, तत्र वास्तवसंबंधाभावात् । न च कल्पितसंबंधस्याज्ञानमयुक्तत्वात् तत्संबंधस्य स्वमयोऽपत्वे आत्माश्रयत्वापत्तेः स्वसंबंधार्थमन्यस्वीकारे परस्पराश्रयः तृतीये चक्रकं तुर्येऽनवस्था इति वाच्यम्, दीपादिवत् स्वपरव्यवहारनिर्वाहकत्वस्वीकारात् । यथा परमते एकस्यैव भेदस्य घटादेः स्वपरव्यवहारनिर्वाहकत्वं तथाऽस्यापि पराज्ञानं तस्य परामर्शो विचारः तज्जन्यं बोधं विना न निवर्तते । तथाचोक्तम्—" ईदृशी राम मायेयं या स्वनाशेन हर्षदा ॥ न लक्ष्यते ... नश्यति ' इति । अतएव माऽज्ञानं

न पातीति माया, न ज्ञानं ज्ञायमानं तिष्ठति अज्ञानमित्यादिव्युत्पत्तिः ॥ ६० ॥

**मुने जिज्ञासयोपात्तं मच्चित्तं जनगर्हितम् ॥**
**प्रश्नौत्कंठ्यादविनयं नाज्ञासीत्तत् क्षमां कुरु ॥ ६१ ॥**

संप्रति स्वापराधं क्षमापयति । मुने इति । हे मुने मच्चित्तं जनगर्हितं जनैः शिष्टपुरुषैः गर्हितं निंदितं अविनय सन्यासीस्पर्शरूपमवज्ञातं नाज्ञासीत् । कुतः । प्रश्नौत्कंठ्यात् प्रश्नस्यौत्कंठ्यमुत्सुकत्वमत्यादरत्वम्, विपर्यातरास्फूर्तिपूर्वकतत्परायणत्वमिति यावत् । अतएव जिज्ञासया उपात्तं ग्रहीतं परिव्रीडया वनिताऽहं मत्स्पर्शनायोग्यः मया कथं स्पृश्य इति विचाररहितमतः क्षमामेव कुरु ॥ ६१ ॥

**किंचेयमफलायाच्ञा क्षमायाः पुरतस्तव ॥**
**सतां क्षमा हि सहजा न दीनवचनोद्भवा ॥ ६२ ॥**

ननु क्रुद्धः क्षमाप्यते संन्यासिनि कामाभावेन क्रोधानुत्पत्तेरत आह । किंचेयमिति च । हे मुने तव पुरतोऽग्रे क्षमाया याच्ञा अफला निष्फला । कुतः । हि यस्मात् सतां परमार्थनिष्ठानां क्षमा सहजा स्वाभाविकी 'क्षमासारा हि साधवः' इति वचनात् । न दीनवचनानि 'क्षमस्व प्रभो करुणानिधे' इत्यादिनि तदुद्भवा अद्वैतपरायणानां न भवतीत्यर्थः ॥ ६२ ॥

**देहादिभ्यो विविक्तं यत्कृपाऽपि छायया त्वया ॥**
**आत्मतत्त्वं प्रकटितं मया तदवधारितम् ॥ ६३ ॥**

मयोपदिष्टं त्वयाऽवधारित नवेति प्रश्नस्योत्तरमाह । देहादिभ्य इति । देहादिभ्यः देह आदिर्येषां मार्गेंद्रियांतःकरणानां देहादयस्तेभ्यो विविक्तं विविच्य गृहीत यदात्मतत्त्वं कृपाऽपि छायया भंग्या कुमारीपवनिक्षेदायपूर्वं दृष्टांतरूपया त्वया प्रकटितं प्रादुर्भावित तदवधारितं निश्चितम् ॥ ६३ ॥

**को मां मूर्खा विपर्यस्तां तत्रापि स्त्रीत्वदूषिताम् ॥**
**आत्मतत्त्वज्ञतां सद्यो नयेत्त्वत्प्रभवाहते ॥ ६४ ॥**

न च इतःपरं अन्यस्मादुपदेशं शृणु इति वाच्यम्, अत आह । को मा मिति । हे भगवन्मां मूर्खां मोहावृतामतएव विपर्यस्ताम् । तत्रापि विपर्यस्तत्वेऽपि । अपिः संशयसूचक संदिग्धां स्त्रीत्वदूषितां स्त्रीभावेन शास्त्रनिषिद्धाम् । त्वत्प्रभवादत्रोपदेशादिति शेषः । ते विनार्थे त्वत्प्रभुत्वमुपदेशं विना सद्यस्तत्कालं आत्मतत्त्वज्ञतामात्मनस्तत्त्वमनारोपितरूपं याथार्म्यं तज्ज्ञतां तत्त्वसाक्षात्कारतां केन कोऽपि नयेत् प्रापयेत्, न कोपीत्यर्थः ॥ ६४ ॥

इदानीं ज्ञातुमिच्छामि तेजोरूपत्वमात्मनः ॥
प्रमाणेन च युक्त्या च प्रसादं मयि तत्कुरु ॥ ६५ ॥

ननु देहादिविलक्षण आत्मा त्वया निर्धारितोऽधुना किं जिज्ञाससेऽत आह । इदानीमिति । आत्मनः तेजोरूपत्वमिदानीं ज्ञातुमिच्छामि आत्मनस्तेजोरूपत्वमप्युक्तमेवात आह । प्रमाणेन च युक्त्या च मय प्रमाणेन निश्चितयुक्त्या न निश्चितमतः प्रमाणं युक्तिश्च वक्तव्या । नतु निष्कामस्य मम किं प्रयोजनं करुणां विना न किंचिदित्याशयः प्रसादं मयि तत्कुरु तस्मात्करुणामात्रसारत्वान्मयि प्रसाद एव करणीयः ॥ ६५ ॥

इत्युक्तः स तया प्राह विवेकाश्रमयोगिराट् ॥
प्रमाणं तेऽभिधास्यामि तेजोरूपत्व आत्मनः ॥ ६६ ।

भिक्षुः प्रमाणाभिधानं प्रतिजानीते । इत्युक्त इति । स विवेकाश्रमयोगिराट् तया चित्तवृत्त्या इति पूर्वप्रकारेण उक्तः प्राह । आत्मनः तेजोरूपत्वे प्रकाशरूपत्वे प्रमाणं कथयिष्यामि । ते तुभ्यम् ॥ ६६ ॥

जनको नाम वैदेहः आसीद्ब्रह्मविदां वरः ॥
स्वमंदिरमुपायांतं याज्ञवल्क्यार्ययोगिनम् ॥ ६७ ॥

आत्मनो ज्योतीरूपतां वर्णयितुं बृहदारण्यकथामुपक्षिपति । जनक इति । प्रसिद्धः वैदेहः विदेहानां देशविशेषाणां राजा बभूव ब्रह्मविदां वरः श्रेष्ठः । याज्ञवल्क्येति नाम्ना प्रसिद्धतानिवरं स्वमंदिरं समायांतम् ॥ ६७ ॥

विधिना पूजितं भक्त्या वरदानसमुत्सुकम् ॥
कामप्रश्नं वरं वव्रे स तस्मै तं वरं ददौ ॥ ६८ ॥

विधिना शास्त्रोक्तप्रकारेणार्चितं भक्त्याऽऽराध्यत्वेन ज्ञात्वा वरदाने उत्कंठावंतं कामप्रश्नं इच्छाविषयीभूतं वरं वव्रे वृतवान्। स याज्ञवल्क्यः तस्मै जनकाय तं यथेच्छं वरं ददौ दत्तवान्। ननु ब्रह्मविदां वरत्वे प्रश्नानुपपत्तिरिति भाविवृत्तमादायोपपत्तेः आख्यायिकायाः ब्रह्मविद्यायाः स्तुत्यर्थत्वात्। नारदसनत्कुमारादिसंवादवत् ब्रह्मलोके परस्परं सनकादिकथावच्च ॥ ६८ ॥

तत्र प्रश्नेषु बहुषु सत्स्वप्यन्येषु भूपतिः ॥
किं ज्योतिरेष पुरुष इति पप्रच्छ योगिनम् ॥ ६९ ॥

बृहदारण्यके प्रथमब्राह्मणे-" जनको ह वैदेहो बहुदक्षिणेनेजे " इत्यारभ्याख्यायिका, तत्राश्वलादिभिः प्रश्नैर्याज्ञवल्क्येनोत्तरितैर्याज्ञवल्क्यं ब्रह्मज्ञानिनं निर्धार्य जनक. 'स एष नेतिनेतीत्यात्माऽगृह्यो नहि गृह्यते' इत्युपदिष्टः ' अभयं वै जनक प्राप्तोऽसि ' इत्यभयं प्रापितः द्वितीयब्राह्मणे जाग्रदाद्यवस्थाप्रवर्त्यज्योतकमेवात्मानं युक्त्याऽधिगमयितुं ज्योतिर्ब्राह्मणं " जनक ह वैदेहं याज्ञवल्क्यो जगाम " इत्यादिकं प्रवृत्तं तत्र याज्ञवल्क्यं " किं ज्योतिरयं पुरुषः " इत्यादि " स्वयंज्योतिः सम्राडिति होवाच " इत्यादिनोपदिष्टं ज्योतीरूपं ब्रह्म तदेव भिक्षुः प्रमाणं दर्शयन् अर्थतो निरूपयति, तत्र प्रश्ने ष्विस्यादिना। तत्र संवादे बहुषु प्रश्नेषु सत्स्वप्यन्येषु राजाऽऽश्वलादिकृतेषु भूपतिर्जनकः योगिनं ब्रह्मसाक्षात्कारवंतं याज्ञवल्क्यं किं ज्योतिरेष पुरुषः कार्यकारणसंघातरूपः शिरःपाण्यादिमान्पिंडः किं ज्योतिरस्य विद्यते स किं ज्योतिषा ज्योतिषाऽनुगृहीतोऽयमागमनादिव्यवहारं करोति तत्किं देहादिस्तदतिरिक्तं वा इति पप्रच्छ ॥ ६९ ॥

आदित्यज्योतिरेवायमिति प्रत्याह तं मुनिः ॥
तस्योपपादकं चाह याज्ञवल्क्यो नृपं प्रति ॥ ७० ॥

अप राजाऽतिरिक्तज्योतिरेव पृच्छतीति तथाविधमेवेतरज्योतिरेव पृच्छतीति तथाविधमेवेतरज्योतीरहितस्वप्नावस्थायां विवक्ततया बोधयितुं जागरिते तावद्दृष्टांतभूतान्यादित्यादिवागंतानि ज्योतींष्युपन्यस्यन्नाह याज्ञवल्क्यः। आदित्येति । मुनिस्त्वं मत्याह इति प्रतिवाक्यमुवाच । इति किम्। आदित्यज्योतिरेवायं अप पुरुषः आदित्यज्योतिरेव नान्यज्ज्योतिः। च पुनः याज्ञवल्क्यः नृपं राजानं प्रति तस्य आदित्यज्योतिरिति प्रतिवचनस्य उपपादकमुपपत्तिप्रतिपादकं वाक्यमाह ॥ ७० ॥

आस्ते पल्येति यत्कर्म कुरुते पुरुषो ऽत्र यत् ॥
विपर्यैति तदादित्यज्योतिषैवेति निश्चिनु ॥ ७१ ॥

किं तद्वाक्यमत आह। आस्ते उपविशति पल्येति गच्छति गत्वा क्षेत्रादिकर्म करोति पश्चाद्विपर्यैति भूयो निवर्तते तदुपवेशनादिकमादित्यज्योतिषैवेति । आदित्येनैव चक्षुषोऽनुग्राहकेण देहकरणाद्यतिरिक्तेनैव ज्योतिषा निश्चिनु ज्योतिर्निश्चयं कुरु ॥ ७१ ॥

पुनः पप्रच्छ तं भूप आदित्ये ऽस्तमिते सति ॥
किं ज्योतिरेप पुरुष इति सो ऽप्यब्रवीत्ततः ॥ ७२ ॥

सूर्येऽस्तमिते किं ज्योतिरिति राजा पप्रच्छेत्याह। पुनरिति। पुनर्भूपो जनकः तं याज्ञवल्क्यं पप्रच्छ। आदित्येऽस्तमिते अदर्शनं प्राप्ते सति किं ज्योतिरेप पुरुष इति। सोऽप्यब्रवीत्ततः याज्ञवल्क्योऽप्युवाच॥७२॥

चंद्रमा एप पुरुषज्योतिरित्यवधारय ॥
उपपत्तिं तु पूर्वोक्तामेव विद्धि धराधिप ॥ ७३ ॥

तिमुवाचात आह। चंद्रमा इति। पुरुषज्योतिः पुरुषस्य ज्योतिः चंद्रमा एव इत्यवधारय। हे धराधिप पृथ्वीपते उपपत्तिं तु पूर्वोक्तां चंद्रमसैव ज्योतिषास्ते पल्येति इत्यादिकं विद्धि जानीहि ॥ ७३ ॥

पुनः पृच्छति भूपाले वह्निं वाचं च योगिराट् ॥
ज्योतिष्ट्वेनाभ्यधात्पूर्वोपपत्तिपरिबृंहितम् ॥ ७४ ॥

किं ज्योतिरिति भूपः पप्रच्छेत्याह । पुनः पृच्छतीति । योगिराट्

ज्ञानीशिरोमणिः पुनर्भूपाले पृच्छति सति वह्निमंग्नि ज्योतिष्ट्वेनाभ्यधात् ज्योतिरकथयत् । पूर्वोपपत्तिपरिबृंहितं पूर्वोपपत्तिः ' अग्निनैवायं ज्योतिषास्ते पल्येति' इत्यादिका तया परिबृंहितं संयुक्त इत्यभ्यधादितिक्रियाविशेषणं वह्निविशेषणं वा । अग्नौ शांते च पुनः वाचं ज्योतिष्ट्वेनाभ्यधादिति संबंधः । अन्यत्पूर्ववत् । वाक्शब्दोऽत्र गृह्यते नेंद्रियम् । किमस्य ज्योतिष्ट्वमिति चेच्छब्दे श्रुतेऽर्थप्रतीतेरेव अंधकृततरान्यादौ यत्र स्वहस्तादिकमपि न दृश्यते, बाह्यज्योतिषोऽभावे चेष्टानिरोधे प्राप्ते तत्र वाचैव व्यवहारः । अत्र वाग्ज्योतिर्ग्रहणं गंधादेरप्युपलक्षणं तेषामपि शब्दवत्प्रवृत्त्यादिहेतुत्वात्, ज्ञातानामज्ञातानां वेत्यन्यदेतत् ॥ ७४ ॥

**सर्वेषां ज्योतिषां प्रत्यस्तमये सति योगिराट् ॥**
**किं ज्योतिरेव पुरुष इति पृष्टे तु भूभुजा ॥ ७५ ॥**

एतावता यो व्यवहारः स व्यवहर्तृदेहेंद्रियाद्यतिरिक्तज्योतिःसाध्यो यथाऽऽदित्यादिसाध्यो जाग्रद्व्यवहार इति व्याप्तौ सिद्धायां स्वप्नादावपि बंधुसमागमनादिकार्यदर्शनाद्भवितव्यं तत्राप्यतिरिक्तेन केनचिज्ज्योतिषेत्यनुमानं, तत्प्रयोगस्तु स्वप्नव्यवहारः अतिरिक्तज्योतिःसाध्यः व्यवहारत्वात्, जाग्रद्व्यवहारवदिति ज्योतिर्मात्रे च बुद्धे पूर्वेषां ज्योतिषां स्वप्नेऽनुपलब्धियाधितत्वात्तत्र किं ज्योतिरिति विशेषं पृच्छति राजेत्याह । सर्वेषामिति । सर्वेषां ज्योतिषां प्रत्यस्तमये सति किं ज्योतिरेव पुरुष इति भूभुजा जनकेन पृष्टे सति पुनः अयं योगिराट् स्वयंज्योतिरिति प्राहेति द्वितीयपूर्वार्द्धेनान्वयः । नच जाग्रति स्वयंज्योतिर्नास्ति किमिति वाच्यम् । नित्यत्वेन सदातनत्वाज्जाग्रत्यिनास्तीति वक्तुमशक्यत्वेऽपि तत्र व्यवहारसाधकान्यज्ज्योतिःसवलितत्वात्पृथक्त्वेन विवेचयितुमशक्यत्वात् । तथाच श्रुतिः--"आत्मैवास्य ज्योतिर्भवतीत्यात्मनैवायं ज्योतिषाऽऽस्ते पल्यते कर्म कुरुते विपल्येतीति कतम आत्मेति योऽयं विज्ञानमयः प्राणेषु हृद्यंतर्ज्योतिः पुरुषः" । अस्यार्थः-- तस्मादात्मज्योतिषोऽर्थांतरत्वेन सूर्यादिविलक्षणकार्येणाव्यभिचारमाह आत्मनेत्यादिना । न्यायतो निर्णीतत्वात्संघातातिरिक्तस्य तथा-

पि सूक्ष्मन्यापस्यं दुर्ज्ञेयत्वादनुग्राहकस्यानुग्राह्यसमानजातीयत्वदर्शना- चात्मरूपे संदिहानः पृच्छति, कतम इति । बुद्ध्यादिषु कतम आत्मेति पृष्टे तत्स्वरूपं तद्भिन्नत्वेन दर्शयति । योऽयमिति । हे राजन् यस्त्वया पृष्टो विज्ञानं बुद्धिस्तन्मयः तत्प्रायः प्राणेष्विति सामीप्यलक्षणासप्तमी । दशेंद्रियप्राणसमीपस्थो हृद्यंतर्ज्योतिरितिलक्षणया हृदयस्थबुद्ध्यावंतः वर्त- मानं ज्योतिरात्मा आत्मनैवायं ज्योतिषेत्युपक्रमात्पुरुषः, तथा च वि- ज्ञानमयः प्राणेषु ज्योतिर्हृदि पुरुष इत्येतैः पंचविशेषणैः बुद्धिमात्रादि- तरतदृशबुद्धिवृत्त्यव्यापकत्वानीत्येताः पंच शंकाः क्रमेण निरस्ताः ॥७५॥

स्वयंज्योतिरिति प्राह मत्युत्तरमयं ततः ॥
अतः श्रुतिः प्रमाणं ते ज्योतीरूपत्व आत्मनः ॥७६॥

एषु सत्सु पूर्णः कथमित्याशंकामाविद्यकत्वेन मिथ्यात्वात्तत्तदुपाधिभि- स्तादृशो भातीत्यर्थः । क उत्तरग्रंथः परिहरिष्यतीत्याशयेन स्वयंज्यो- तिर्निर्णयमुपसंहरति । अतः श्रुतिरिति । हे चित्तवृत्ते आत्मनो ज्यो- तीरूपत्वे ते तुभ्यं श्रुतिः प्रमाणमुक्तमिति ॥ ७६ ॥

युक्तिं तत्राभिधास्यामि तां सम्यग्व्यवधारय ॥
ज्योतिष्टं नाम किं ब्रूहि यदत्राक्षिप्यते त्वया ॥७७॥

आत्मनो ज्योतीरूपत्वे श्रुतिः प्रमाणमुत्तमाधिकारिणं मत्युक्तं, संमति मध्यममुद्दिश्य युक्तिमभिधातुं प्रतिजानीते । युक्तिमिति । तत्र ज्योति- ष्ट्वे कथयिष्यामि तां युक्तिं सम्यक् निश्चिनु । हे चित्तवृत्ते यत् ज्यो- तिष्ट्वं अत्र अस्मिन्प्रसंगे त्वया क्षिप्यते पृच्छ्यते नाम प्रसिद्धं त्वं ब्रूहि। अंतर्ज्योतिषि आत्मनि ज्योतिष्ट्वं जातिरुपाधिर्वा बाह्यज्योतिषि शु- क्लभास्वररूपत्वमुष्णस्पर्शत्वं वा उदयास्तमयरूपं सूर्यचंद्रादि अनिधनं सहेतुकमन्यभास्यं वा उदयास्तरहितं अनिधनमहेतुकं सर्वभासकं सर्व- रभास्यं स्वयं प्रकाशं वा इति ॥ ७७ ॥

जातिरूपं यदीष्टं ते तदात्मनि न विद्यते ॥
असामान्यविशेषात्मा यतो ऽयं परमेश्वरः ॥ ७८ ॥

तत्राचमनद्य प्रत्यावष्टे जातिरूपं कारणतावच्छेदकतया कार्यतावच्छेदकतयाऽनुगतप्रत्ययावलंबनतया वा तार्किकैर्जातिः स्वीक्रियते 'निगुर्णं निष्क्रियं शिवमद्वैतम्' इत्यादिश्रुतेस्तत्रोक्तप्रकारेष्वन्यतमस्य तत्प्रयोजकस्याभाव इत्याशयेनाह । यदीदं ते तदात्मनि न विद्यते । कुतः । अयं परमेकलः "अयं यत्साक्षादपरोक्षात्" इति श्रुतेरपरोक्षः एक एवैकल अतएव परं माया तत्कार्यस्पर्शशून्यं ज्योतिर्विशेषणम् । किंत्वर्थेऽव्ययं वा । एकत्वादेव जातिप्रयोजकः सामान्यविशेषभावो नास्तीत्याह । असामान्यविशेषात्मा इति । सामान्यं गोत्वादिखंडमुंडादिव्यक्तिर्विशेषः उपलक्षणं व्याप्यव्यापकभावस्य यथा घटत्वं व्याप्यं पृथ्वीत्वं व्यापकं तद्व्यापकमपि द्रव्यत्वमित्यादिवैशेषिकप्रसिद्धं तत्सर्वं समवायखंडनेन खंडितम् ।"असंगो नहि सज्जते"इत्यादिश्रुतेरखंडे निर्गुणे निर्द्रव्ये संबंधरहिते ब्रह्मणि जातिर्नास्ति कथं तद्धेकल इति एकोऽभावइतिवददोषः, एतेन उपाधिपक्षोऽपि निरस्तो वेदितव्यो निर्धर्मकत्वादेवेति ॥ ७८ ॥

शुक्लभास्वररूपत्वमुष्णस्पर्शत्वमेव च ॥
यदि ज्योतिष्ट्वमिष्टं ते तत्प्रतीचि दुरासदम् ॥ ७९ ॥

द्वितीये बाह्यज्योतिःपक्षे आह । शुक्लेति । शुक्लभास्वररूपत्वं उष्णस्पर्शत्वं, तेजसि बाह्ये वर्तमानौ रूपस्पर्शौ तन्निष्ठौ जातिविशेषौ प्रतीचि तत्सर्वांतरे चेतने दुर्घटावित्याह । यदि ज्योतिष्ट्वमिति ॥ ७९ ॥

अरूपं तमथास्पर्शमाहुर्वेदांतवादिनः ॥
उदयास्तमयत्यक्तमनिधनमहैतुकम् ॥ ८० ॥

कथं दुरासदमत आह । अरूपमिति । वेदांतवादिनः अरूपं रूपरहितं अस्पर्शं स्पर्शरहितं ज्योतिर्वदंति । तथाच प्रतीचो निरतिशयसूक्ष्मत्वादिप्रतिपादनपरा कठश्रुतिः— अशब्दमस्पर्शमरूपमव्ययं तथा रसं नित्यमगंधवच्चयत् ॥ अनाद्यनंतं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात्प्रमुच्यते ॥ अस्यार्थः— स्थूलसूक्ष्मतारतम्यविश्रांतिस्थानत्वादविप्रकृष्ट

ब्रह्म श्रुत्या प्रतिपादयिषितम् । तत्र स्थूला तावदियं पृथ्वी शब्दस्पर्शरूपरसगंधोपचिता सर्वेंद्रियविषयभूता, तथा शरीरं तत्रैकैकगुणापकर्षे सूक्ष्मत्वमहत्त्वविशुद्धत्वनित्यत्वादिदृष्टं जलादिषु यावन्नभ इति ते गंधादयः सर्वे एव स्थूलादिकारणाः शब्दांता यत्र न संति किमु सूक्ष्मत्वादिनिरतिशयत्वमित्येतद्दर्शयति श्रुतिः । ब्रह्म अव्ययं यद्धि शब्दादिमत्तद्व्येति इदं तु अशब्दादिमत्त्वादव्ययं न व्येति न क्षीयतेऽत एव च नित्यं यद्धि व्येति तदनित्य इदं तु न व्येति अतो नित्यं इतश्च नित्यमनादि न आदिः कारणमस्य तदिदमनादि यच्चादिमत्तत्कार्यत्वादनित्यं कारणे प्रविलीयते यथा पृथिव्यादि, इदं तु सर्वकारणत्वादकार्यमकार्यत्वान्नित्यं न तस्य कारणमस्ति यस्मिन् लीयते तथा, अनंतं न अंतं कार्यमस्य तदनंतमतोऽपि नित्यं, महतो बुद्ध्याख्यात् परं विलक्षणं नित्यविज्ञप्तिस्वरूपत्वात्सर्वसाक्षीसर्वभूतात्मत्वाद्ब्रह्म, ध्रुवं कूटस्थं ब्रह्मात्मानं निचाय्य ज्ञात्वा मृत्युमुखादविद्याकामकर्मरूपात् विमुच्यते वियुज्यते इति । एके आहुरित्याह । वेदांतवादिनः उपनिषदर्थज्ञाः चतुर्थं पंचमं च निषेधयन् षष्ठं पक्षं स्वीकुर्वन्नाह । उदयेति । सूर्यादिवाह्यतेजोभिन्नमनिधनमविधनं विद्युदादिविलक्षणमहेतुकमकारणम् ॥८०॥

स्वयंप्रकाशमानं सद्यदन्यस्य प्रकाशकम् ॥
तज्ज्योतिरिष्टं तव चेत्तदात्मैव न चापरम् ॥ ८१ ॥

स्वयंप्रकाशमानं सत् यदन्यस्य सर्वस्य प्रकाशकम् । हे चित्तवृत्ते तज्ज्योतिस्तवेष्टं चेत् तज्ज्योतिरात्मैव, न चापरं दृश्यत्वादिना मिथ्याभूतमिति ॥ ८१ ॥

तदेव ज्योतिषां ज्योतिरिति श्रुतिवचस्फुटम् ॥
भांतं तमनुभातीदं सर्वमित्यपरं वचः ॥ ८२ ॥

तत्र श्रुतयः प्रमाणमित्याह । तदेवेति । तद् परात्मकं ज्योतिर्ज्योतिषामादित्यादीनामपि ज्योतिरवभासकम् । तथा च श्रुतिः- "तद्देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम्" इति । देवा अमृतममरणधर्मकं

आयुरित्येवम्, ह प्रसिद्धम्, ब्रह्म उपासते इति आयुष्कामेनापि तद्गुणं ब्रह्मोपास्यम् । रोचनार्था फलश्रुतिरितिन्यायेन ब्रह्मात्मज्योतिष्येव तात्पर्यं श्रुतेरित्याह । श्रुतिवचस्फुटमिति नित्यात्मज्योतिषि प्रमाणमित्यर्थः । तत्प्रकाशेनैव सर्वस्य प्रकाश इत्याह । भांतमिति । तथाच कठवचनम्—न तत्र सूर्यो भाति न चंद्रतारकं नेमा विद्युतो भाति कुतोऽयमग्निः ॥ तमेव भांतमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति ॥ श्रुत्यर्थस्तु—न तत्र तस्मिन्स्वात्मभूते ब्रह्मणि सर्वविभासकोऽपि सूर्यः तद्ब्रह्म न प्रकाशयति तथा न चंद्रतारकं नेमा विद्युतो भांति कुतो युष्मद्गोचरोऽग्निः । किं बहुना यदिदमादित्यादिकं भाति तमेव परमेश्वरं भांतं दीप्यमान अनुभाति सर्वमनुदीप्यते । यथा जलोल्मुकादि अग्निसंयोगादग्नि दहंतमनुदहति न स्वतः, तद्वत्तस्यैव भासा दीप्त्या सर्वमिदं सूर्यादि भाति । यत एवं तदेव ब्रह्म भाति विभाति. कार्यगतेन विविधेन भासा तस्य ब्रह्मणो भारूपत्वं स्वतोऽवगम्यते । नहि स्वतो विद्यमानं भासनमन्यस्य कर्तुं कः शक्यते घटादीनामन्यावभासकत्वादर्शनाद्भारूपाणां चादित्यादीनां दर्शनादिति ॥ ८२ ॥

**तस्य भासा सर्वमिदं विभातीति श्रुतिस्तथा ॥**
**सर्वं येन विजानीयाद्विजानीयात्तु केन तम् ॥ ८३ ॥**

मुंडकमपि " तमेव भांतमनुभातिसर्वम् ॥ तस्य भासा सर्वमिदं विभाति " इत्याह । तस्येति । अस्यार्थ उक्त एव, सर्वप्रकाशकस्यान्याभासस्य त्वमित्यर्थकं श्रुत्युत्तरमाह । सर्वमिति । येन सर्वं प्रपंचं विजानीयात्त मेत्यगात्मानं स्वप्रकाशं केन विजातीयेन तच्छब्दसत्ताप्रकाशेन येन विजानीयात् । तथा बृहदारण्यकम्—"येनेदं सर्वं विजानाति तं केन विजानीयात् " एतत्पूर्ववाक्ये यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येदित्यादिना कैवल्यावस्थायां विषयविज्ञानाभावमन्वयव्यतिरेकाभ्यां प्रतिपाद्य तत्रैव कैमुतिकन्यायं दर्शयितुमविद्यायामपि साक्षिणो ज्ञानाविषयत्वमाह । येनेति ॥ ८३ ॥

आत्मानं केन जानीयादित्यर्था चापरा श्रुतिः ॥
उक्तप्रकारं ज्योतिष्ट्वं प्रतीचः स्फुटयत्यलम् ॥ ८४ ॥

यत्राविद्यावस्थायामन्योन्यं जानाति तत्रापि येन कूटस्थावबोधेन व्याप्तो लोकः सर्वं जानाति तं साक्षिणं केन करणेन कार्यविज्ञाता विजानीयात्र केनापि चक्षुरादेर्विषयग्रहण एवोपक्षीणत्वात्, किं पुनर्वक्तव्यं विद्यावस्थायामसंसारिणं आत्मनो ज्ञानविषयत्वमित्यर्थः । "परां विज्ञातारमरे केन विजानीयात्" इति । अरे मैत्रेयि यः पुनः केवलोऽद्वयो विद्यावस्थो विज्ञातैव वर्तते तं विज्ञातारं केन विजानीयात् केनापीत्यर्थः । परां श्रुतिं पठति । आत्मानमिति । आत्मानं सदैकप्रकाशं केनचिद्रूपेण न जानीयात्, ब्रह्मविदश्चत्यन्यथात्मविज्ञानात् । विलापितकर्तृक्रियाफलादिरूपप्रपंचस्य सर्वात्मभूतस्यात्मभिन्नकारणाद्यभावादित्यर्थः । उक्तप्रकारमुदयास्तमयत्यक्तमनिंधनमहेतुकं स्वयंप्रकाशमानं सवदन्यस्य प्रकाशकं ज्योतिष्ट्वं प्रतीचः प्रत्यगात्मनः ज्योतिरूपत्वमित्यर्थकितव्याख्याना चापरा बृहदारण्यश्रुतिः । चादन्यापि । अलमतिशयेन स्फुटयति तात्पर्येण प्रतिपादयतीत्यर्थः ॥ ८४ ॥

यदि चात्मा तु नैवं स्याज्जडं स्यात्तज्जडत्वतः ॥
जगदांध्यप्रसक्तिः स्यादेषा युक्तिः परा मता ॥ ८५ ॥

एवं चानुभूतिः अनुभूतिव्यवहारहेतुप्रकाशः अनुभूतित्वात्, यन्नैवं तन्नैव यथा घटः न चैतदनुमानवेद्यत्वे ऽवेद्यत्वहानिरेवद्वेद्यत्वाभावे साध्या प्रसिद्धिरस्य नैष्फल्यापत्तिरिति वाच्यम् । अवेद्यत्वपुरस्कारेणैवानेन बोधितत्वात् वृत्तिव्याप्यत्वस्य स्वीकाराच्च । ननु हेतुरस्तु साध्यं माभूदिति विपक्षवाधं कुतर्कभावादप्रयोजकमिदमित्यत आह । यदि चात्मा त्विति । यदि चात्मा तु नैव स्यात् स्वप्रकाशो न स्यात्तज्जडत्वतः जडत्वापत्तिरेव विपक्षबाधकस्तर्क इति । नन्वत्रापीष्टापत्तिरेवेत्यत आह । जगदांध्यं प्रसक्तिः स्यादिति । सर्वस्य व्यवहारस्य प्रकाशाप्यत्वात् तदभावे व्यवहारोच्छेद एव स्यात् इत्यर्थः, इत्याशये-

नाह । एषा युक्तिः परा मता प्रकृतसाध्यसाधनेनेयमित्यर्थः ॥ ८५ ॥

**अत्र तूदाहरंतीममितिहासं नवोद्भवम् ॥**
**यस्याकर्णनमात्रेण तमः पुंसां विनश्यति ॥ ८६ ॥**

'त्वं पदार्थविवेकाय संन्यासः सर्वकर्मणाम् ॥ श्रुत्या विधीयते यस्मात्तत्त्यागी पतितो भवेत्' इति वचनमाश्रित्य त्वंपदार्थनिर्णयप्रधानं पितृपुत्रसंवादरूपमितिहासं स्वप्रकाशनिर्णायकं पारोक्ष्येण निरूपयन् प्रतिजानीते । अत्रेति । अत्र स्वयंप्रकाशे इतिहासमुदंतं पूर्ववृत्तं वा, नेत्याह । नवोद्भवं नूतनं रचितम् । यथा वासिष्ठे हस्तिवणिजादिदृष्टांतेन चूडालयाः स्वपतिः शिखिध्वजः प्रतिबोधितः तथाऽपूर्वकथया भिक्षुणा सा बोध्यते । तस्य फलमाह । यस्येति । यस्य नूतनेतिहासस्य श्रवणमात्रेण पुंसां मुमुक्षूणां साधकानां वा तमः ताम्यति ग्लानिं जाग्रदादिविक्षेपं गच्छति अनेनेति तमः अविद्या विनश्यति आकाशे बालकल्पितपक्षवदत्यंताभावं गच्छति ॥ ८६ ॥

**संभेदो भुवि भद्रे ऽस्ति गोदागरुडगंगयोः ॥**
**हरिद्राख्यनदी मुद्राविद्रावितजनाशुभा ॥ ८७ ॥**

तमितिहासमेव वर्णयति, कवलसमाप्तिपर्यंतम् । संभेद इति । हे भद्रे कल्याणरूपे । आत्मतत्त्वपरायणत्वमेव भद्रत्वम् । भुवि भरतखंडावच्छिन्ने पुरुषदेहे 'पुरुषे त्वेव आविस्तरामात्मा' इतिश्रुतेरुक्तत्वात् । 'अंगुष्ठमात्रः पुरुषः' इत्यत्र मनुष्याधिकारत्वाच्छास्त्रस्येति व्याख्यातवान्, अत्राप्युपक्रमाच्च । गोदागरुडगंगयोः गीर्वाणी शब्दात्मिका "वाचारंभणं विकारो नामधेयम्" इति श्रुतेः । प्रपंचदीपः दीपते शोध्यतेऽनया इति तत्त्वंपदार्थशोधनरूपांतःकरणवृत्तिर्गोदा च । गिरति ग्रसति मायां तत्कार्यं गरुडो ब्रह्मबोधः स एव गंगा, अविद्यापातकनिवर्तकत्वात् । तयोः संभेदः संगमः । नन्वस्मिन्देहे पदार्थशोधनपूर्वकब्रह्मविद्यैव कथमित्यत आह । हरिद्रेति । हरिःहरिवत् सिंहवत् भयंकरत्वात् संसारं द्रावयति हरिं विष्णुं द्रावयति भापयतीति वा हरिद्रा विष्णुभक्तिनदी गं-

गादिसदृशी, द्रवत्ववैशिष्ट्यसादृश्यात् पापशोषकत्वाच्च । तां विशिनष्टि । मुद्राविद्रावितजनाशुभा मुद्रया नवविधालक्षण्या विद्रावितं जनानां भक्तानामशुभं पापं यया सा नवधा च श्रवणादिभेदेन । एतदन्यतमस्वीकारेऽपि कृतार्थतामगमन् पूर्वे । तथाचोक्तम्— 'श्रीविष्णोः श्रवणे परीक्षिदभवद्वैयासकिः कीर्तने प्रह्लादः स्मरणे तदंघ्रिभजने लक्ष्मी पृथुः पूजने ॥ अक्रूरस्त्वभिवंदने कपिपतिर्दास्ये ऽथ सख्ये ऽर्जुनः सर्वस्वात्मनिवेदने बलिरभूत्कृष्णाप्तिरेषां परम्' इति । भक्तितत्त्वं तु प्रथमकवले एव निरूपितमिति ॥ ८७ ॥

हारिद्रमंभः पक्षेण सेवितं पापतापनुत् ॥
दिनत्रयेण च तथा सेवितं वांजरं जलम् ॥ ८८ ॥

ननु हरिद्रासेवने किं फलमत आह । हारिद्रमिति । हारिद्रं हरिद्राया इदं हारिद्रमंभो जलं भगवत्स्वरूपश्रवणादिजन्यमंतःकरणद्रवणपूर्वकनेत्रादिजलं तदुपलक्षितनेत्रादिविक्रियारूपोनुभावः । व्यभिचारी निर्वेदादिरूपोभावः तत्संयोगेन रसरूपतयाऽभिव्यक्तो भगवदाकाररूपवाख्यः स्थायीभावः परमानंदसाक्षात्कारात्मकः प्रादुर्भवति स एव भक्तियोगः । पक्षेण भगवत्पक्षेण सेवितम् । पापतापनुद् सर्वपापनिवर्तकम् । नन्वीदृशभगवत्प्रेमलक्षणभक्तिप्राप्तिरेव कथमित्यत आह । दिनत्रयेणेति । यद्दुकालेनानुष्ठितेन निष्कामकर्मणा पापनिवृत्तिर्भवतीत्याह । तथेति । पापतापनुदित्यर्थः । किं तदाह । सेवितं वांजरं निष्कामं कर्मानुष्ठितं निष्कामं कर्म वजरा इति वक्ष्यमाणत्वात्कर्मैवबंधकत्वान्नानुष्ठेयमिति न च वाच्यम्, ईश्वरार्थे कर्मणो विहितत्वात् । तथाच स्मृतिः— 'यज्ञार्थात्कर्मणोऽन्यत्र लोकोऽयं कर्मबंधनः' इति । तथाचेदृशकर्मणा भक्तिर्जायते इत्यर्थः ॥ ८८ ॥

दर्शनादेव गौतम्या जलं पूर्वोक्तकार्यकृत् ॥
मंदर्शनादेव तथा सांगमं जलमीरितम् ॥ ८९ ॥

ननु निष्कामस्वधर्मनुष्ठातुः किं फलमत आह । दर्शनादिति । गौतम्याः

ह्यज्ञानप्रवाहरूपायाः जलं पूर्वोक्तकार्यकृत् असंभावनादिरूपपापनिवर्तकम् । ततः किं भवत्यत आह'। संदर्शनादेव तयेति । सांगमं जलं तत्त्वंपदार्थयोरैक्यज्ञानं तथा पूर्वोक्तकार्यकृत अज्ञानतत्कार्यत्रिविधतापनिवर्तकम् ॥ ८९ ॥

रटंतीह पुराणानि ब्राह्मयादीनि पुनः पुनः ॥
वंजरासंगमादन्यत्तीर्थं पुंसां न मुक्तिदम् ॥ ९० ॥

नन्वत्र किं प्रमाणमत आह । रटंतीहेति । पुराणानि पुराणस्य विष्णोः पूर्णस्य प्रतिपादकानि । ब्राह्म्यादीनि ब्रह्मणः इदं प्रत्यगभिन्नं परमार्थरूपं ब्राह्मं आदि मुख्यं प्रतिपाद्यं येषां तानि ब्राह्म्यादीनि वेदांतमहावाक्यानि यथाश्रुत एवार्थोऽस्तु तत्रापि त्वमहंशब्दलक्ष्यार्थः । साक्षात्प्रत्यक्चितिः परेति स्कांदादीनि प्रवर्तंते पुनःपुनरभ्यासेन स्तुत्यादिरूपेण रटंति प्रतिपादयंति । किं रटंतीत्यत आह । वंजरासंगमादन्यत्तीर्थं पुंसां न मुक्तिदमिति पूर्वोक्तात्संगमात् । अन्यत्समुच्चयादिकं मोक्षप्रापकं न । "तमेव विदित्वाऽतिमृत्युमेति" इतिश्रुतेः ॥ ९० ॥

अवसद्ब्रह्मशर्माऽस्मिन् संगमे कश्चन द्विजः ॥
सुमंगलेति तस्यासीत्पत्नी मंगलदर्शना ॥ ९१ ॥

ननु वंजरासंगमतीर्थस्नानाधिकारी क इत्यत आह । अवसद्ब्रह्मेति । अज्ञातं ब्रह्मैवाधिकारी, अस्मिन्संगमे एतत्संगमप्राप्तिसाधनमनुष्यदेहे । तदेवाधिकारिणं निर्दिशति । कश्चन द्विज इति । वेदाधिकारित्वाद्विजग्रहणम् । 'पत्युर्नोयज्ञसंयोगे' इत्यादिस्मृतेर्दंपत्योः कर्मणि सहाधिकारात्तस्य द्विजस्य पत्नीमाह । सुमंगलेति । भाविमंगलसाधनत्वात्सुमंगलेति तन्निर्देशः कल्याणमार्गप्रवृत्ता बुद्धिरेव विवक्षिता तत्पदेनेति ॥ ९१ ॥

तयोर्गोदावरीमात्रसेवासंसक्तचित्तयोः ॥
भूयान्कालो व्यतीयाय पुत्रप्राप्तिमभीप्सतोः ॥ ९२ ॥

तौ किं कुर्वाणौ कालमतिवाहयांचक्रतुरत आह । तयोरिति । ब्रह्म-

सुमंगलयोः गोदावरीमात्रसेवासंसक्तचित्तयोः गोदा ब्रह्मविचारात्मिका वृत्तिः तस्या आवरणं तिरस्करणं मापणं वा यस्यां सा गोदावरी क-र्मावरणवृत्तिस्तन्मात्रस्य सेवा तत्रासक्तं लग्नं चित्तं ययोस्तौ तयो' । पुत्रप्राप्तिमभिप्सतोः पुन्नाम्नो नरकात्त्रायते अविद्याकामकर्मरूपसंसारच-कात्त्रायते वा पुत्रो विवेकः तत्प्राप्तिमिच्छतोः ॥ ९२ ॥

पुत्रकामनयैवोच्चैः कुर्वतोः कर्म किंचन ।

अंत्ये वयसि संप्राप्ते बभूवांधः सुतः किल ॥ ९३ ॥

एवं सतो' किं जातमत आह । पुत्रेति । पुत्रकामनयैव ईदृशपुत्रेच्छयै-व न तु संसारफलवासनया । उच्चैरुत्कृष्टं कर्म निष्कामं अतएव किंचन फलानुद्देश्यम् । अंत्ये वयसि चरमजन्मनि । अंधो रूपादिविषयलाल्सा-रहितः । किलेति उपेक्षायामध्यात्मपक्षव्यंजकशब्दः ॥ ९३ ॥

तं तादृशमभिप्राप्य पुष्टयोस्तुष्टचित्तयोः ।

कालः कश्चिद्व्यतीयाय व्यग्रयोस्तस्य पालने ॥ ९४ ॥

तं प्राप्य किं जातमत आह । तमिति । तादृशं विवेकरूपम् । पुष्टयोः पूर्णयोर्विषयप्राप्त्यादितापरहितयोरतएव तुष्टचित्तयो' । चित्ततोष एव तत्फलमित्यर्थ' । तस्य विवेकस्य पालने विविक्तसेवीत्यादिना रक्षणे व्यग्रयो' लग्नयो' । रक्षणं विना कुसंगादिना व्याहतिर्माभूदतो रक्षणं विधेयमिति भावः ॥ ९४ ॥

स चोपनीत' प्रज्ञावान् प्राप्तवेदः स्वकात्पितुः ।

यथाशक्ति स्वधर्मेषु रतः पित्रोर्मलादभूत् ॥ ९५ ॥

कथामस्तावार्थमाह । स चेति । उपनीत' 'अष्टवर्षं ब्राह्मणमुपनयीत' इतिविधेरुपनयनं प्रापितः । ब्राह्मणेन निष्कारणो वेदः षडंगो ध्येयो ज्ञेयश्चेति वचनमाश्रित्याह । प्राप्तवेद इति । स्वकात्पितुः आख्यातोप-योगे इति पंचमी । अथ वेदाध्ययनानंतरं किं चकार तदनुष्ठानं चकारे-त्याह । यथाशक्तीति । शक्तिमनतिक्रम्य यथाशक्ति, यथार्थेऽव्ययीभावः । स्वधर्मेषु वेदविहितेषु नित्यादिकर्मसु रतः प्रीतिमान् । 'नित्यनैमित्ति-

कैरेव कुर्वाणो दुरितक्षयम्' इत्यादिश्रुतेः । पित्रोर्बलात् माता च पि-
ता च पितरौ तयोरेकशेषः । अथवा माता गायत्री पिता आचार्यः त-
त्कृतं द्विजत्वम् । तद्बलं विना धर्मानुष्ठानानुपपत्तेरिति भावः ॥ ९५ ॥

एवं तस्मिन्सदाचारे ब्रह्मचारी व्रते स्थिते ॥
ब्रह्मशर्मा पिता वृद्धस्तत्समीपमुपागतः ॥ ९६ ॥

ततः किं वृत्तमत आह । एवं तस्मिन्निति । सदाचारो सतां स्वतःप्रमा-
णभूतानां वेदानां आचारे वेदविहितेऽनुष्ठाने सतां शिष्टानां आचरणे
ब्रह्मचारिव्रते । ब्रह्मचारिणो व्रतमष्टांगमैथुनवर्जनरूपम् । तथाच मेधाति-
थिः– 'स्मरणं कीर्तनं केलिः प्रेक्षणं गुह्यभाषणम् ॥ संकल्पोऽध्यवसा-
यश्च क्रियानिर्वृत्तिरेव च ॥ एतन्मैथुनमष्टांगं प्रवदंति मनीषिणः ॥ विप-
रीतं ब्रह्मचर्यमेतदेवाष्टलक्षणम्' इति । ब्रह्मणि निर्गुणे चरतीति ब्रह्म-
चारी तत्परस्तं तत्रस्थिते तदनुष्ठानरते ब्रह्मशर्मा पिता पालकः तत्स-
मीपं तस्य पुत्रस्य सन्निधिं प्राप्तो विचारार्थम् ॥ ९६ ॥

दुःखितः पुत्रांधत्वं ज्ञात्वा दुःखित्वं गतः । हे तात पुत्र रत्नापहारेण प्रायो बाहुल्येन नरा अंधतां यांति ॥ ९८ ॥

हसन्नुवाच तं पुत्रः पितर्जन्मांतरे कृतम् ॥
हेतुं किमत्र वदसि दृष्टमत्र वदाम्यहम् ॥ ९९ ॥

पितृवाक्यं श्रुत्वा पुत्रः किमाहात आह । हसन्निति । पुत्रः तं पितरमुवाच । हे पितः जन्मांतरे कृतमात्रांधत्वे किं कारणमदृष्टं वदसि, अत्रांधत्वे दृष्टं नैयायिकादिप्रसिद्धं हेतुं वदाम्यहम् ॥ ९९ ॥

कारणस्था गुणाः कार्ये आरंभंते गुणानिति ॥
लोका वदंति शुभ्रेभ्यस्तंतुभ्यो नासितः पटः ॥ १०० ॥

तमेवाह । कारणस्था इति । कारणस्था गुणाः कार्ये गुणकार्ये गुणानारभते इति लोका नैयायिकादयो भणंति । कुत्र दृष्टमत आह । शुभ्रेभ्यः शुक्लेभ्यः तंतुभ्योऽसितो नीलः पटो न भवतीत्यर्थः ॥ १०० ॥

तदंधात्पितुर्जातश्चक्षुष्मान्स्यामहं कथम् ॥
श्रुत्वाश्चेत्कथमंधो ऽहमिति तन्मद्वचः शृणु ॥ १०१ ॥

दार्ष्टांतमाह । तद्वदिति । अंधात्पितुर्जातोऽहं नेत्रवान् कथं भवेयम् । अहमंधोऽधजन्यत्वात्, श्वेततंतुजन्यश्वेतपटवत् । अत्र स्वरूपासिद्धिं शंकते, श्रुत्वाश्चेदिति तां परिहर्तुमाह । तदिति ॥ १०१ ॥

तत्त्वज्ञानमियं गोदा निष्कामं कर्म वंजरा ॥
उभयोः संगमे स्नाना मुक्तिं यांति न संशयः ॥ १०२ ॥

अथ गोदादिपदान्यप्रसिद्धार्थानि स्वयं तत्प्रमाण्याह । तत्त्वज्ञानमिति । विधेयान्वितत्वेनेयं निर्देशः स्पष्टार्थः ॥ १०२ ॥

यत्र गोदावरी देवी संगता वंजराजलैः ॥
तत्र स्नानं निवासश्च मुक्तिहेतुः सतां मतः ॥ ३ ॥
बाग्मती नदी यत्र दृश्यते गौतमीजले ॥
प्रयागस्मरस्य तीर्थस्य किंकरीभावमिच्छति ॥ ४ ॥

यत्र निष्कामकर्मजन्यांतःकरणशुद्ध्या ज्ञानोत्पत्त्या । मुक्तिर्भवतीत्यर्थः

गाभ्रमती नदी वेदांतवाणी । गौतमीजले ब्रह्मप्रमाणे प्रवृत्ते प्रमेये गाकल्यतां गते तस्य तीर्थस्य ज्ञानरूपस्य प्रयागः किंकरीभावमिच्छति । मनःशोधनद्वारा तच्छेपत्वादिति भावः ॥ ३ ॥ ४ ॥

**ब्रह्मज्ञानप्रवाहो ऽयं सर्वकर्मापनोदकृत् ॥**
**गौतमी नाम तस्यां या जलबुद्धिर्भ्रमस्तु सः ॥ ५ ॥**

देहबंधकप्रदे कर्मणि जाग्रति कथं ज्ञानमित्याशंक्याह । ब्रह्मज्ञानेति । ब्रह्मज्ञानप्रवाहोऽयं निदिध्यासनरूपः साक्षिभास्यः तज्जन्यः साक्षात्कारः । सर्वकर्मापनोदकृत् कर्मकर्तृदेहाद्यधिष्ठाने साक्षात्कृते सति पुनस्तत्कर्मणा विविक्तदृष्टेः कर्तृत्वाभावात्कर्माभावः । तथाच स्मृतिः— कर्मण्यकर्म यः पश्येदकर्मणि च कर्म यः ॥ स बुद्धिमान्मनुष्येषु स युक्तः कृत्स्नकर्मकृत् ॥ यः कर्मणि देहेंद्रियादिव्यापारे अकर्म कर्मात्यंताभावमिति, अकर्मणि अज्ञकृते अकर्मत्वाभिमाने कर्म पश्येत् । अज्ञो हि देहरूपो देहादीनां कर्मस्वभावत्वात् 'नहि स्वभावो भावानां व्यावर्तेतौष्ण्यवद्रवेः' इति ज्ञानं विना कर्मत्यागाभावः । अथवा ज्ञानमिति भावल्युडंतः । ब्रह्मज्ञानं प्रवाह इव निरंतरप्रकाशो गौतमी तस्यां गौतम्यां ब्रह्मरूपायां या जलबुद्धिर्जडज्ञानं जलपरिकल्पभावनात् । स भ्रमो विपर्यासः । यथासूर्यप्रकाशावच्छिन्ने देशे जलभ्रमः तथा प्रत्यगभिन्ने परे प्रपंचः कल्पित इति भावः ॥ ५ ॥

**तात ब्रह्मात्प्रमादाय मशको मारितस्त्वया ॥**
**पद्मोदा मुक्तिदां प्राप्य भुक्तिं प्रार्थितवानसि ॥ ६ ॥**

अथ सर्वसाधनशिरोमणि वैराग्यं निरूपयति । तातेति । हे पितः ब्रह्मार्थे जगद्भ्रमरूपं गृहीत्वा त्वया मशकः मारितरूपः क्षुद्रजंतुः मारणवियोगं प्रापितः । क्षुद्रपावनाकर्तृत्वात्पुरुषनिर्देशः । कथं मारितः इत्यत आह । पद्मोदां तत्त्वज्ञानसाधनभूतां तनुं लब्ध्वा भोगं याचितवानिति ॥ ६ ॥

**आकर्णयामि लोकेभ्य श्चरितं ते ऽद्भुतं महत् ॥**

**स्नानाग्निहोत्राण्यपि यत्त्वया पुत्रेच्छया कृतम् ॥ ७ ॥**

नन्वहं भुक्तिं कथं प्रार्थितवानत आह । आकर्णयामीति । हे पितःस्लोके-भ्यस्ते चरितं महदाश्चर्यं शृणोमि । किमद्भुतं शृणोषि । यद्यस्मात्त्वया स्नानाग्निहोत्राद्यपि पुत्रोत्पत्तीच्छया कृतम् । आदिना सर्वनित्यनैमि-त्तिकादिग्रहणम् । यैर्निष्कामकर्मभिर्मनःशुद्धिद्वारा नित्यानंदाविर्भावहेतु-ज्ञानं निष्पादनीयम् । तानि क्षुद्रानंदचरितार्थत्वेनोन्मत्तचेष्टावद्वैफ-ल्यं गमितानीत्यर्थः ॥ ७ ॥

**श्वशूकरादिभिः पुत्राः किं प्रार्थ्यन्ते न वल्लभाः ॥**
**तैः को वा क्रियते धर्मस्तदर्थमिति चिंतय ॥ ८ ॥**

ननु 'पुत्रेण लोकान् जयति अपुत्रस्य गतिर्नास्ति' इत्यादिवाक्यानां का गतिरित्याशंक्य विषयविपाकगमूर्छितचेतसां तादृगविषयविरहेण रुदतामन्योद्योगार्थमश्रुमार्जनमात्रं कृतं तैरिति यत्र सुतोत्पत्तिः सत्कर्म-जन्यात्र व्यभिचारं दर्शयति । श्वेति । श्वादिभिर्वल्लभाः प्रियाः पुत्राः किं प्रार्थ्यंते, अपितु नैव प्रार्थ्यंते । तैः श्वनकादिभिः को वा धर्मो वेदविहितो पुत्रेष्ट्यादिरूपो ऽनुष्ठीयते पुत्रार्थमिति त्वं विचारय, तथाच व्यतिरे-कव्यभिचार इत्यर्थः ॥ ८ ॥

**क्षणिकाय सुखायैव ग्राम्यधर्मं प्रकुर्वताम् ॥**
**नराणां सूकराणां वानुषंगिक्येव संततिः ॥ ९ ॥**

ननु मैथुनेन पुत्रोत्पादनार्थं प्रवृत्तानां तदुत्पत्तिर्दृश्यते इत्याशंक्य शीतकाले पाके प्रवृत्तस्य शीतनिवृत्तिवत् स्वतएव तदुत्पत्तिरित्याह । क्षणिकायेति । क्षणं नाशनशीलाय सुखायैवं ग्राम्यधर्म्यं स्त्रीभोगं कु-र्वतां नराणां सूकराणां वा संततिः पुत्रादिरूपा आनुषंगिकी एव स्वभावत एव सिद्धेति शेषः ॥ ९ ॥

**उत्पत्तिरिह जंतूनां पित्रदृष्टकृता नहि ॥**
**यदि स्यात्तान्' तर्हि स्युरेते पित्रकामयः कथम् ॥१२०॥**

ननु पित्रदृष्टेष्ट्यादिना पुत्रोत्पत्तिः श्रूयते कथमानुषंगिकीत्याशंक्याह ।

उत्पत्तिरिति । इहलोके जंतूनामुत्पत्तिः पित्रदृष्टकृता नहि । हि शब्दो ऽनुमानसूचकः । जंतूत्पत्तिः न पित्रदृष्टजन्या उत्पत्तित्वाद्धटोत्पत्तिवत् नवाप्रयोजकमित्याह । यदि स्यादिति । हे पितस्तर्हि पित्रदृष्टजन्यत्वे विट्क्रमयः कथं केनापि प्रकारेण नोत्पद्येरन् ॥ ११० ॥

**यत्र यस्य समुत्पत्तिः सा तत्तत्कर्मसंभवा ॥**
**पित्रोः क्लेशैरलं तत्र तत्फलव्यभिचारिभिः ॥ ११ ॥**

तदादृष्टं विना कथमुत्पत्तिरित्यत आह । यत्रेति । यत्र काले यस्य जतोः उत्पत्तिः प्रादुर्भावः स्यात् तस्य प्राणिनः कर्मसंभवा माता-पित्रोः क्लेशैः कृत्यं नास्ति । कीदृशैः । तत्तत्फलव्यभिचारिभिर्व्यभिचारस्य दर्शितत्वादिति भावः ॥ ११ ॥

**धर्मा एव कृताः कुर्युर्यदि संततिमीप्सिताम् ॥**
**ग्राम्यधर्म्यं विनाऽप्येते किं न दद्युः फलं स्वकम् ॥१२॥**

ननु धर्मः संतति करिष्यतीत्यत आह । धर्मा इति । यदि धर्मा एव कृता अनुष्ठिता ईप्सितां मनोभिलषितां संतति कुर्युः । एते श्रुतिस्मृतिप्रसिद्धाः स्वकं स्वीयं फलं न फल्गु तथाऽनशनशीलं स्त्रीसंबधं विना किं न दद्युः । अपितु दद्युरेवेति भावः ॥ १२ ॥

**दृष्टकर्मभिरुत्पाद्ये योऽदृष्टं हेतुमिच्छति ॥**
**भोजनोद्भवतृप्त्यर्थं स यागादि करिष्यति ॥ १३ ॥**

नन्वेवमदृष्टस्य कुत्रापि हेतुत्वं नास्ति किमित्याशंक्य दृष्टे सत्यदृष्टकल्पनाया अन्याय्यत्वादिति न्यायेनाह । दृष्टेति । दृष्टकर्मभिः प्रत्यक्षसिद्धदेहादिव्यापारैः उत्पाद्ये उत्पत्तियोग्ये कार्ये यो ऽदृष्टं धर्मं हेतुं कारणं वांछति । स पुरुषः भोजनोद्भवतृप्त्यर्थं अन्नभक्षणजन्यतृप्त्यर्थमत्र देहे यागादि करिष्यति ॥ १३ ॥

**जाता अपि सुतास्तत्र त्यजंते यस्य दीच्छया ॥**
**तदात्मज्ञानमुत्सृज्य किं सुतः प्रार्थितस्त्वया ॥ १४ ॥**

किंच पुत्रादिविनया विनाशिसातिशयादिदोषदूषितमुत्ताभामार्थमित्यंते नि

त्यक्तुरसमाप्त्यर्थमेव किं न यत्यते इति आह । जाता इति । यस्य ज्ञानेच्छया जाता अपि पुत्रास्त्यज्यंते महात्मभिः । हि शब्दः श्रुत्यादिप्रसिद्धिद्योतकः । तत् श्रुत्यादिप्रसिद्धं स्वरूपज्ञानं त्यक्त्वा त्वया पुत्रः वृथैव याचित इत्यर्थः ॥ १४ ॥

मानुषं जन्म संप्राप्य पशुपक्षिविलक्षणम् ॥
आत्मज्योतिर्यो न पश्येदेषोंऽधो नाक्षिवर्जितः ॥१५॥

ननु पुराणादिषु श्रूयते,बहुवर्षं तपः कृत्वा पुत्राः प्रार्थिताः शिष्टैस्तेषामन्यपरत्वाद्यदि तदुत्पादने तात्पर्यं भवेत् तदा वसिष्ठादिकर्तृकं रोदनं किं परं स्यादित्याशयेनाह । मानुषमिति । पशुपक्षिविलक्षणं मानुषं जन्म संप्राप्य य आत्मज्योतिर्न पश्येदेषोंऽधो नाक्षिवर्जित इति संबंधः । ज्ञानरहित एवांधो न लोचनवर्जित इत्यर्थः ॥ १५ ॥

य आत्मज्योतिरुत्सृज्योदयास्तमयवर्जितम् ॥
सोदयास्तमयं ज्योतिः सेवते सोंऽध इष्यते ॥ १६ ॥

ननु बाह्यज्योतिरपि केचन सेवंते इत्यत आह । य इति । यः पुरुष उदयास्तमयवर्जितमुत्पत्तिनाशरहितमात्मज्योतिः स्वप्रकाशमात्मानं उत्सृज्य त्यक्त्वा सोदयास्तमयं दृश्यज्योतिः सेवते स बुधैरंधो मन्यते॥१६॥

अवश्यमीक्षणीयाऽऽत्मज्योतिस्तूत्सृज्य वीक्षते ॥
पुत्रमित्रकलत्रादि यः सोंऽध इति कथ्यते ॥ १७ ॥

' यद्दर्शनं विना भव्य नहि किंचिद्दुर्दर्शनम् ॥ तदात्मज्योतिरुत्सृज्य किं मुधा क्लिश्यते जनैः ' इति आत्मा द्रष्टव्य इत्यादिवचनाद्विहितदर्शनात्मप्रकाशं त्यक्त्वा यः पुत्राद्यासक्तः सोंऽध इत्याह । अवश्यमिति । अवश्यमीक्षणीयाऽऽत्मज्योतिः नि श्रेयसं प्रति अन्वयव्यतिरेकावधारितहेतुत्वादात्मज्ञानं त्यक्त्वा पुत्रादिकं यो वीक्षते कल्याणरूपत्वेन यः पश्यति सोंऽध इति मुनिभिरुच्यते । निपातः शास्त्रप्रसिद्धिद्योतकः ॥१७॥

गौतमीं प्राप्य तत्रापि चंजरामंगमं त्वया ॥
यदीक्षणीयं तदीक्षि ततोंऽप्यन्यं न संशयः ॥ १८ ॥

प्रकृतेंऽधत्वमुपसंहरति द्वाभ्याम् , गौतमीमिति । व्याख्यातां गौतमीं प्राप्य वंजरासंगमं प्राप्य यत्त्वया वीक्षणीयमवश्यं दर्शनीयमात्मज्योतिस्तत्रादर्शि अतस्त्वमंध एव न संशयः । त्वदंधत्वे संशयो नास्तीत्यर्थः ॥ १८ ॥

**बहुना किमिहोक्तेन गौतमीतीरमाश्रितः ॥**
**यः केवलैहिकासक्तः सोऽध एव न संशयः ॥ १९ ॥**

नन्वियं विशेषव्याप्तिः किं न सामान्यव्याप्तिरित्याह । बहुनेति । इह व्यवहारकाले बहुना ऽधिकेनोक्तेन किम् । गौतमीतीरं ब्रह्मप्राप्तिसाधनं मनुष्यशरीरं प्राप्तः यः केवलैहिकासक्तः स्रक्चंदनादिषु पुत्रादिषु चासक्तः सोऽध एव मूढ एव, जन्मपरंपराभोगी । अत्रार्थे तस्यांधत्वानंधत्वविषयकः संदेहो नेत्यर्थः ॥ १९ ॥

**तस्मादंधात्समुत्पन्नो ऽहमप्यंधो ऽभवं किल ॥**
**सुतो हि प्रायशस्तात पितुः सादृश्यमश्नुते ॥ १२० ॥**

यमांधः पुत्रो जात इतिहेतोरहं दुःखीत्यस्य प्रश्नस्योत्तरमुपसंहरति । तस्मादिति । तस्मात्पूर्वश्लोकक्रतव्याख्यानादंधादुत्पन्नो जातो ऽहमपि अंधः । किलेत्युत्प्रेक्षायाम् । मूढदृष्ट्याऽधः विवेकदृष्ट्या नाहमंधः । पूर्वोक्त एवांधः मूढदृष्ट्या । हि यस्मात् सुतः प्रायशः बाहुल्येन पितुः सादृश्यं समानलक्षणत्वमश्नुते प्राप्नोति । न त्वव्यभिचारितत्वेनेति भावः ॥ २० ॥

**परंतु गौतमीतीरकृतेन सुकृतेन मे ॥**
**परमार्थितजनिस्तेन नाहमंधो ऽस्मि सर्वदृक् ॥ २१ ॥**

विवेकदृष्ट्यानाहमंध इत्याह । परंत्विति । गौतमीतीरकृतेन परमार्थितजनिः तेनाहं सर्वदृगस्मि नाहमंध इतिसंबंधः । न च पूर्वं कर्मनिषेधः कृतोऽधुना सुकृतस्य सर्वदृगत्वे मतिहेतुत्वमुच्यते इति वाच्यम्, "वेदानुवचनेन" इत्यादिश्रुतेः सर्वापेक्षा च यज्ञादिश्रुतेरिति सूत्राच्च । 'कर्मणैव हि संसिद्धिमास्थिता जनकादयः' इत्यादिस्मृतेश्च । निष्का-

प्रकर्मणामंतःकरणशुद्धिद्वारा ज्ञानोपकारकत्वं स्पष्टं क्रियते विष्ण्वर्पण-बुद्ध्या इति । सुकृतं निष्कामं कर्मेति व्युत्पत्तेस्तद्धेतुत्वस्य परंपरया स्वीकृतत्वात् ॥ २१ ॥

चक्षुःसूर्यादयो ह्येते दृश्यभेदेषु केषु चित् ॥
सहायतां प्रपद्यंते भासकस्य चिदात्मनः ॥ २२ ॥

ननु यद्यात्मनः सर्वदृक्त्वं तदा चक्षुरादिकं विनाऽप्ययं रूपादि किं न पश्येदित्यत आह । चक्षुरिति । चक्षुःसूर्यादयः चक्षुश्च सूर्यश्च चक्षुःसूर्यौ तावादिर्येषां ते चक्षुःसूर्यादयः सूर्यादयश्च पूर्वादिनेंद्रियांतरग्रहः, द्वितीयेनाग्न्यादिग्रहः, एते रूपादिषु दृश्यभेदेषु दृश्यभेदविशेषा रूपादयः तेषु सहायतामुपकारितां भासकस्य प्रकाशकस्य चिदात्मनः प्रपद्यंते न तु स्वमपि भासितुं समर्थाः । तथाचोक्तमाचार्यैः—'रूपं दृश्यं लोचनं दृक् तद्दृश्यं दृक्तु मानसम् ॥ दृश्या धीवृत्तयः साक्षी दृगेव न तु दृश्यते' इति ॥ २२ ॥

अंधकारस्थितं वस्तु प्रकाशयति दीपके ॥
यथा तैलादयस्तद्वच्चिति स्युर्भास्करादयः ॥ २३ ॥

कथं सहायतां प्रपद्यते ऽत आह । अंधेति । तमःस्थितं वस्तु कर्मभूतं दीपे भासयति सति तैलादय, आदिना वर्त्यादयः । यथा सहायतां कुर्वंति तद्वत्तैलादिवत् भास्करादयः चिति भासयंत्यां बाह्यभाने सहायतां गच्छंति ॥ २३ ॥

भास्कराद्याः प्रकाशंते न स्वतः किंतु चिद्बलात् ॥
स्वतस्तेषां प्रकाशश्चेन्मतप्रत्यक्षाः कथं न ते ॥ २४ ॥

ननु भास्करादयः स्वतः प्रकाशाः भाकपत्वाद्ब्रह्मवदित्याशंक्याह । भास्कराद्या इति । आदौ भव आद्य, भास्कर आद्यो येषां चक्षुरादीनां ते भास्कराद्याः स्वतो न भासंते किंतु चिद्बलात् आत्मसत्तामाश्रित्यैव प्रकाशंते, न स्वतः प्रकाशादीनां रूपादिमत्त्वात् । यद्येवं तर्ह्येवं यत्नेन न चेदिदमप्रयोजकमित्याह । स्वत इति । तेषां भास्करादीनां

स्ततः प्रकाशश्चेद्यदि स्यात् ते भास्करादयः मत्प्रत्यक्षाः कथं न ते मम भास्याः कथमपि न भवेयुः । मद्भास्यत्वादुपपत्तिरेव विपक्षबाधकस्तर्क इति । यथाऽऽत्मनः प्रत्यग्रूपेण प्रत्यक्षं न पराग्रूपेण तथा तेषां न स्यादिति वा पूर्वपक्ष्यनुमानं सत्प्रतिपक्षितमिति ॥ २४ ॥

**चक्षुर्यस्यास्ति विमलं स शब्दैः किं करिष्यति ॥**
**बधिरः पद्मपत्राक्षः किं शब्दं प्रतिपद्यते ॥ २५ ॥**

यद्यस्य योग्यं तत्रैव तस्य प्रवृत्तिर्नैवान्यत्रेत्यत्र दृष्टांतमाह । चक्षुरिति । यस्य पुरुषस्य चक्षुर्विमलं निर्मलं स पुरुषः शब्दैः किं करिष्यति निर्दुष्टचक्षुषाऽपि शब्दविषयकज्ञानवान्न भवति, तस्य तदयोग्यत्वात् । तस्य श्रोत्रग्राह्यत्वात्तदभावे तदग्रह इति स्वस्वविषये स्वस्य स्वस्यान्वयव्यतिरेकं सूचयति । बधिर इति । श्रोत्रेंद्रियविकलः पद्मपत्राक्षः कमलपत्राक्षः किं शब्दं प्रतिपाद्यते, शब्दविषयकज्ञानवान्न भवति अयोग्यत्वात् ॥ २५ ॥

**तस्माच्चिज्ज्योतिरेवेदं सर्वदृग्रूपमिष्यते ॥**
**तद्यस्य स्फुरति स्पष्टं सोऽधः कथमिवेष्यते ॥ २६ ॥**

तस्मादंधो नाहं भवामीत्युपसंहरति । तस्मादिति । तस्मात् पूर्वोक्तहेतोः । ननु यथा सूर्यादीनां घटादिप्रकाशकत्वं तथाऽऽत्मनोऽपि किं वैलक्षण्यं तदभावे तद्वदेव दृश्यत्वापत्तिरित्याशंक्य माययैव प्रकाशकत्वं न वस्तुत इति प्रपंचस्य ब्रह्मणि कल्पितत्वेन ब्रह्माभिन्नसत्ताकत्वात्तद्रूपत्वमित्याह । चिदिति । इदं भास्यं मायातत्कार्यं चिज्ज्योतिः चित्प्रकाशः सर्वदृग्रूपं सर्वजगत् दृशश्चिन्मात्रस्य रूपं स्वरूपम्, तदभिन्नसत्ताकत्वात् । मृदभिन्नघटवत् " सर्वं खल्विदं ब्रह्म तज्जलान् " इति श्रुतेः ' इदं हि विश्वं भगवानिवेतरो यतो जगत्स्थाननिरोधसंभवाः' इति पुराणाच्च । तद्यस्य ब्रह्म प्रत्यग्रूपेण स्फुरति असंभावनादिराहित्येन स्पष्टं भासते स पुरुषः कथमंध इवेष्यते। रूपाज्ञानी इव कथं, न कथमप्यंध इत्यर्थः ॥ २६ ॥

**यांऽधता मम संजाता सा न दुष्कृतसंभवा ॥**
**किं त्वनुग्रह एवायं राघवस्य चिदात्मनः ॥ २७ ॥**

ननु लोका व्यवहारं दृष्ट्वा त्वामंधं वदंतीत्याशंक्य ये वदंति विवेकिनमंधं त एवांधाः मम त्विषयमंधताऽनुकूलैव जाता इत्याह । यांऽधतेति । या मम बहिर्मुखांधकल्पितांधता संजाता सा न दुष्कृतसंभवा पापसंभवा न, किंत्वनुग्रह एवायं राघवस्य शिष्टानुग्रहाय दुष्टदंडाय रघुकुलार्णवे प्रादुर्भूतस्य रामचंद्रस्य चिदात्मनः परब्रह्मरूपस्य ॥ २७ ॥

**तथा ह्यंधतया नाभूद्बंधो दारादिको मम ॥**
**न कर्मस्वधिकारोऽभूद्याभून्नानार्थसंस्मृतिः ॥ २८ ॥**

अथानया अंधतया ईश्वरानुग्रहत्वे ते किं फलमित्याशंक्य यत्फलं तदनुग्रहस्य बंधनिवृत्तिरूपं तन्मे जातमित्याह । तथेति । तथा हि दर्शयति । मम दारादिको बंधः न रूपादिविषयासक्ताः यत्र यत्र गच्छंति तत्र तत्र तद्वासनाबद्धा एवेति पुनर्वासनारज्ज्वाकर्षितास्तत्रैवायांतीति । संत आहुः–'येद्यीवासनया युक्तास्ते तद्गर्भे विशंति हि' इति । किंच तदभावेन कर्मस्वधिकारोऽभूत् नेत्राभावे नानार्थसंस्मृतिर्नाभूत् दृष्टाः पदार्थाः संस्कारं जनयति पुनः स्मृतिं ततस्तत्सजातीयसुखार्थं कर्म करोति पुनर्देहः पुनः कर्मेति संसारचक्रे भ्रमति संसारी अतो ममेश्वरानुग्रह एव जातः । यो बंधः पूर्वेषु जन्मस्वभूत् एवंविधोऽस्मिन् जन्मनि सुकृतसाध्येन जात इत्यर्थः ॥ २८ ॥

**पश्यतोऽतः परं ज्योतिर्ज्योतिरंतरभासकम् ॥**
**मम प्रतिहता दृष्टिर्न बाह्यं किंचनेक्षते ॥ २९ ॥**

ननु तथापि विषयेंद्रियसंभवस्यानादित्वेन दृष्टस्य श्रुतादिविषये कथं न ते दृष्टिः प्रवर्तते इत्यत आह । पश्यत इति । मम दृष्टिरंतःकरणवृत्तिः प्रतिहता स्वरूपसाक्षात्कारेण बाधिता सती बाह्यं किंचन किंचिदपि नेक्षते, नालोचयतीत्यर्थः । आत्माभिन्नस्य प्रपंचस्यात्ममात्रत्वात् । तथाच श्रुतिः " यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत् " इत्या

शयेनाह । ज्योतिरंतरभासकं स्वाध्यस्तसर्वेवाह्यज्योतिर्भासकं परं मा-
या तत्कार्यासंस्पृष्टं ज्योतिश्चिदात्मकाशं पश्यतः प्रत्यगभिन्नत्वेन सा-
क्षात्कुर्वाणस्य ॥ २९ ॥

**जायावित्तसुताद्येतन्मायामात्रं विजानतः ॥**
**कायाद्विभक्तं चात्मानमायासः कोऽवशिष्यते॥३०॥**

पूर्वश्लोकोक्तानुभवतो जगद्यादृशं भाति तदाह । जायेति । कायात्स्थू-
लसूक्ष्मकारणरूपात् व्यष्टिसमष्टिरूपाच्च विभक्तं विवेचितम् । आत्मानं
प्रत्यगभिन्नत्वेन परिपूर्णं ब्रह्म विजानतः साक्षात्कृतवतः । एतत्प्रत्य-
क्षसिद्धं जायासुतादि ' आत्मा वै पुत्रः' इतिवचनात् । स्वयं जायते पुत्र-
रूपेण यस्य, सा जाया च सुतश्च तावादी यस्य तत् । आदिना
स्वशरीरपरिग्रहः । अहंताममताधिष्ठानभूतश्चिदात्माहमस्मीति बोधे क-
ल्पितस्याधिष्ठानाद्भिन्नत्वेनाभिन्नत्वेन वा निरूपणानर्हत्वान्मायामात्र-
त्वमिति विचारिते आयासः कोऽवशिष्यते । ' यसु प्रयत्ने ' इत्यस्मा-
द्धातो घञ् । रूपं प्रयत्नसाध्यं किंचिन्नावशिष्टमिति भावः ॥ ३० ॥

**रहःस्थितस्य सततं महश्चिंतयतो ऽमलम् ॥**
**अहः क्व रजनी क्वैवा यदस्ति तत्तमस्तु मे ॥ ३१ ॥**

तादृशमनुभवमेवाह । रह इति । 'रहःस्थितस्य एकांतस्थितस्य जनस-
मुदाये स्थितस्य भोजनवचनादिव्यापारवतः करणानि स्वस्वव्यापारेषु
लग्नानि भवंति । यदा संकल्पादिकं न वाधतेऽतो विशेषणं रह इति ।
पुनः कथंभूतस्य । सततममलं महश्चिंतयतः माया तत्कार्यरूपमलरहि-
तमात्मज्योतिः सततं निरंतरमभेदेन ध्यायतः रूपविक्षेपकषायादिनि-
वृत्तिपूर्वकममायानिग्रहस्य । उक्तंच वासिष्ठे-'यस्याचपलनां यातं मन
एकत्र संस्थितम् ॥ अनुत्तमपदेनामी ध्यानेनानुगतो न यः ॥ न स्पंदते
मनो यस्य शास्त्रस्तंभ इवोत्तमः ॥ सद्वस्तुतोऽसौ पुरुषः शिष्टा यदे-
मशीदृशाः ' इति । शास्त्रं स्तंभनास्त्रं तत्कृते स्तंभे यथा शत्रुर्नास्पंदते
तद्वदमात्रेव सद्वस्तुतः परमार्थतः पुरुषः इति द्वितीयपादार्थः स्पष्टः ।

एवं स्थितस्य सर्वपदार्थपरिछेदककालस्यापि भानं नास्तीत्याह । अहः क दिनं नास्ति, रात्रिः क सापि नास्ति । किमस्ति तर्हीत आह । यदस्ति तत्तमस्तु मे यद्भवति तत्तमो मायामात्रं मे मम शक्तिर्मत्तो भिन्नं तदपि न ततमिति द्वितकारे मम स्वरूपं ततं व्याप्तं प्रधरनम् । तत-मस्तु मे इतिपाठे जगद्भाननिमित्तं तमो ध्वस्तं तु केनाऽनुक्रष्यते क गतमिति नो जाने इत्यर्थः ॥ ३१ ॥

रामोऽहमस्मीति विजानतो मे
कामो न वित्तेन सुतेन लोके ॥
का मोहवार्ता क च कर्मबीजं
नामोर्जितं वा क भवार्णवस्य ॥ ३२ ॥

पुनरनुभवमेव स्वस्य वर्णयति, त्रिभिः रामोऽहमित्यादिभिः । मे मम वित्तेन धनेन लोके लोकनं लोकः विषयभोगः तदर्थं न कामः तद्वि-षयेच्छा नास्ति । सुतेन लोके पुत्रसाध्यपरलोकेच्छा नास्ति । समर्पित-स्य देहलीदीपन्यायेनोभयत्रान्वयः । तथाच श्रुतिः- " किं प्रजया क-रिष्यामो येषां नोऽयं लोकः" । का मोहवार्ता मुह्यति भ्रमति लोकोऽनेन मोहो मूलाज्ञानं तस्य वार्ता कथा नास्ति । क च कर्मबीजं कर्मणो बीजं भ्रांतिर्नास्ति, मूलाभावात् । ननु दुस्तरे भवार्णवे विद्यमाने कथं चिंता नेत्याशंक्य मृगतृष्णानदी यथाऽज्ञानकाले दुस्तरा ज्ञाने सति सा नीयते तथायमपीत्याह । नामोर्जितं वा ऊर्जितं भयंकरं भवार्णवस्य मामापि नास्ति । कथंभूतस्य मे । रामोऽहमस्मीति विजानतः परिपूर्णोऽहमस्मीति साक्षात्पश्यतः ॥ ३२ ॥

न चंद्रसूर्यौ मम दर्शनीयौ
न वा कृशानुर्न परोक्तिलेशः ॥
तथापि मायेऽपि मदंतरात्मे
ज्योतिस्सदा सत्वरितं भवामि ॥ ३३ ॥

नु सूर्यादिकं विना कथं गौणैर्निरुपव्यवहार इत्याशंक्याह सर्यां-

तिपैवैषां प्रकाशास्तस्मिन् ज्योतिषि सति बाह्यज्योतिषोपेक्षा नास्ती-त्यर्थः। न चंद्रसूर्यौ मम दर्शनीयौ मम चिदात्मनस्तत्स्वरूपस्य चंद्रसूर्यौ कल्याणकर्तृत्वेन दर्शनार्हौ न भवतः। कृशानुरग्निरपि न तत्प्रकाशापेक्षः, तत्साध्यकर्मापेक्षाभावात्। न परोक्तिलेशः परोक्तीनामुपदेशरूपाणां लेशोपेक्षा नास्ति, आत्मनोऽतिरिक्तस्याभावात्। एषां सूर्यादीनामभावेऽपि यदंतरास्ते ज्योतिर्यच्चैतन्यज्योतिः तज्ज्योतिः सदा परिचिंतयामि ॥ ३३ ॥

मनो दशाविशेषं मे विषयस्नेहवर्जितम् ॥
दहत्यंतर्महस्यस्तु मत्कर्मशलभक्षयः ॥ ३४ ॥

ननु मनसि सति संकल्पविकल्पाश्रये कथं ज्योतिश्चिंतनमित्यत आह। मन इति। मे मम विषयस्नेहवर्जितं विषया ऐहिकामुष्मिकभोगसाधनविषयाः स्नेह इव तैलादिः तेन रहितं दशाविशेषं वर्तिमात्रं मनः कर्मभूतं दहति। अंतर्महसि मज्ज्वलितज्ञानाग्नौ मत्कर्मशलभक्षयः मम कर्मशलभस्य दीपपातिक्षुद्रजंतोः क्षयोऽस्तु जातोऽस्ति। प्रकृते परे शांते मंगलार्थे लोडेवास्तु इति ॥ ३४ ॥

अतः परं प्रवक्ष्यामि हितं ते शृणु तत्पितः ॥
येन त्वं विषयासंगं हित्वा यास्यसि तत्पदम् ॥ ३५ ॥

अथ पुनरपि प्रकारांतरेणात्मविचारं दर्शयति। अत इति। हे पितरतस्ते तुभ्यं हितं वक्ष्यामि त्वं शृणु। तत्परमार्थविषयं वाक्यं येन विचारेण त्वं विषयासंगं विषयप्रीतिं हित्वा त्यक्त्वा तत्पदं परमार्थस्वरूपं प्राप्स्यसि ॥ ३५ ॥

अहं राम इति ज्ञानमहंतोच्छित्तिकारणम् ॥
दहंतं भवमालोक्य न हंत किमुपास्यते ॥ ३६ ॥

ननु परमेश्वराराधनं विना चित्तस्थैर्याभावात्कथं तत्पदं यास्याम्यहं, येनोपदेशपात्रः स्यां तदाद्युपदिशेत्यत आह। अहमिति। अहं राम इति ज्ञानं तत्त्वंपदार्थयोरभेदचिंतनमहंतोच्छित्तिकारणं अहंताया ममता-

पा पत्र छेदो नि शेषं नाश तस्य ज्ञानोत्पत्तिद्वारा कारणम् । तत्र प्र-
माणम्– 'नाविष्णुर्विष्णुमर्चयेत्, नाशिव. शिवमर्चयेत्' -इत्यादि ।
हत इति कष्टे । रामो भेदेन कि नोपदिश्यते किं कष्टं–यतोऽहमुपासे
इत्याशंक्य यथा दवाग्निर्वनं दहति तत्र ये पक्षिणो वृक्षफलेष्वासक्ता
अग्नि दृष्ट्वाऽपि न वृक्षान् त्यजन्ति ते वृक्षैः सहैव दह्यते ये तु ससाराग्नि
दृष्ट्वा त्यजन्ति त एव सुखिन इत्याशयेनाह । दहन्तमिति । भव भवति
पुन पुनर्जायते भव तम्, जातावेकवचनम् । प्राणिन ससारिणो ज-
नान् भेदोपासकान्स्थिरान् दहत दृष्ट्वा किमुपास्यते । अभेदेन-राम
कि नोपास्यते इत्यर्थ ॥ ३६ ॥

आत्मानमेव सुखरूपमुपेक्ष्य चेतः
किं क्लेशमेपि विषयोद्भवतोषसिद्ध्यै ॥
गंगाजले निवसता तृषितेन पुंसा
किं प्रार्थ्यतेऽवु करकल्पितकूपनिष्ठम् ॥३७॥

अथ यथा स्वचित्तं परमार्थे साधयति विवेकिन त प्रकारं सदृष्टान्तमाह।
आत्मानमिति । हे चेत सुखरूपमानदरूपमात्मान ब्रह्म "अयमात्मा ब्रह्म
आनंदो ब्रह्म" इत्यादिश्रुते· उपेक्ष्यत्यक्त्वा विषयोद्भवतोषसिद्ध्यै विषये-
भ्य उद्भवतीति विषयोद्भव तोषं प्रीत्याभास ज्वरार्त्तस्य शर्करामिश्रित-
शीतजलपानजन्यतृप्तिसदृशस्तस्य सिद्ध्यै प्राप्त्यै कि क्लेशमशान्तिजन्यदु -
खमविद्यादिक्लेशपाशमेपि प्राप्नोपि कंठेबध्नासि वा तत्र दृष्टान्त । गंगाजले
गंगातीरे निवसता तृषितेन तृषायुक्तेन पुंसा नरेण करेण हस्तेन कल्पि-
तो रचित कूपस्तन्निष्ठमंबु जल किं प्रार्थ्यते याच्यते, अपितु नेष्यते इ-
त्यर्थ । अथवा कर सूर्यकिरण तत्र कल्पित मृगतृष्णारूपजलम् अ-
न्यत् पूर्ववत् । चिदानंदगंगासमीपे निवसता जीवेन मृगतृष्णाजलवद-
शान्तिकरा विषया वृथैव प्रार्थ्यते ॥ ३७ ॥

सच्चित्सुखात्मकमवाप्तवताऽऽत्मरूपं
किंवा त्वया विषयजं सुखमेषितव्यम् ॥

यस्तृप्तिमेति घृतपायसशर्कराभिः
किं तस्य हंत वद कांजिकयाऽस्ति कृत्यम् ॥ ३८ ॥

हे चित्त अशांतिकरं विषयजं सुखं विहाय नित्यसुखे निमग्नं भवेत्याह । यस्तिति । हे चित्त सच्चित्सुखात्मकं सत् त्रिकालाबाध्यं चिज्जडविलक्षण-प्रकाशरूपं सुखमानंदः आत्मस्वरूपं यस्य तदात्मकरूपमवाप्तवता मायेन । नच सच्चिद्रूपे तु भासेते पूर्णानंदो हि मे नहि इत्यनुभवात्कथं सुखरूपमिति वाच्यम्,सुखस्य चित्तो भिन्नत्वे जडत्वापत्तिः, सतोभिन्नत्वे असत्वापत्तिः, न च सुखस्यात्मगुणत्वेन जडत्वे इष्टापत्तिः, गुणगुणि-भावस्य गुणः सगुणे वर्त्तते निर्गुणे वा इत्यादियुक्त्या खंडितत्वात् । "विज्ञानमानंदं ब्रह्म" इत्यादिश्रुतेरात्मन आनंदत्वे निर्विवादत्वादहं सुखी-त्यादिप्रतीतेरयस्ति दग्धत्ववद्भ्रांतित्वादीदृश सुखं नित्य लब्धवता त्वया . विषयजं पराधीनमनित्यं सुखाभासं किमेषितव्यम्, अपितु नेत्यर्थः । तत्र दृष्टांत । यः पुरुषः घृतपायसं पयसा निर्वृतं पायसं परमान्नं 'पर-मान्न तु पायसम्' इत्यभिधानात् । शर्कराभिः इक्षुविकाराभिस्तृप्ति प्रा-प्नोति तस्य पुरुषस्य कांजिकया चिरकालपर्युषितान्नजलविकाररूपया तृप्तिसाधनत्वेन गृहीतया किं कृत्यं कार्यं, त्वं वदेत्यर्थः ॥ ३८ ॥

यत्संगाद्व्यवहारमेतमखिलं संसाधयस्यंजसा
तच्चितामपहाय दग्धविषयासक्तिस्तवास्ते कुतः ॥
किं संसारलयं तयैषि किमथानंदं परं गाहसे
किं वाच्यं वद चेष्टितं तव भवक्लेशाय यत्कल्पते ॥३९॥

अथ चित्तस्य कृतघ्नतामालोच्योपालभते । यदिति । हे चित्त यत्संगात् यत्सन्निधिं प्राप्यैतं प्रत्यक्षसिद्धमखिलं जाग्रत्स्वप्नादिभोगरूपं बाह्यांतः-करणप्रवृत्त्यादिकं व्यवहारं त्वं संसाधयसि अंजसा यस्य सम्यक्तया तच्चितामपहाय त्यक्त्वा यत्प्रतापेन त्वया विषयानद्योतुभूयते तच्चिंतन-मपि त्वया न क्रियते । अहो ते कृतघ्नता न चास्याः प्रायश्चित्तं करिष्या-मीति वाच्यम्, ' कृतघ्ने निष्कृतिर्नास्ति ' इत्यादिवचनैस्तत्प्रायश्चित्तनि-

पेयादीदृशपातके मरणांतप्रायश्चित्तविधानान्मरिष्याम्येवेति चेदनशन
व्रतकर्तृवद्ब्रह्मलोकं गत्वा कृतार्थो भविष्यसीति धन्यं ते जन्मेत्याशये
नाह । दग्धविषयासक्तिः यथा दग्धेऽन्नादिविषये तृप्तिजनकत्वं नास्ति
तथा विषयेषु भ्रांतिमात्रेषु कुतस्तवासक्तिः लब्धात्मसत्तया तत्सत्ता
का न तु स्वतः संतः विचार्यमाणा न संत्येवातीवविषयासक्तिर्न कर्तव्या
किं संसारलयं वेदांतवाक्यजन्यज्ञानेन संसारस्याज्ञानस्य लयमात्यंतिक
निवृत्तिं न एषि न प्राप्नोषि । अथवा संसरणं संसारः भ्रमः सोऽस्या
स्तीति संसारः, अर्शआद्यच् । तत्संबुद्धौ हे संसार चित्त त्वं लयं कृतप्र
तामायश्चितार्थं मरणं न एषि अनशनव्रतानुष्ठानं किं करोषि । न च तद्व्र
तानुष्ठातारः ब्रह्मलोकं गच्छंति, ममापि तत्रैव भव्यं भविष्यतीति वा
च्यम्, तत्रापि शापादेर्विघ्नस्य सत्वात् । अत्रैव ब्रह्मानंदं किं न प्राप्स्य
सीत्याह । किमयानंदं परं निरतिशयानंदं नावगाहसे नानुभवसे, हे
चित्त तव चेष्टितं विषयकल्पना भवक्लेशाय भवः जन्मपरं पराकृपः
संसारः तत्र यः क्लेशः स एव वा अविद्याऽस्मितारागद्वेषाभिनिवेशात्मकः ।
तत्राविद्या कार्याविद्या अनित्ये देहादौ नित्यत्वशुचित्वादिबुद्धिः, अस्मिता
सूक्ष्माहंकारः रागः विद्यमानविषये आसक्तिविशेषः ' अयं सदा जीवतु
अहमपि सदा जीवामि ' इत्यादिवृत्तिगम्यः, तत्रैव विषये कंचित्प्रतिकूलं
दृष्ट्वा द्वेषः क्षोभरूपः, अभिनिवेशः गतवस्तुनि तत्स्मृतिजन्यो व्यग्र
तारूपो विक्षेपः । यत् यस्माद्धेतोः । किं वाच्यं तव चेष्टितं चेष्टा
या महत्त्वं मया किं वाच्यं त्वमेव वद ब्रूहि विषयानुसंधाने तव सुखं
तदनुसंधाने वा इति त्वयैव वक्तव्यम् । अस्मिन्व्यवहारे त्वमेव निया
मकोसि येन स्वस्य हितं नालोचितमालोचयित्वा तदनुष्ठानं नाचरितं
स मूढ एव । अतएवोक्तम्-' दृष्ट्वाऽप्यपर्यंततवैरस्यं यः पदार्थेषु दुर्मतिः ॥
बध्नाति भावनां भूयो नरो नासौ हि गर्दभः ' इत्यादिवचनमालोच्य शां
तिं भज । मनःशांतिं विना कल्याणं नेत्यत्र वासिष्ठं रामायणम्-
स्वापत्तं च स्वसाध्यं च स्वचित्ताक्रांतिमात्रकम् ॥ शक्नुवंति न ये क
र्तुं धिक्तान् पुरुषजंबुकान् ॥ स्वपुरुषेकसाध्येन स्वेप्सितत्यागरूपि-

पेयादीदृशपातके 'मरणांतप्रायश्चित्तविधानान्मरिष्याम्येवेति' चेदनशन-व्रतकर्तुर्वह्मलोकं गत्वा कृतार्थो भविष्यसीति धन्यं ते जन्मेत्याशये-नाह। दग्धविषयासक्तिः यथा दग्धेऽन्नादिविषये तृप्तिजनकत्वं नास्ति तथा विषयेषु भ्रांतिमात्रेषु कुतस्तवासक्तिः, लब्धात्मसत्तया तद्धसत्ता का न तु स्वतः संतः विचार्यमाणा न संत्येवातीवविषयासक्तिर्न कर्तव्या। किं संसारलयं वेदांतवाक्यजन्यज्ञानेन संसारस्याज्ञानस्य लयमांत्यंतिक-निवृत्तिं न एपि न प्राप्नोषि। अथवा संसरणं संसारः भ्रमः सोऽस्या-स्तीति संसारः, अर्शआद्यच्। तत्संबुद्धौ हे संसार चित्त त्वं लयं कृतप्र-तापायश्चितार्थं मरणं न एषि अनशनतानुष्ठानं किं करोषि। न च तदृ-तानुष्ठातारः ब्रह्मलोकं गच्छंति, ममापि तत्रैव भव्यं भविष्यतिइति वा-च्यम्, तत्रापि शापादेर्विघ्नस्य सत्वात्। अत्रैव ब्रह्मानंदं किं न प्राप्स्य-सीत्याह। किमयानंदं परं निरतिशयानंदं नावगाहसे नानुभवसे, हे चित्त तव चेष्टितं विषयकल्पना भवक्लेशाय भवः जन्मपरं पराक्रपः संसारः तत्र यः क्लेशः स एव वा अविद्याऽस्मितारागद्वेषाभिनिवेशात्मकः। तत्राविद्या कार्याविद्या अनित्ये देहादौ नित्यत्वशुचित्वादिबुद्धिः, अस्मिता सूक्ष्माहंकारः रागः विद्यमानविषये आसक्तिविशेषः 'अयं सदा जीवतु अहमपि सदा जीवामि' इत्यादिवृत्तिगम्यः, तत्रैव विषये कंचित्प्रतिकूलं दृष्ट्वा द्वेषः क्षोभरूपः, अभिनिवेशः गतवस्तुनि तत्स्मृतिजन्यो व्यग्र-ताख्यो विक्षेपः। यत् यस्माद्धेतोः। किं वाच्यं तव चेष्टितं चेष्टा-या महत्वं मया। किं वाच्यं त्वमेव वद ब्रूहि विषयानुसंधाने तव सुखं तो ...नुसंधाने वा इति त्वयैव वक्तव्यम्। अस्मिन्व्यवहारे त्वमेव निपा-त्यपि ... तेन स्वस्य हितं नालोचितमालोचयित्वा तदनुष्ठानं नाचरितं न्यत् पूर्ववत्। अतएवोक्तम्–'दृष्ट्वाऽप्यत्यंतवैरस्यं यः पदार्थेषु दुर्मति॥ ...यरा विर भूयो नरो नामो हि गर्दभः' इत्यादिवचनमालोच्य शां-तिं विना कल्याणं नेत्यत्र वासिष्ठं रामायणम्– 'सा...र्थ्यं च स्वचित्ताक्रांतिमात्रकम्॥ शक्नुवंति न ये ... क्रिया...दुपाद॥ स्वपुरुषैकसाध्येन स्वेप्सिततत्पराक्रमौ

णा ॥ मनःप्रशममात्रेण विना नास्ति शुभा गतिः ॥ मनोमारणमात्रेण साध्येन स्वात्मसंविदा ॥ निरायासं नि संपन्नः मनोगनमिहोच्यताम् ॥ ईप्सिता वेदनातुल्या मनःप्रशमतादृते ॥ गुरूपदेशशास्त्रार्थमंत्राद्यायुक्तयस्तृणम् ॥ नन्वेवं सति 'यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ॥ तस्यैते कथिता ह्यर्थाः प्रकाशंते महात्मनः ॥ शिवे रुष्टे गुरुस्त्राता गुरौ रुष्टे न कश्चन ॥ गुरुरेव परं ब्रह्म तस्मै श्रीगुरवे नमः ॥ न गुरोरधिकं न गुरोरधिकं न गुरोरधिकं न गुरोरधिकम् ॥ शिवशासनतः शिवशासनतः शिवशासनतः शिवशासनतः ॥ षडंगादिवेदो मुखे शास्त्रविद्या कवित्वादिगद्यं सुपद्यं करोति ॥ गुरोरंघ्रिपद्मे मनश्चेन्न लग्नं ततः किं ततः किं ततः किं ततः किम्' इत्यादिवचनानां गुरोरुत्कृष्टत्वप्रतिपादकानां का गतिरिति चेत्सत्यम्, नहि निंदा निंद्यं निंदितुं प्रवर्तते किंतु विधेयं स्तोतुं प्रवर्तते 'यथा श्रेयो न पश्यामो नयध्वं मा पृथूदकम्' इतिवचनस्य गंगाद्वारे उत्तकार्पणोक्तस्य गंगानिंदायां न तात्पर्यं किंतु पृथूदकस्तुतौ तथास्य वाक्यस्य गुर्वादिनिंदायां न तात्पर्यं किंतु मनःशमनस्तुतौ यत्परः शब्दः स शब्दार्थ इति न्यायात् । अन्यच्च तत्रैवोक्तम्—'सर्वं सर्वगतं शांतं ब्रह्म संपद्यते तदा ॥ असंकल्पनशस्त्रेण छिन्नं चित्तं गतं यदा ॥ परं पौरुषमाश्रित्य नीत्वा चित्तमचित्तताम् ॥ तां महापदवीमेहि यत्र नाशो न विद्यते' इत्यादिवचनात् । तेन शांतिरेव कल्याणमिति भावः ॥ ३९ ॥

कामादिधर्मसहितं भवतो मनो यत्
तद्येन सिद्धिमुपयाति सदोज्ज्वलेन ॥
तज्ज्योतिरांतरमपास्य पितः कुतस्ते
बाह्याय बाह्यमरसं प्रथते ह्यपेक्षा ॥ ४० ॥

पितरमुद्दिश्यापि तेनैव प्रकारेण बोधयति । कामादीति । काम आदिर्येषां ते कामादयः ते च धर्मा मनस एव न आत्मनः जाग्रत्स्वप्नयोर्मनसि सति उपलभ्यंते सुषुप्तौ तदभावेनोपलभ्यंतेऽतस्तद्धर्मा एव तथा च श्रुतिः—"कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव" इति 

भवतो मनः येनात्मना सिद्धिमुपयाति जाग्रदादिव्यवहारं निर्वाहयति। तथाचोक्तम्- बुद्धेर्जागरणंस्वप्नः सुषुप्तिरिति चोच्यते ॥ मायामात्रमिदं राजन्नानात्वं मत्यगात्मनि ॥ कथंभूतेन। सदोज्ज्वलेन सदा मकाशरूपेण । हे पितः तत् वेदांतप्रसिद्धं आंतरमात्मानं ज्योतिरपास्य त्यक्त्वा ते बाह्याय विषयेंद्रियसंबंधजन्यभोगाय भोगं कर्तुं बाह्यमहस बाह्यवृत्तेर्ऽपेक्षा विशेषेणापेक्षा। कुतः कस्माद्धेतोः नित्यानंद विहाय बाह्यविषयापेक्षा प्रथते प्रख्यातिं लभते इत्यादिवत् ॥ ४० ॥

यदि चैवं मनसि ते शंकाशूकः प्रवर्तते ॥
बालो ऽयं पंडितं मन्य इति तात ततः शृणु ॥ ४१ ॥

ननु 'उपदेक्ष्यंति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः' इत्यादिस्मृतेर्ज्ञानिन उपदेशो हृदि लगति । 'बालस्य शास्त्रानभिज्ञस्य वृथापंडितमानिनः' इत्यस्मानुवादपूर्वकमुत्तरं प्रतिजानीते । यदीति । हे तात तनोत्यात्मानं पुत्ररूपेण तातः 'ततस्तु जनकः पिता' इत्यमरः । यदि चेत् ते तव मनसि शकाशूकः संशयलेशः विद्यते । कीदृशोऽत आह । बालोऽयं पंडिताभासः । ततः शृणु, उत्तरमिति शेषः ॥ ४१ ॥

पशुः परमहंसश्चेत्याख्या देहस्य नात्मनः ॥
वद विद्वंस्तदंतस्थे को विशेषश्चिदात्मनि ॥ ४२ ॥

वाक्यार्थज्ञानस्य पदार्थज्ञानाधीनत्वात्तावत्त्वंपदार्थं विविनक्ति । पशुरिति । पशुः चतुष्पाद् परमहंसः परिव्राट् इत्याख्या नाम देहस्य प्रत्यक्षदृश्यस्य स्थूलदेहस्यान्नविकारस्य, न आत्मनः परिपूर्णचिदात्मनः। हे विद्वन् तदंतरस्थे तयोः पशुपरमहंसदेहयोरंतस्थे व्यवहारदृष्ट्यांतस्थत्वेन प्रतीयमाने चिदात्मनि पूर्णप्रकाशे को विशेषः को भेदः, अपितु भेदो नास्तीत्यर्थः ॥ ४२ ॥

अविवेकविवेकौ यौ भेदकौ पशुहंसयोः ॥
तौ मनःपरिणामत्वाच्चिद्धास्यौ न चिदात्मकौ ॥ ४३ ॥

ननु परमहंसो मुक्तः पशुस्तु बद्ध इति भेदो वर्तते इत्याशंक्य व्या-

वहारदृष्ट्या वृत्तिकृतो भेदो न आत्मन इत्याह । अविवेकेति । अविवेकविवेकौ विवेचनं देहादिसंघातात्पृथक्त्वेन निश्चयो विवेकः, न विवेकः अविवेकः, अविवेकश्च विवेकश्च तौ पशुहंसयोः पश्यति सामान्येन देहादिकमनात्मानमिति पशुः हंसवत् यथा हंसः दुग्धजलविवेचकः तथा देहादिसंघातादात्मविवेचकौ हंसः तयोः पशुहंसयोः भेदकौ भेदप्रत्ययजनकौ तौ चिद्भास्यौ चिता प्रकाशरूपचैतन्येन भास्यौ प्रकाश्यौ अतएव न चिदात्मकौ न आत्मरूपौ । चिद्भास्यत्वे को हेतुरत आह । मनःपरिणामत्वात् अंतःकरणवृत्तित्वात् । अत्रायं प्रयोगः— तौ न चिद्रूपौ तद्भास्यत्वात्, सूर्यभास्यघटवत् न च स्वरूपासिद्धिः तौ चिद्भास्यौ मनःपरिणामत्वात्, यन्नैवं तन्नैव यथा चिदिति ॥ ४३ ॥

**अतश्चिदात्मा भूतेषु सर्वेषु सम ईष्यते ॥**
**उच्चावचत्वमन्यस्थं भ्रान्त्या चिद्रूप ईक्ष्यते ॥ ४४ ॥**

त्वंपदार्थं विवेचयित्वा तत्पदार्थं विवेचयति । अत इति । भूतेषु ब्रह्मादिस्थावरान्तेषु सर्वेषु निरवशेषेषु चिदात्मा सम एकरसः । सत्त्वप्रधाना देवा ऊर्ध्वलोकस्थाः, रज प्रधाना मर्त्यलोकस्था मनुष्याः, तमःप्रधानाः तिर्यग्योनयः सर्पाद्याः । सत्त्वादिगुणप्रकाशकश्चिदात्मा प्रकाश्यगुणैस्तत्तद्वृत्तिभिर्न लिप्यते । यथा सूर्यः पवित्रजलानि भासयन्हि शुद्धिमशुद्धिं वा गच्छति तस्यापि भासक आत्मा न भास्यगुणदोषभाक् सूर्यो यथा सर्वलोकस्य चक्षुर्न लिप्यते चाक्षुषैर्बाह्यदोषैः 'एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः' इत्यादिश्रुतेः । समं सर्वेषु भूतेषु तिष्ठंतं परमेश्वरम् ॥ विनश्यत्स्वविनश्यन्तं यः पश्यति स पश्यति ॥ समं पश्यन् हि सर्वत्र समवस्थितमीश्वरम् ॥ न हिनस्त्यात्मनात्मानं ततो याति परां गतिम्' इत्यादि स्मृतेश्चैष्यते पूर्वमहर्षिभिरेवं निश्चीयते । ननु वेदप्रतिपाद्यमहत्त्वब्रह्मादिमिश्रेष्ठहत्यादिपापकर्मन्यदेहानां श्वादीनां कथं साम्यमित्याशंक्य गुणोत्कर्षापकृष्टत्वं ननु तदधिष्ठाने चिदात्मन्यसंगे निर्गुणे इत्याशयेनाह । उच्चावचत्वमन्यस्थं उच्चत्वमुत्कृष्टत्वमवचत्वं निकृष्टत्वं यत्तदन्यस्थं प्रा-

र्यागुणस्थम् । कथं तर्हि शिष्टैः तेषां स्तुतिः क्रियते इत्याशंक्य गुण-कथनं हि स्तुतिर्निर्गुणे गुणाभावात्कथं स्तुतिरिति किंचात्मनः सकाशाद्द्वैतीयात्मनः प्रतीतिः परमार्थतो भ्रांत्या वा नाद्यः स्वात्मभास्यत्वेन जडत्वापत्तेर्द्वितीये त्विष्टापत्तिरित्याह । भ्रांत्या चिद्रूप ईक्ष्यते यदुच्चावचत्वं गुणस्थं तद्भ्रमेण चिदात्मनि प्रतीयते इत्यर्थः ॥ ४४ ॥

न चितेः संसृतिमृती न सृतिर्वाऽपि लिंगगाः ॥
घटीयंत्रघटीछन्नभ्रमच्छिन्ननभोंऽशवत् ॥ ४५ ॥

ननु जातोऽहं मरिष्यामीत्यादिप्रतीतेः संसारी आत्मा प्रतिभातीत्याशंक्य यथा घटभेदेन घटाकाशभेदः प्रतीयते यंत्रभ्रमणेनाकाशभ्रमणं तथा लिंगदेहभेदेन तद्भ्रमणेन चात्मनो भेदभ्रमणं न वस्तुत इत्याह । न चितेरिति । चितेः परिपूर्णात्मनः । संसृतिमृती संसरणं संसृतिर्जोवादिव्यवहारः मृतिश्चरमप्राणशरीरसंयोगध्वंसः, न मृतिः मरणं न सृतिः गमनम् । सृगतौ भावेक्तिन् । द्विवचनांतपाठे इहलोकपरलोकगमने ग्राह्ये । लिंगगा लिंगदेहगताः । उक्तंच—'क्षुत्तृपिपासाध्याधियंशोकमोहभयादयः ॥ लिंगदेहगता ह्येते ह्यलिंगस्य कुतो मम' इति । आदिना संसृत्यादिग्रहः । तत्र दृष्टांतः । घटीयंत्रघटीछन्नभ्रमच्छिन्ननभोंशवत् घटीयंत्रस्य घटी घटीयंत्रघटी तया छन्नः भ्रमश्च छिन्नश्च यो नभोंशो गगनांशस्तद्वत् ॥ ४५ ॥

काममोहान्वितं तात मनः स्वीयं विशोधय ॥
उदासे यदि चाव्रतत्वमुपास्ते कथमीश्वरम् ॥ ४६ ॥

ननु काममोहयोर्मोक्षप्रतिपंथिनोऽसतो कथमीश्वराभेदोपासनतामृते कथं तत्त्वंपदार्थशोधनद्वाराभेदममा इत्यत आह । कामेति । हे तात त्वं स्वीयं स्वस्य मनः शोधय विषयेषु दोषबुद्ध्या ततो निवर्त्य परमेश्वरप्रवणं कुरु । कथंभूतं मनः । काममोहान्वितं कामश्च इच्छा वासना तृष्णाद्यपरपर्यायः, मोह आवरणात्मकोऽध्यासः ताभ्यामन्वितम् । ननु विषयेभ्यो मनोनिवृत्ति विनैवाहमीश्वरमुपासे इत्याशंक्य यथा निदानवि-

द्वैचः पथ्यमुपदिश्यौषधमन्वयव्यतिरेकौ आलोचयित्वा ददाति तथा विषयेभ्यो मनोनिवृत्तिं विनोपासनाऽपि न संभवतीत्याह । उदासे चेदत्र मनः शोधने उपेक्षसे तदेश्वरं कथमुपासे बाह्यविषयत्यागं विनोपासनाऽपि न संभवतीत्यर्थः ॥ ४६ ॥

**शोकमोहादिभिर्धर्मैर्लेपस्तत्साक्षिणो न ते ॥**
**नीलपीतादिभी रूपैः स्वप्रकाशरवेरिव ॥ ४७ ॥**

ननु ईश्वरोपासने सति किं स्यात् मनस ऐकाग्रता स्यात्ततः किं चित्तं विचारसमर्थं भवति कोऽसौ विचारोऽत आह । शोकेति । शोचनं शोकश्चित्तसंतापः मोहो भ्रांतिः शोकश्च मोहश्च शोकमोहौ आदी येषां ते शोकमोहादयः तैः धर्मैरंतःकरणवृत्तिभिस्तत्साक्षिणः शोकमोहादिसाक्षिणस्ते तव लेपः संगो न । अत्रायं प्रयोगः—आत्मा शोकादिभिन्नः तत्साक्षित्वाद्यन्नैवं तन्नैवं यथा शोकादि । अथवाऽन्वयीदृष्टांत इत्याह । नीलपीतादिभी रूपैः स्वप्रकाशरवेरिव स्वप्रकाशः अनन्याधीनप्रकाशः स चासौ रविः सूर्यस्तस्य ॥ ४७ ॥

**शोकमोहौ मनोनिष्ठौ जरामृत्यू तनौ स्थितौ ॥**
**प्राणनिष्ठे क्षुत्पिपासे त्वं तु शुद्धमहोदयः ॥ ४८ ॥**

ननु षडूर्मितस्करैर्हृतविवेकधनः किमहं कुर्यां दरिद्रः इत्याशंक्य तेषां मनआदिधर्मत्वात्तव तद्वद्दुर्निर्लेपत्वादित्याह । शोकेति । शोकमोहौ मनोनिष्ठौ मनउपादानकौ । जरा च मृत्युश्च जरामृत्यू तनौ स्थूलशरीरे स्थितौ । क्षुच्च पिपासा च क्षुत्पिपासे प्राणनिष्ठे प्राणधर्मौ । अहं कीदृशोऽत आह । त्वं तु शुद्धमहोदयः मायातत्कार्यसंकल्पशून्यपरिपूर्णब्रह्मस्वरूपः ॥ ४८ ॥

**परद्रव्यापहारेण यथा चौरः प्रपीड्यते ॥**
**अन्योर्मिचयसंचित्या चिदात्मैवं प्रदुष्यति ॥ ४९ ॥**

कथं तर्हि षडूर्मिपीडा मे भातीत्याशंक्य यथा चौरः परवित्तापहरणेन प्रपीड्यते तथोर्मिधर्मधनचौर्यभ्रांत्यात्मा दूष्यति इत्याह । परद्रव्येति ।

यथा चौरः परद्रव्यापहारेण परद्रव्यचौर्येण प्रपीड्यते एवमात्मा अन्योर्मिचयसंचित्या आत्मभिन्नो य ऊर्मीणां शोकादीनां चयः समूहः तस्य संचितः संचयनं संचितिः । चिञ् चयने, संपूर्वाद्विवेक्तिन् । तद्धर्मग्रहणेन प्रदुष्यति क्षयवानिव भ्रांत्या भातीत्यर्थः ॥ ४९ ॥

अतः प्रकाशमानं सत्तेजोंतरविभासकम् ॥
चक्षुस्तदेवाविनाशं चक्षुष्मांस्तेन मानवः ॥ ५० ॥

तर्हि वस्तुतस्तत्त्वं कीदृशमत आह । अत इति । यत उपाधेर्दोषपरत्वाद्वस्तुनो निर्दोषत्वात् तेजोंतरविभासकं अन्यानि तेजांसि तेजोंतराणि तेषां प्रकाशकं स्वयं प्रकाशमानं यत्तदेवाविनाशं नित्यं चक्षुः " चक्षुषश्चक्षुः" इतिश्रुतेः । तेनात्मचक्षुषा मानवः मनुष्यदृष्टिभवः पुरुषः चक्षुष्मान् भवति न बाह्यचक्षुषेत्यर्थः ॥ ५० ॥

अतः पुत्रो ममांधो ऽयं प्राक्तनैर्दुष्कृतोच्चयैः ॥
इत्यविद्यां परित्यज्य स्वचक्षुर्विमलीकरु ॥ ५१ ॥

एवं तर्हि मया किं करणीयमात्मतत्त्वं निर्मलीकरणीयमित्याह । अत इति । यत आत्मज्योतिषैवायं चक्षुष्मानतोऽस्माद्धेतोः प्राक्तनैः पूर्वजन्मकृतैर्दुष्कृतोच्चयैः पापसंचयैः अयं मम पुत्रोऽधो जात इत्यविद्यामविद्याजन्यां भ्रांतिं परित्यज्य स्वचक्षुर्विमलीकुरु आत्मानमविद्यातत्कार्यात् पृथक्त्वेन निश्चिनु इत्यर्थः ॥ ५१ ॥

मुख्यं हि चक्षुरात्मैव सर्वदृश्यप्रकाशकम् ॥
तन्मालिन्यं च चित्तेन तस्मात्तद्विमलीकुरु ॥ ५२ ॥

अथ केन मालिन्यं कृतमित्यतो मनो विना मालिन्यकर्तृशुद्धे चिदात्मनि नास्तीत्याह । मुख्यमिति । हि यस्मान्मुख्यं प्रधानं शेषिरूपं चक्षुरात्मैव न चक्षुरादि । कथंभूतं चक्षुः । सर्वदृश्यप्रकाशकं स्वाध्यस्तस्य सर्वस्य सत्तां स्फूर्तिप्रदत्वेन भासकमप्य । चित्तेन मालिन्यं स्वधर्मारोपरूपं तत्तस्मात्तन्मालिन्याद्विमलीकुरु पृथक्कुरु ॥ ५२ ॥

बोधितस्तं पितोवाच को ऽयमात्मेति मे वद ॥

देहेंद्रियासुसंघाते कस्त आत्मा विवक्षितः ॥ ५३ ॥

एवं बोधितः पिता किं पुनरुवाचात आह । बोधित इति । बोधित उपदिष्टः पिता कोऽयमात्मा इति उवाच । इति किम् । देहेंद्रियासुसंघाते देहश्च इंद्रियाणि च असवः प्राणाश्च तेषां संघातः समूहः तस्मिन् संघाते ते तव आत्मा को विवक्षितः, एष्वन्यतम एभ्यो भिन्नो वा नान्यः। मम देहः ममेंद्रिय मम प्राणा इत्यादिप्रतीते बोधितस्त्वं तथोवाच कोयमात्मेति मे वद देहेंद्रियासुसंघाते कस्ते आत्मा विवक्षितः तद्विन्नत्वेनाप्रतीतेरहं संदिग्धः, मम संदेहनिवारणार्थं वद ब्रूहि । तत्स्वरूपमिति शेषः ॥ ५३ ॥

जनकेनैवमादिष्टः प्रज्ञाचक्षुरुवाच तम् ॥
येन पश्यति रूपाणि शब्दान्येन शृणोति च ॥ ५४ ॥
गंधं गृह्णाति येनाथ येन स्पर्शं प्रपद्यते ॥
रसं जानाति येनात्र स आत्मेत्यवधारय ॥ ५५ ॥

पित्रा पृष्टः तमुवाचेत्याह । जनकेनेति । पित्राऽऽदिष्टः प्रज्ञाचक्षुः तं पितरमुवाच उपदिदेश, येनेत्यादिसार्धद्वयेन । येन विज्ञानस्वभावेनात्मना लोकः सर्वरूपाणि पश्यति ईक्षते । च पुनः येन चैतन्येन शब्दान् शृणोति । येनात्मना गधं गृह्णाति भासयति । येन स्पर्शं प्रतिपद्यते जानाति । येन रसं जानात्यनुभवति । अत्र अस्मिन्संघाते स आत्मा, हे पितः त्वमित्यवधारय निश्चिनु । ननु येनेति प्रसिद्धार्थयच्छब्दयोगेण करणार्थतृतीयाविभक्त्या च चक्षुरादीनां ग्रहणं योग्यं स्वस्वविषयग्रहणे तेषां असाधारणकारणत्वात्, नहिलोकेऽप्येवं कश्चित्स्पेति देहादिविलक्षणे नाहं विजानामीति प्रत्युत ब्राह्मणोऽहं क्षत्रियोऽहं जानामीत्यवगच्छति लोकः इति चेन्न तावत्प्रसिद्धार्थयच्छब्दप्रयोगानुपपत्तिः, लोकशब्दः द्विधा एकः कर्मण्युत्पन्नः लोक्यते दृश्यते इति लोकः देहादिश्चैतन्यव्यतिरिक्तः सर्वदृश्यप्रपंचः तत्राह प्रत्यग्वानपि लोक इति व्यवह्रियते, अहमस्वाभाववति देहादावात्मत्वज्ञानवान् भ्रांतः तस्य

प्रसिद्धिस्तु न प्रमाणं भ्रांतत्वादेवेति । द्वितीयस्तु भावव्युत्पत्त्या,लोकनं लोकश्चिन्मात्रं तन्मात्रमात्मानं पश्यतां महात्मनां तत्सत्तया सत्तां त त्प्रकाशेन प्रकाशतां देहादीनां स्वतःसत्ताप्रकाशरहितानामिति यथार्थज्ञानवतां प्रसिद्धिः स्वीकर्त्तव्या तृतीया तु येन लोहो दहति सोऽग्निरितिवद्बोध्या । देहादीनां जडत्वे नानात्मत्वात् देहादयः अप्रकाशस्वभावः जडत्वात् । यन्नैवं तन्नैवं यथात्मा न चेदमप्रयोजकं परस्परमपि जडानां विज्ञानरूपत्वे विज्ञातृत्वापत्तेः । तथा च येन रूपं रसं गंधं शब्दान् स्पर्शांश्चेति मंत्रव्याख्यानभाष्यं, देहादिसंघातस्यापि शब्दादिरूपत्वाविशेषात् विज्ञेयत्वाविशेषत्वाच्च न युक्तं विज्ञातृत्वम् । यदि देहादिसंघातरूपाद्यात्मकः सन् रूपादीन् विजानीयात् बाह्यापि रूपादयोऽन्योन्यं स्वं स्वं रूपं च विजानीयुः, न चैतदस्ति तस्माद्देहादिलक्षणांश्च रूपादीनेतेनैव देहादिव्यतिरिक्तेनैव विज्ञानस्वभावेनात्मना विजानाति लोक इति । अतः सुष्ठूक्तं स आत्मेत्यवधारयेति ॥ ५४ ॥ ५५ ॥

अशनाया पिपासे च शोकं मोहं जरां मृतिम् ॥
अत्येति विद्धि तात त्वं स आत्मेति श्रुतेर्बलात् ॥५६॥

अतएव षडूर्मिरहितो ऽयमित्याह । अशनायेति । हे तात यः अशनाया पिपासे क्षुधापिपासादीन् प्राणादिधर्मानत्येति उल्लंघ्य गच्छति तद्धर्मवान्न भवति स आत्मा इति त्वं विद्धि जानीहि । अत्र कः साक्षी अत आह । श्रुतेर्बलात्तया येनरूपमित्यादिश्रुतिरत्र प्रमाणमिति भावः ॥ ५६॥

अध्येपितः सुतेनैवं ब्रह्मशर्माऽऽत्मचिंतनात् ॥
यंजरासंगमे तन्वि मुक्तिं माप द्विजोत्तम. ॥ ५७ ॥

एवं देहेंद्रियादिसंघातविलक्षणस्तत्सत्ताप्रकाशप्रदः षडूर्मिरहितो ऽद्वितीयश्चित्सदानंद आत्मा त्वमिति सुतेन श्रुतिबलमाश्रित्य बोधितः सपद्यादमस्मीति स्वात्मानं करामलकवत् साक्षाद्दर्शेत्याह । अध्येपित इति । एवं पूर्वोक्तेन प्रकारेण पुत्रेणाध्येपितो ऽद्वैतात्मनि व्युत्पादितः । ब्रह्मशर्मा शर्मांतशब्दः यथार्थमुपलक्षि , वस्तुदृष्ट्या ब्रह्मैवाज्ञान-

वशादधिकारी निरूपितः । तदेवात्मचिंतनात् आत्मचिंतनजन्यज्ञानात् वंजरासंगमे निष्कामं कर्म वंजरा इति पूर्वं व्याख्यातं तस्याः संगमेऽतःकरणशुद्ध्या साधनसंपत्तौ । भिक्षुः तामुपदेश्यां वनितां संबुध्यति । हे तन्वंगि सूक्ष्मांगि, कृशांगीति यावत् । एतेन साधनकाले मुमुक्षुः कृशांगो भवतीति सूचितम् । द्विजोत्तमः द्विजेषु उत्तमः द्विजोत्तमः त्रैवर्णिकश्रेष्ठः, पुष्कलसाधनवानिति यावत् । मुक्तिं ब्रह्मानंदाविर्भावरूपां प्राप । विस्मृतकंठचामीकरन्यायेनावरणनिवृत्तिमात्रेण प्राप्त एव प्राप " विमुक्तश्च विमुच्यते " इति श्रुतेः ॥ ९७ ॥

**चित्तवृत्ते मया प्रोक्तमंधोपाख्यानमुत्तमम् ॥**
**चिंतयंती विशेषेण विषयाशां परित्यज ॥ ९८ ॥**

अथांधोपाख्यानमुपसंहरन् मुख्यसाधनमुपदिशति । चित्तवृत्ते इति । हे चित्तवृत्ते मया भिक्षुणांऽधोपाख्यानमंधस्य विपर्यासस्योपाख्यानमितिहासरूपमुत्तममुद्गच्छति तमोऽज्ञानं यस्मिन् श्रुते तदुत्तमं विशेषेणैकाग्रवृत्त्या चिंतयंती विषयाशां विषयतृष्णां त्यज परिजहीति ॥ ९८ ॥ अंधोपदेशाद्यद्रूपं कृतकृत्यो बभूव ह ॥ प्राप्य शुद्धं तुरीयं स तदेवास्मि निरंजनः ॥ १ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यहरिहरसरस्वतीप्रियशिष्यपरमहंसपरिव्राजकाचार्य जगन्नाथसरस्वतीविरचितेऽद्वैतामृते द्वितीयः कवलः संपूर्णः ॥ २ ॥

स्वद्वैतामृतव्याख्यायामद्वैतामृततरंगिण्यां द्वितीयः कवलः स० ॥ २ ॥

# अद्वैतामृतग्रंथे

## तृतीयः कवळः

ॐ नमः शिवाय ।

॥ इत्थं प्रबोधिता तेन विवेकाश्रमयोगिना ॥
चिदात्मानं विनिश्चित्य पप्रच्छ पुनरेव तम् ॥ १ ॥

॥ श्रीपरमात्मने नमः ॥ ॥ एवं द्वितीयकवलेन पदार्थशोधनपूर्वकमात्मनश्चिद्रूपत्वं निरूप्य श्रुतियुक्तिभ्यां तस्य आनंदतां निरूपयति, पूर्वापरग्रंथयोरेकवाक्यताकथनपूर्वकं तस्याः प्रश्नं प्रतिजानीते । इत्थमिति । इत्थं पूर्वोक्तप्रकारेण तेन विवेकाश्रमयोगिना भिक्षुणा प्रबोधिता प्रबोधं प्रापिता चिदात्मानं प्रत्यग्ब्रह्म निश्चित्य पुनरेव तं भिक्षुं पप्रच्छ ॥ १ ॥

भ्रातर्विवेकाश्रम सम्यगुक्तं युक्त्या प्रमाणेन
चिदात्मतत्त्वम् ॥ आनंदतायां पुनरस्य मानं
युक्तिं च मे ब्रूहि विमोहितायाः ॥ २ ॥

किं पप्रच्छेत्यत आह । भ्रातरिति । हे भ्रातर्विवेकाश्रम युक्त्याऽधोपाख्याने वर्णितया प्रमाणेन येन रूपमित्यादिरूपेण चिदात्मतत्त्वं चिदात्मनः तत्त्वं चैतन्यं सम्यगुक्तं त्वया । देहादीनां स्वतः सत्त्वं प्रकाशत्वं च नास्ति चिदात्मप्रकाशेनैव तत्सत्तया च सच्चिद्रूपत्वेन ह्यात्मनि कश्चित्संदिग्धेत तत्सत्तायां वा कश्चिद्विपर्ययेति स्वस्य चिद्रूपत्वेऽपि धर्मिणा सर्वमज्ञातं प्रकारे तु विपर्ययः इति न्यायात् न विवादः । आगोपालांगनं सर्वेषामहमस्मि जानामीति प्रत्ययात्मे मम संप्रदानत्वस्य संबंधत्वविवक्षायां षष्ठी । कथंभूतायाः मम । अस्य चिदात्मनः आनंदतायामानंदस्वरूपतायां मोहितायाः एतदानंदताविषयकाज्ञानवत्याः । अतोऽस्यामानंदतायां युक्तिः श्रुत्यनुकूलतर्कं तदनुगृहीतमनुमानं वा मानं श्रु-

तिरूपं ब्रूहि । आत्मैव सुखरूप इति प्रथमकवले उक्तमपि पुनर्वक्तव्यं दुर्ग्रहत्वादस्य वस्तुन इति चकार । सप्तम्यंतस्योभयत्रान्वयार्थः ॥ २ ॥

चित्तवृत्तेरिदं वाक्यं श्रुत्वा संतुष्टमानसः ॥
स विवेकाश्रमः प्राह तद्विपर्यासभिद्वचः ॥ ३ ॥

चित्तवृत्तिवाक्यं श्रुत्वा योगिराडाह । चित्तवृत्तेरिति । चित्तवृत्तेरिदं पूर्वोक्तं वाक्यं श्रुत्वा संतुष्टमानसः संहृष्टचित्तः स विवेकाश्रमः तद्विपर्यासभित् तस्याश्चित्तवृत्तेर्विपर्यासस्य विपर्ययस्य निवर्तकं वचः प्राह ॥ ३ ॥

वांच्छस्युपेयं तन्वंगि नोपायमभिवांच्छसि ॥
यद्दुष्टचित्ता विषयैः पृच्छस्यात्मसुखं महत् ॥ ४ ॥

विषयाशात्यागं विना त्वं कथमुपदेश्येत्याह । वांच्छसीति । हे तन्वंगि उपायं साधनं विना उपेयं फलं वांच्छसीत्ययोग्यं कारणं विना कार्यानुत्पत्तेः । अहं कथं साधनहीनेत्यत आह । यद्दुष्टचित्ता दुष्टं रागादिदोषाविष्टं चित्तं यस्याः सा तथा । कुत्र रागोऽत आह । विषयैः विषिन्वंति पुरुषपशुमिति व्युत्पत्तेरुक्तत्वादिति विषयास्तैर्दूषितचित्ता परिच्छिन्ने सुखे सक्ता त्वं महत् निरतिशयं पूर्णसुखं पृच्छसि, नद्यपरतीरे आसक्तस्य परतीरप्राप्तिः संभवति ॥ ४ ॥

क्षणिकैर्विषयोद्भूतैरानंदैरभिभूतया ॥
शक्यं ज्ञातुं कथं भद्रे त्वया ऽऽत्मसुखमीप्सितम् ॥५॥

कथं ममायोग्यतात्मसुखग्रहणे इत्यत आह । क्षणिकैरिति । क्षणिकैः उत्पत्तिध्वंसिभिः विषयोद्भूतैः स्रक्चंदनादिविषयप्रादुर्भूतैः आनंदाभासैरभिभूतया तिरस्कृतया मलिनया त्वया हे भद्रे ईप्सितं विरक्तैः इष्टमात्मसुखं कथं ज्ञातुं शक्यम्, अपितु न कथमपीत्यर्थः । ननु विषयासक्ताया भद्ररूपत्वं कथमिति चेत् सत्यं पूर्णानंदप्राप्तिरिच्छावत्वेनेत्यवेहि ॥ ५ ॥

रसालफलवत्पुंसामंतःकरणमिष्यते ॥
अपक्वं बहुदोषाय पक्वं तोषाय कल्पते ॥ ६ ॥

'कषायपंक्तिः कर्माणि ज्ञानं तु परमागतिः ॥ कषाये कर्मभिः पक्के ततो ज्ञाने प्रवर्तते' इत्यादिवचनात् मनोदोषनाशं विना ज्ञानाधिकारिता नेति सदृष्टांतमाह । रसालेति । पुंसामत-करणंरसालफलवत् आम्रफलव-दिष्यते । केन गुणेन तत्तुल्यमत आह । अपक्वरसालफलं यथा रोगोत्पा-दनाय भवति तथा अशुद्धं मनो बहुदोषाय अविद्यु खाय । शुद्धस्य किं फलमत आह । पक्वं शुद्धं तोषाय ज्ञानप्राप्तिद्वारा पूर्णानंदाविर्भा-वजन्यपरमतोषाय कल्पते समर्थं भवति ॥ ६ ॥

दुष्टेंद्रियः स्वेष्टतमं विषयं कथमृच्छति ॥
पित्तोपहतजिह्वस्य दुर्लभो गुडगो रसः ॥ ७ ॥

ननु मनसा यत्प्राप्यं निरतिशयसुखस्वरूपं वस्तुतत्त्वातिसंनिहितम-स्ति कथं प्राप्तुमशक्यमित्याशंक्य दुष्टचक्षुः समीपवर्त्यपिरूपं यथा न द्-श्यते तथा रागादिदोषदुष्टमनसाऽप्यात्मा न दृश्यते इत्याह । दुष्टेति । दुष्टं दोषयुक्तमिंद्रियं यस्य स तथा स्वेष्टतमं स्वस्याधिकारिणः पु-रुषस्येष्टं वैराग्यमिष्टतरं ज्ञानमिष्टतमं तत्प्राप्यं स्वरूपं विषयं प्रत्यक्ष-योग्यमपि कथमृच्छति कथं प्राप्नोति न कथमपि । तत्र दृष्टांत । पित्तोपह-तजिह्वस्य पित्तेन हता रसानुभवासमर्था जिह्वा यस्य स तथा तस्य गु-डगतो रसो दुर्लभोऽप्रत्यक्षः । तथा दुष्टमनसात्माऽपीत्यर्थः ॥ ७ ॥

बलवत्स्वसजातीयग्रहणोपादितोग्रहः ॥
यथा कामलरूपोत्थ शंखशौक्ल्यस्य विद्यते ॥ ८ ॥

नन्वेवमपि को दोष, न च प्रसिद्ध एव रागादि- तस्मिन्सति तेन कथं तदग्रह इत्याशंक्य दृष्टांतपूर्वकं द्वाभ्यामुत्तरयति । बलवदिति । यथा कमलरूपोत्थः कामलरूपं चक्षुरोग. तेन उत्थ उत्पन्न- शंखशौक्ल्य-स्य शंखरूपनिष्ठशुक्लत्वस्य बलवत् स्वसजातीयग्रहणापादितोऽग्रह' । स्वशब्देन शंखगतशौक्ल्यं तस्य रूपत्वेन सजातीयस्य कामलरोगजन्य-पित्तमिति नाम्नो ग्रहणं तेन शौक्ल्यस्याग्रह- अज्ञानं विद्यते ॥ ८ ॥

तथा विषयजानंदग्रहणोपादितोऽग्रहः ॥

**आत्मानंदस्य तन्वंगि निवर्तेताचिरात्कथम् ॥ ९ ॥**

दार्ष्टांतमाह । तथेति । हे तन्वंगि तमात्मानंदस्याग्रहः अचिरात्तूर्णं कथं निवर्तेत । कथंभूतोऽग्रहः । विषयजानंदग्रहणापादितः अनादिकालमारभ्य विषयजस्यानंदस्य ग्रहणं तेनापादितो जात इत्यर्थः ॥ ९ ॥

**दुष्टे विषयजानंदबिंदुचुंबनलंपटे ॥**
**मनःशुनि कथं वा स्यादात्मानंदाब्धिदर्शनम् ॥१०॥**

पुनरपीममर्थं अभ्यंगतरेणाह । दुष्ट इति । दुष्टे मनःशुनि चित्तसारमेये सति आत्मानंदोऽब्धिरिव पूर्णः तस्य दर्शनं साक्षात्कारः कथं वा, न कथमपीत्यर्थः । स्यादित्यसंभावनायाम् । नचैवमनिर्मोक्षापत्तिरिति वाच्यम्, दुष्टे सति मनसीष्टापत्तेः । कथंभूते मनःशुनि । विषयजानंदबिंदुचुंबनलंपटे रूपादिविषयजन्यो य आनंदः तस्य बिंदुः तस्य चुंबनं आस्वादः तत्र लंपटे आसक्ते ॥ १० ॥

**हिरण्यनिधिमाच्छन्नमक्षेत्रज्ञा यथा नराः ॥**
**परिभ्रमंतोऽप्युपरि न विंदंत्यप्रबोधतः ॥ ११ ॥**

अस्मिन्नर्थे सुरेश्वराचार्यसंमतिं श्लोकद्वयेनाह । हिरण्येति । यथाऽक्षेत्रज्ञाः क्षेत्रं सुवर्णस्थानं जानंति ते क्षेत्रज्ञाः न क्षेत्रज्ञाः अक्षेत्रज्ञाः उपरि भ्रमंतोऽपि गच्छंतोऽपि अप्रबोधतः आप्तवाक्यजन्यज्ञानाभावात् हिरण्यनिधिं हिरण्यस्य सुवर्णस्याधारस्थलं न विंदंति न लभंते । कथंभूतं हिरण्यनिधिम् । आच्छन्नं मृदादिनाऽऽवृतम् ॥ ११ ॥

**नक्तं दिवं ब्रह्मलोकं यांत्यो ऽपीमाः प्रजास्तथा ॥**
**प्रत्यक्तया न विंदंति महामोहावगुंठनात् ॥ १२ ॥**

तथा इमाः प्रत्यक्षप्रमाणसिद्धाः प्रजाः । नक्तं दिवं रात्रिंदिनम् । ब्रह्मलोकं लोकनं लोकः, भावे घञ् । ब्रह्मैव लोकः ब्रह्मलोकः तं आत्मानं यांत्यो गच्छंत्योऽपि मत्प्रक्रपा त्वंपदलक्ष्याभिन्नतया यैरुपाधिभिर्गच्छंति तानुपाधीन्विहाय शुद्धस्य त्वंपदार्थस्य तत्पदलक्ष्याभिन्नं न विंदंति न प्राप्नुवंति येऽपि यावत् । अपिना सूचितं हेतुं प्रकटयति । महामोहाव-

गुंठनात् महामोहः अज्ञानं तस्यावगुंठनमावरणं विक्षेपः तत इत्यर्थः ॥ १२ ॥।

इति सौरेश्वरं वाक्यद्वयं श्रुतिशिखाश्रयम् ॥
ब्रूते मदुक्तमेवार्थमिति तन्व्यवधारय ॥ १३ ॥

हे तन्वि श्रुतिशिखाश्रयं वेदांतमूलकं सौरेश्वरं सुरेश्वरस्येदं सौरेश्वरं वाक्यद्वयं श्लोकद्वयं मदुक्तमेवार्थमिति पूर्वोक्तं मात्रमपि वस्तुदोषेण न लभ्यते । ब्रूते कथयति । वाक्यद्वयमिति कर्तृपदम् ॥ १३ ॥

महामोहविलासोत्थविषयाभ्रसुसंवृतः ॥
नाभासतेऽतिकस्थोऽपि प्रत्यगानंदचंद्रमाः ॥ १४ ॥

परमेश्वराराधनादिजन्यवैराग्यं विना लब्धोऽपि न लभ्यते इत्याह । महामोहेति । प्रत्यगानंदचंद्रमाः प्रतिभातिलोम्येनांचति भाति प्रत्यक् स चासावानंद. प्रत्यगानंदः स चंद्रमा इव अंतिकस्थः अंति सामीप्येनाधिष्ठानतया स्थितः । अपिरत्यंताव्यवधानद्योतक । कथभूतः । महामोहविलासोत्थविषयाभ्रसुसंवृत' महामोहस्य विलासभ्रमात्तस्मादुत्थो महामोहविलासोत्थः विषयः आत्मभिन्नत्वेन यज्ज्ञायते तत्सर्वं भ्रमविषयीभूतं जगत्तेनाभ्रसदृशेन सुसंवृत' । अथवा महामोहो माया तस्या विलासः ईक्षणं तदुत्थो वियदादिप्रपंचो विषयः स अभ्रमिव मेघसदृश. तेन सुसंवृत. आच्छादितः । यथा मेघेनाच्छादितश्चंद्रमा न दृश्यते तथा ज्ञानावृत. आत्मा अज्ञानोत्थविषयानंदलब्धाभ्राच्छादितो ऽविवेकदृष्टिभिर्न साक्षात्क्रियते इति भावः ॥ १४ ॥

लब्धत्रैलोक्यराज्यो ना भिक्षां नाकांक्षते यथा ॥
एवं लब्धपरानंदः क्षुद्रानंदं न कांक्षति ॥ १५ ॥

आत्मनो दुर्लभत्वे सुरेश्वराचार्यवाक्यं प्रमाणत्वेनाह । लब्धेति । लब्धत्रैलोक्यराज्यो ना लब्धं त्रैलोक्यराज्यं येन सः ना पुरुषः यथा भिक्षां नेच्छति एवं तथा लब्धपरानंदः ना पुरुषः क्षुद्रानंदं श्वनकादिसाधारणमिंद्रियविषयजन्यसुखं न कांक्षति नेच्छति ॥ १५ ॥

इति सौरेश्वरं वाक्यं परानंददुरापताम् ॥
दृष्टांतमिषतो वक्ति ज्ञास्यसि त्वं कथं नु तम् ॥१६॥

इति सुरेश्वरवाक्यं दृष्टांतमिषतो दृष्टांतव्याजेन परानंददुरापतां निरतिशयानंदस्य दुर्लभतां वक्ति ईदृशोऽपि महातोपस्य दुर्लभतां कथयति । नु उत्प्रेक्षायाम् । त्वं स्त्री ब्रह्मलोकतृणीकारैः परमहंसैः प्राप्यं पूर्णानंदं कथं ज्ञास्यसीत्यर्थः ॥ १६ ॥

चित्तवृत्ते यदा संगं त्यक्त्वा विषयजे सुखे ॥
प्रत्यक्प्रवणतां यास्यस्यथानंदं तमाप्स्यसि ॥ १७ ॥

तर्हि पूर्णानंदमाप्तौ निराशाऽहं स्यामित्यत आह । चित्तवृत्ते इति । हे चित्तवृत्ते यदा विषयजे सुखे संगमासक्तिं त्यक्त्वा प्रत्यक्प्रवणतां ब्रह्मात्माकारवृत्तिप्रवाहरूपतां यास्यसि ततः किमप्यानंदं तं प्रत्यगभिन्नब्रह्मानंदमाप्स्यसि ॥ १७ ॥

रंभातिलोत्तमादिस्वरंगनालिंगनादिजम् ॥
सुखं किं प्राप्यते स्वर्गप्रमाणाकर्णनान्नृभिः ॥ १८ ॥

आत्मनः आनंदतायां प्रमाणान्वेषणमात्रेण न कृतकृत्यता इत्यत्र पूर्वमीमांसादृष्टांतमाह । रंभेति । रंभातिलोत्तमादिस्वरंगनालिंगनादिजं रंभातिलोत्तमादयः स्वः स्वर्गस्यांगनाः स्ववेश्याः तासामालिंगनादिजन्यं सुखं किं स्वर्गप्रमाणाकर्णनात् स्वर्गे प्रमाणं तस्याकर्णनं श्रवणं तस्मात् नृभिर्मनुष्यैः प्राप्यते, अपितु न प्राप्यते ॥ १८ ॥

ज्योतिष्टोमादिकर्ता तु स्वर्गमानश्रुतिं विना ॥
सुखं स्वर्गस्थमाप्नोति मानान्वेषणयाऽस्य किम् ॥१९॥

तर्हि कथं प्राप्यते ऽत आह । ज्योतिष्टोमादीति । " ज्योतिष्टोमेन स्वर्गकामो यजेत " इत्यादिवाक्यविहितज्योतिष्टोमादियागानुष्ठाता तु स्वर्गमानश्रुतिं विना ज्योतिष्टोमादिवाक्यं श्रुत्वाऽनुष्ठाने प्रवृत्तः प्रमाणप्रश्नं विनैव स्वर्गीयं सुखं प्राप्नोति । अस्यानुष्ठातुः प्रमाणान्वेषणमात्रेण किं, न किमपीत्यर्थः ॥ १९ ॥

तद्वच्चित्तविशुद्ध्यादिद्वारा प्रत्यक्परा यदा ॥
भविष्यसि वरारोहे तमात्मानंदमेष्यसि ॥ २० ॥

अत्र दार्ष्टांतमाह । तद्वदिति । हे वरारोहे तद्वत् यागाद्यनुष्ठानकर्तृवत् चित्तशुद्ध्यादिद्वारा निष्कामकर्मादिजन्यचित्तशुद्ध्यादिद्वारा । कर्मजन्या चित्तशुद्धिः, ततः साधनसंपत्तिः, ततो ततो गुरूपसंपत्तिः, वेदांतश्रवणादिना प्रत्यक्परा प्रतीचो ब्रह्मत्वेन यदनुसंधानं तत्परा यदा यस्मिन्काले त्वं भविष्यसि तमात्मानंदमेष्यसि । निदिध्यासनजन्यब्रह्मसाक्षात्कारेण परिपूर्णानंदमेष्यसीत्यर्थः ॥ २० ॥

ततो व्यर्थो ऽयमुद्वेगो वक्तुः क्लेशवहस्तव ॥
यदात्मानंदमानं च तद्युक्तिं चापि पृच्छसि ॥ २१ ॥

साधनानुष्ठानाभावे कोऽर्थः परिश्रम इत्याह । तत इति । तानि साधनानि वर्जयित्वा ऽयमुद्वेगः फलोत्कंठारूपः व्यर्थः वक्तुः तव श्रोतुः क्लेशवहः क्लेशदः । यत् यस्मात् आत्मानंदे मानं प्रमाणं तद्युक्तिं तत्रानंदे युक्तिं पृच्छसि । चापिशब्दौ समुच्चायकौ ॥ २१ ॥

ज्येष्ठाऽस्यथापि भगिनी सन्मार्गानुसृताऽसि च ॥
तत आत्मानंदतायां मानं युक्तिं वदाम्यहम् ॥ २२ ॥

तर्हि न वक्तव्ये मानयुक्ती नेत्याह । ज्येष्ठेति । त्वमथापि ज्येष्ठभगिनी असि । च पुनः सन्मार्गानुसृताऽसि सतां स्वतःप्रमाणभूतानां वेदानां मार्गो ब्रह्म तदनुसृता तत्प्राप्तीच्छावती । कर्तरि षष्ठी, कर्मणि ब्रह्म । ततः ताभ्यां हेतुभ्यां आत्मानंदतायां मानं युक्तिमहं वदामि ॥ २२ ॥

अन्वयव्यतिरेकाभ्यां तपः कृत्वा भृगुः किल ॥
आनंदं ब्रह्मणस्तत्त्वं ज्ञातवानिति या श्रुतिः ॥ २३ ॥

तत्रानंदत्वे प्रमाणत्वेन तैत्तरीये ब्रह्मवल्यां प्रतिपादितां ब्रह्मविद्यामाह । अन्वयेति । अन्वयव्यतिरेकाभ्यां तपः कृत्वा, तपसि सति ज्ञानान्वयः तदभावे ज्ञानाभाव इति । तथाच श्रुतिः– " भृगुर्वै वारुणिर्वरुणं पितरमुपससार ॥ अधीहि भगवो ब्रह्म" इति । अस्यार्थः–भृज्जति तपसा भृगुः

तपोऽनुष्ठानेन शुद्धांतःकरणः वरुणस्यापत्यं वारुणिः वरुणं पितरं ब्रह्म जिज्ञासुरुपससारोपगतवान् । अधीहि अध्यापय स्मारय । इक् स्मरणे इति स्मृतेः । स च गुरुः 'अन्नं प्राणं चक्षुः श्रोत्रं मनो वाचम्' इत्युपदिष्टवान्, अद्यते भुज्यते आयते अन्नं पंचभूतरूपं विराड्ब्रह्म निर्दिष्टं तस्योत्पत्त्यादिकं दृष्ट्वा तपः कृतवान् । पुनः 'प्राणमचारं ब्रह्म' इत्युपदिष्टवान्, प्राणं हिरण्यगर्भसाधनत्वेन तपो ब्रह्मेति ज्ञातवान् । चक्षुरादिनि ब्रह्मोपलब्धिसाधनानि, मनोऽपि तदंतस्थितत्वात् । पूर्वं ज्ञातं ब्रह्म तदुत्पत्तिं तपसा एकाग्रवृत्त्या दृष्ट्वा तत आनंदं मायाविशिष्टं ब्रह्म ज्ञातवान् । तदपि मायाविशिष्टत्वेन मिथ्या इति निश्चित्य कारणत्वोपलक्षितं शुद्धं ब्रह्मणस्तत्त्वमनारोपितरूपं निश्चितवान् । षष्ठी तु राहोः शिर इतिवदभेदे बोध्या । तपोऽत्र मनस ऐकाग्र्यम् । तथाच स्मृतिः–'मनसश्चेंद्रियाणां च ऐकाग्र्यं परमं तपः ॥ तज्ज्यायः सर्वधर्मेभ्यः स धर्मः पर उच्यते' इति । नन्वत्र तपसो धर्मत्वं कथमुक्तमिति चेत् यावज्जिज्ञासा न निवर्तते तावत्मुख्यसाधनत्वेनेदमेवानुष्ठेयमिति तात्पर्यात् ॥ २३ ॥

**या च विज्ञानमानंदं ब्रह्मेति प्राह निश्चितम् ॥**
**सैषाऽऽनंदस्य मीमांसेत्युपक्रम्य शतोत्तरान् ॥ २४ ॥**
**उक्तानंदान्वदति या ह्यात्मानंदमनुत्तमम् ॥**
**आनंदं ब्रह्मणो विद्वानित्याहांते च या श्रुतिः ॥ २५ ॥**

आत्मनः आनंदत्वे श्रुत्यंतरमाह । या चेति । या प्रसिद्धा विज्ञानमानंदं ब्रह्मेति निश्चितमबाधितार्थं यथा स्यात्तथा प्राह उक्तवती श्रुतिः, कूटस्थो निर्विकारश्चिद्रूपोऽपि आत्मा वृक्षशाखाभिन्नसूर्यप्रकाशवत् अंतःकरणाद्युपाधिविशिष्टो विज्ञानशब्दवाच्यो भवति, शाखोच्छेदे प्रकाशे इवोपाधिमिथ्यात्वे स एव वृक्षरूपप्रपंचकारणोपलक्षित आनंदब्रह्मरूप इत्यर्थः । तत्रैव वचनांतरमाह । सैषेति । सैषा ऽऽनंदस्य मीमांसेत्युपक्रम्य शतोत्तरान् आनंदानुक्त्वा या हि आत्मानंदमनुत्तमं वदतीति संबंधः । आनंदस्य मीमांसाविचारः– । आनंदो विषयविषयीसंबंधजनितो लौकि

कवत्, अथवा स्वाभाविकवत् इत्यतो विचारः, लौकिकस्य गोपालांगनं प्रसिद्धत्वेन तत्र श्रुतेस्तात्पर्याभावात्, अलौकिकानंदे एव श्रुतेस्तात्प र्यात् । लौकिकानंदः क्वचित्काष्ठां प्राप्तः सातिशयत्वात् परिमाणवत् । लौकिकोऽप्यानंदो ब्रह्मानंदस्य लेशो ऽविद्यया ब्रह्माद्यानुभवविषयो लौकिकः, स एवाविद्याकामकर्मापकर्षेण मानुष्याद्युत्तरोत्तरभूमिषु अकामहतप्रत्यक्षः, शतगुणोत्तरोत्कर्षेण यावद्धिरण्यगर्भस्य ब्रह्मण आनंदो ज्ञानेनाज्ञाने निरस्ते तत्कृतविषयविषयिविभागे निरस्ते स्वाभाविक परिपूर्ण आनंदो भवत्येतमर्थं दर्शयिष्यन्नाह । शतोत्तरानानंदान् विशिष्टोऽधीतवेदो युवा नीरोगो बलिष्ठः दृष्टादृष्टार्थवित्तसंयुक्तः सार्वभौमो राजाऽस्ति स एको मानुषानंदः, ततः शतगुणो ये कर्मविद्यावशात् गंधर्वत्वं प्राप्ता मनुष्यगंधर्वास्तेषामानंदः, ततः शतगुणो ये जातित एव गंधर्वास्तेषां देवगंधर्वाणामानंदः, ततः शतगुणः पितॄणामानंदं, ततः आजाने देवलोके जाता आजानजास्तेषामानंदः, ततः शतगुणः स्मार्तकर्मणा ये कर्मदेवास्तेषामानंदः, ततः शतगुणः श्रौतकर्मणा ये देवास्तेषामानंदः, ततः शतगुण इंद्रस्यानंदः, ततः शतगुणो बृहस्पतेरानंदः, ततः शतगुणः प्रजापतेर्विराजो आनंदः, ततः शतगुणो ब्रह्मणो हिरण्यगर्भस्यानंद एकः । श्रोत्रियस्य चाकामहतस्येति सर्वपर्यायेषु वर्तते " एतस्यैवानंदस्यान्यानि भूतानि मात्रामुपजीवंति " इतिश्रुत्यंतरात् श्रोत्रियस्याकामहतस्याद्वैतब्रह्मरूपस्य लेशा अद्वैतज्ञानिप्रत्यक्षे एकता गता इत्याशयेनाह । ज्ञात्मानंदमनुत्तमं तत्तद्गुणितानंदकाष्ठाभूतं निरतिशयमित्यर्थः । अद्वैतानंदमनुभवितुरेवाभयपदप्राप्तिरित्याह । आतदमिति । तं ब्रह्मणः श्रोत्रियस्यावृजिनस्याकामहतस्य सर्वपणारहितस्यात्मभूतं विषयविषयिभावनिर्मुक्तं स्वाभाविकं नित्यमविभक्तं परमानंदं विद्वान् न बिभेति । भयहेत्वोर्द्वितीयस्याभावादित्यर्थः ॥ २४ ॥ २५ ॥

एषो ऽस्य परमानंद इति या वक्ति च स्फुटम् ॥
को ह्येवान्यदिति प्राह याऽऽनंदत्वं परात्मनः ॥ २६ ॥

आत्मन आनंदत्वे श्रुत्यंतरमुदाहरति । एष इति । सुषुप्तस्यैकत्वरूपा-

नुभवलक्षण आनंदः परमः साधनासाध्यः अतएव विषयेंद्रियसंबंधज-न्यसुखादिलक्षण इति स्फुटं यथा स्यात्तथा वक्ति कथयति। तत्रैव वच-नांतरमाह । को ह्येवेति । अतो ज्ञायते संघाताधिष्ठाता आनंद आत्मा । कुतः, प्राणनादिक्रियादर्शनात् । अयं देहः जीवतः पुरुषस्य प्राणे प्राणिति अपानेनापानितिवायुनिमित्ता इंद्रियचेष्टाः संहतैः कार्यकरणै-र्निवर्त्यमाना दृश्यंते ताश्च चेतनमसंहतं विना न संभवंति जडक्रिय चेतनाधीनाक्रियात्वात् रथादिक्रियावत् । यदि एष आकाशे परमे व्योम्नि निहित आनंदो न स्यात् को ह्येव लोके अपान्यादपानचेष्टां कुर्यात् प्राण्यात्प्राणचेष्टां कुर्यात् तस्मादस्तिसंघाताधिष्ठाता आनंद आत्मा इति । परात्मनः परब्रह्मात्मनः आंदत्वं प्राह प्रकर्षेण तात्पर्येण कथयति ॥ २६ ॥

**तदाद्या श्रुतयो ब्रह्मानंदत्वे यांति मानताम् ॥**
**न च तास्वविगीतासु प्रामाण्ये कोऽपि संशयः ॥२७॥**

इमा एव न वदंत्यन्या अथात्मनः आनंदरूपत्वं प्रतिपादयंतीत्याह । तदाद्या इति । आदिना ' आनंदो ब्रह्मेति व्यजानात्' इत्यादिपरिग्रहः । ब्रह्मानंदत्वे ब्रह्मण आनंदत्वे मानतां प्रमाणताम् । ननु तासां कर्मप्रति-पादकवाक्यशेषत्वं कर्मकर्त्रादिस्तुतिद्वारा अथवा ब्रह्मण आनंदस्वरूप-तामतिपादकत्वमिति प्रामाण्ये संशय इत्याशंक्य परमेश्वरेण निश्वासव-त्प्रणीतत्वादबाधितार्थत्वात् भिन्नप्रकरणस्थत्वाद्भिन्नाधिकारादिमत्वान्न प्रामाण्ये संशय इत्याह । नचेति । तासु अविगीतासु अविरुद्धार्थासु परमार्थपरासु प्रामाण्ये न च कोऽपि संशयः ॥ २७ ॥

**न च पूर्वोत्तरोत्पन्नशिष्टत्रैवर्णिकाश्रितम् ॥**
**तासामर्थं परित्यज्यांगीकुर्मोऽनुपकल्पितम् ॥ २८ ॥**

ननु " सदेव सौम्येदमग्र आसीत् " इत्यादिश्रुतेः सन्नीश्वर इदंशब्देन जगत् तथाच जीवः अचिज्जगत्तद्विशिष्ट अद्वैत ईश्वरोऽतो विशिष्टाद्वैत एव वाक्यार्थ इत्याशंक्य वेदव्यासादिभिः शिष्टैः पद्धियन्त्रि श्रुतिता-

त्पर्यनिर्णायकमाश्रित्याखंडार्थस्यैव प्रतिपादितत्वादित्याह द्वाभ्याम्, न च पूर्वेति । तासां श्रुतीनां पूर्वोत्तरोत्पन्ना ये विशिष्टत्रैवर्णिकाः वसिष्ठादयः शुकादयः ऋषभादयः समाध्यादयः तैराश्रितं स्वीकृतमद्वैतमर्थं परित्यज्यानुपकल्पितं श्रुत्यनभिमेतं नांगीकुर्म इति ॥ २८ ॥

**अद्वितीयचिदानंदानंतसद्रूप आत्मनि ॥**
**तात्पर्यनिर्णयोपायैः षड्भिः श्रुत्यर्थतां गते ॥ २९ ॥**

क्क सति श्रुत्यनभिमेतमर्थं न स्वीकुर्युरित्यत आह । अद्वितीयेति । अद्वितीयचिदानंदानंतसद्रूप आत्मनि षड्भिः तात्पर्यनिर्णयोपायैः श्रुत्यर्थतां गते इति संबंधः । अद्वितीयश्च चिच्च आनंदश्च अनंतश्च सद्रूपश्च तस्मिन् । द्वितीयस्य जडस्य दुःखस्य परिछिन्नस्यासतश्च व्यावृत्त्या विशेषणानि अद्वितीयादीनि आत्मन इति । नत्वेषामेकार्थत्वं भिन्नार्थत्वं वा नाद्यः द्वंद्वानुपपत्तेः न द्वितीयोऽपसिद्धांतापत्तेरिति चेन्न, लक्षणया सामानाधिकरण्यसंबंधेनाखंडार्थपरत्वोपपत्तेरिति न च संसर्गपरत्वं विशिष्टपरत्वं वास्तु सत्यं ज्ञानमित्यवांतरवाक्यस्य महावाक्यस्यापि इति वाच्यम्, भिन्नार्थस्य वेदार्थविद्भिरनंगीकारात् । तथाचोक्तं भगवत्पादैः– ' संसर्गो वा विशिष्टो वा वाक्यार्थो नात्र संमतः ॥ अखंडैकरसत्वेन वाक्यार्थो विदुषां मतः ' इति । न च सदेवेत्यस्यार्थं अन्यर्थयित इति वाच्यम्, तत्र षड्विधलिंगाभावेन तत्र श्रुतितात्पर्याभावादित्याह । तात्पर्येति । तात्पर्यनिर्णयोपायैः तात्पर्यनिर्णयसाधनैः षड्भिः षट्संख्याकैः श्रुत्यर्थतां गते श्रुतितात्पर्यविषयतां प्राप्ते । षड्विधलिंगानि–उपक्रमोपसंहारावभ्यासो ऽपूर्वता फलं अर्थवादोपपत्ती च । लिंगं तात्पर्यनिर्णये यथा। छांदोग्ये षष्ठे प्रपाठके–" सदेव सोम्येदमग्र आसीत् " इतिश्रुत्या अद्वितीयात्मप्रतिपादकत्वात्सृष्टेः पूर्वं नामरूपरहितं सत्तामात्रमिदं जगदिति प्रतिपादनमुपक्रम्य, पतीयमानं सर्वमिदं जगत् पूर्वोक्तसत्स्वरूपमेव नान्यदिति एतदात्म्यमिदं सर्वमिति श्रुत्यांते प्रतिपादनमुपसंहारः । प्रकरणप्रतिपाद्यस्य तन्मध्ये तत्त्वमसीति नवकृत्वः प्रतिपादनमभ्यासः । प्रमाणांतरे मध्ये लक्षणया तत्त्वोपनिषदं पुरुषं पृच्छामी-

त्युपनिषत्प्रमाणगम्य आत्मा नेतरप्रमाणगम्य इति विवेकः । अपूर्वता ।
" आचार्यवान्पुरुषो वेद तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ संप-
त्स्ये " इत्यादिश्रुत्या प्रारब्धक्षयपर्यंतं देहेंद्रियादौ मिथ्याप्रतीतिः
प्रारब्धस्य निःशेषनाशे प्राप्ते तदप्रतीतिपूर्वकमद्वितीयात्मस्वरूपेणावस्था-
नस्य प्रतिपादनं फलम् । " उततमादेशमप्राक्षो येनाश्रुतं श्रुतं भवत्यमतं
मतम् " इत्यादिश्रुत्या प्रकरणप्रतिपाद्यस्य प्रसंशनमर्थवादः । " वाचा-
रंभणं विकारो नामधेयं मृत्तिकेत्येव सत्यम् " इत्यादिश्रुत्या मृज्जन्य-
घटादीनां मृदभिन्नत्वं यथा तथा परमकारणजन्यत्वेन जगतो ब्रह्माभि-
न्नत्वप्रतिपादनमुपपत्तिरिति । तैरिति ॥ २९ ॥

**येऽस्मिन्विप्रतिपद्यंते तर्कैरापातसुंदरैः ॥**
**ये वा वेदांतवाक्यानां स्वेच्छयाऽर्थांतरं क्वचित् ॥ ३० ॥**

एवं षड्विधलिंगप्रतिपादितेऽद्वैते परमार्थे संसारानर्थपरपारतारके स्थिते
सति येऽत्रान्यथा प्रतिपद्यंते तान्निंदति पंचभिः । येऽस्मिन्निति । ये
ऽस्मिन्नखंडार्थे आपातसुंदरैः आपातेन विचाररहित्येन गंभीरार्थानालोच-
नमात्रेण सुंदराः तैः विप्रतिपद्यंते विप्रतिपत्तिं कुर्वते । ये वा वेदांतवा-
क्यानां कचित्कदापि स्वेच्छया स्वकपोलकल्पनामात्रेण । अर्थांतरं
पूर्वोक्तम् ॥ ३० ॥

**कल्पयंति नरा नैते चेष्टया किंतु वानराः ॥**
**दंडनीया महीपालै रासभारोहणादिभिः ॥ ३१ ॥**

कल्पयंति ये ते न नरा न मनुष्याः किंतु चेष्टया वागादिव्यापाररूपया
वानराः । वाशब्द इवार्थे । नरसदृशाः आकृतिमात्रेण, न तु मुख्या
नराः । मुख्या एके वास्तवं नारायणतत्त्वं स्वात्मानं निश्चिन्वति । यथा
तद्धाणीषु कश्चिदर्थो न भाति तथैतद्धाणीषु परमार्थो न भाति । तस्मा-
त्सचौरत्वाद्दंडो विधेयो राजभिरेषु इत्याह । दंडेति । महीपालैर्नृपैः
रासभारोहणादिभिः यथाऽपराधी खरारोहणादिभिर्दंड्यते तथैतेऽपि ।
यदि राजदंडो न स्यात्तर्हि परमेश्वरीयदंडः श्रुत्युक्तो गर्भवासादिरूपो

भविष्यति । तथाचश्रुतिः-"ये के चात्महनो जनाः" इति ॥ ३१ ॥

अद्वितीये चिदानंदे श्रुतिप्रोक्ते ऽत्र ये भिदाम् ॥
कल्पयंत्यनिरीक्ष्यास्यास्ते निष्कास्याः पुराद्बहिः॥३२॥

" यदुदरमंतरं कुरुते अथ तस्य भयं भवति मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति " इत्यादिश्रुतिनिषिद्धभेदं स्वीकुर्वते तेषां का दशा या पूर्वेषां सैवेत्याह । अद्वितीय इति । श्रुतिप्रोक्ते तत्त्वमस्याद्युक्ते प्रत्यग्रूपे ऽद्वितीये ब्रह्मणि अत्र परमार्थे ये भिदां भेदं कल्पयंति स्वीकुर्वंति ते अनिरीक्ष्यास्याः न निरीक्ष्यं द्रष्टुं योग्यमास्यं मुखं येषां ते । तदा कुत्र स्थाप्या इत्याह । निष्कास्याः पुराद्बहिरिति ॥ ३२ ॥

वरं वंध्या महीलोके वरं व्याघ्रप्रसूरपि ॥
तादृशी मास्तु जननी या सूते भेदवादिनम् ॥ ३३ ॥

यतो भेदवादिनो जन्मपरंपरामनुभवंति अतस्तज्जननी अपि निंद्यते शास्त्रेणेत्याह । वरमिति । महीलोके मर्त्यलोके वंध्या वरं अनुत्पादितपुत्रा श्रेष्ठा । व्याघ्रस्य सिंहस्य प्रसूरपि जननी श्रेष्ठा, भेदवाद्यनुत्पादकत्वात् । या भेदवादिनं सूते उत्पादयति तादृशी जननी माऽस्तु । भेदवादिन्युत्पन्ने सति अन्येऽपि तत्प्रसंगेन भेदवादिनः स्युरितिहेतोस्तादृशी माऽस्त्वित्यर्थः ॥ ३३ ॥

भेदवादकथोन्मत्ताः कार्याकार्यकथोज्झिताः ॥
मद्यसंपर्कमात्रेण कथं वाच्या द्विजा इति ॥ ३४ ॥

भेदवार्तां सुरातुल्यत्वेन निंदति । भेदेति । भेदवादकथोन्मत्ता, भेदन भेद', भिदिर्विदारणे ऽस्माद्भावे घञिरूपं विदारणपदार्थो भेद- । आत्मनोऽन्यथाग्रहणेन पूर्वमात्महत्यपातकभुज उक्ताः । अत्र तु परिपूर्णस्य चिद्घनस्य विष्णोर्विदारणरूपेण भेदेनातिपातकिनो भूत्वा ऽनर्थपरंपरामनुभविष्यंति इति सूचितम् । तस्य वादः वदनं जल्पनं तस्य कथा लोके प्रवर्तनं सा एव सुरातुल्या तया उन्मत्ताः । न च तस्याः कथं सुरातुल्यत्वमिति वाच्यम्, गर्भवासपरंपराजनकत्वेन तुल्यत्वात् । नन्वेवमपि

कथमुन्मत्तत्वमिति चेन्न, उन्मत्तस्य यथा पदार्थज्ञानं नास्ति तथा ऽस्यापि पदार्थज्ञानाभावेन वाक्यार्थज्ञानाभावाज्जन्मभोक्तृत्वोपपत्तेरेत आह । कार्याकार्यकयोज्झिताः वेदविहितकर्तव्यविचाररहिताः प्रमादिनः श्रुत्वाऽपि तदुक्तमाचारं नानुतिष्ठंति अतएवोन्मत्ताः चित्तशुद्ध्यभावेन संसारभुजो भवंति 'आचारहीनं न पुनंति वेदाः' इति वचनात् । ननु द्विजत्वमेव कार्यं साधयिष्यति इति चेन्न, तेषां द्विजत्वफलधर्मानुष्ठानाभावात् द्विजत्वं नास्तीत्याह । मद्येति । यथा मद्यसंपर्केण द्विजत्वं नास्ति तथा ईश्वरानुग्रहादेव पुंसामद्वैतवासना इति वचनाद्धर्मानुष्ठानाभावे तदनुग्रहाभावः, तदभावे भेदवादिनां तत्सत्त्वे जन्मपरंपरा भवतीति भावः ॥ ३४ ॥

ऐकात्म्यदूषणोद्युक्ता द्विजा नैते ऽपितु त्रिजाः ॥
यदि नैवं कथं कुर्युर्वेदांतार्थविपर्ययम् ॥ ३५ ॥

गायत्रीग्रहणजन्यधर्मानुष्ठानफलद्विजत्वाभावेपि पितृजन्यत्वेऽनैव द्विजत्वमस्तित्वत्याशंक्य भेदवादित्वहेतोरेवानुमीयते तज्जन्यत्वमयुक्तमपि तत्त्वं तेषां नेत्याह । ऐकात्म्येति । ब्रह्मात्मैक्येत्यर्थः । द्विजा नैतेऽपितु त्रिजाः मेववादिनस्त्रिजाः ऐकात्म्यदूषकत्वात् । यत्रैवं तत्रैवं यथैकात्मवादी न चेदमप्रयोजकमित्याह । यदीति । यदि नैवं त्रिजत्वं न स्यात् वेदांतार्थः विपर्ययं कथं कुर्युः कथमपि न कुर्युरिति वेदांतार्थः विपर्ययकर्तृत्वानुपपत्तिरेव विपक्षे बाधकेत्यर्थः ॥ ३५ ॥

तस्मादनुभवभूतत्वात् ह्यप्रामाण्यत्रयोज्झिता ॥
मानमानंदभावे स्यादात्मनोऽस्य त्रयीशिखा ॥ ३६ ॥

चित्सदानंदाद्वितीयात्मनि श्रुतिप्रामाण्यमुपसंहरति । तस्मादिति । अस्यात्मन आनंदभावे आनंदत्वे त्रयीशिखा वेदांतश्रुतिः । कथंभूता श्वासवदाविर्भूतत्वात् "निःश्वसितमेतदृग्वेदः" इतिश्रुतेरज्ञाताबाधितार्थबोधकत्वात् । अप्रामाण्यत्रयोज्झिता प्रमा यथार्थानुभवः तस्याः करणं प्रमाणं तस्य भावः प्रामाण्यं न प्रामाण्यमप्रमाण्यं अप्रामाण्यस्य त्रयम-

प्रामाण्यत्रयं भ्रमः प्रमादः, विप्रलिप्सा च तत्र अतस्मतद्बुद्धिः देहादावात्मबुद्धिसर्वस्यापि, प्रपंचस्य सत्यमेव ज्ञानं पद्धाद्यानां स भ्रमं इत्यर्थः। प्रमादः प्रकृतार्थाननुसंधानं, साऽप्रमेवेति, विप्रलंभकवाक्यजन्यज्ञानं विप्रलिप्सा अन्यस्य वस्तुनोऽन्यथाबोधनरूपमप्रमैव, तेनोज्झिता रहिता आनंदप्रमाणंस्यादिति ॥ ३६ ॥

एवं सत्यपि युक्त्युक्तौ यद्युत्कंठाऽस्ति सुभ्रु ते ।
ततस्तां व्याहरिष्यामि हरिष्यामि तमस्तव ॥ ३७ ॥

एवमात्मन आनंदरूपत्वे श्रुतिप्रामाण्यं दर्शितमधुना ऽत्र युक्तिं दर्शयितुं प्रतिजानीते । एवमिति । हे सुभ्रु एवं सत्यपि स्वात्मन आनंदत्वे श्रुतिप्रामाण्ये दर्शितेऽपि यदि युक्त्युक्तौ युक्तीनां श्रुत्यनुकूलानामुक्तिः यत्कर्तृकयुक्तिप्रतिपादनवाक्यं तत्र ते उत्कंठा प्रेम्णा श्रोतुमिच्छा वर्तते तत तां युक्तिं युक्तिप्रतिपादकानि वाक्यानि व्याहरिष्यामि कथयिष्यामि । ताभिर्युक्तिभिः किं करिष्यसि । तव तमोऽज्ञानं हरिष्यामि स्वात्मानंदविषयकावरण तज्जन्यज्ञानदीपेन दूरीकरिष्यामि॥३७॥

सर्वस्य जंतोरात्मैव प्रियो नास्त्यत्र संशयः ॥
प्रियता तस्य कायेष्टा किं सुखोत्पत्तिहेतुता ॥ ३८ ॥
विषयेंद्रियवर्त्किचा सुखस्याश्रयता मता ॥
सुखप्रकाशो हेतुत्वमन्यथा किंचिदीप्सितम् ॥ ३९ ॥

तां युक्तिमेव कवलमप्राप्तिपर्यंतमाह । सर्वस्येति । सर्वस्य जंतोः प्राणिमात्रस्यात्मैव प्रियः " आत्मनस्तु कामाय सर्वं प्रियं भवति " इत्यादिश्रुत्याऽऽत्मप्रियत्वेन सर्वेषां प्रियत्वाभिधानात् । आत्मनो मुख्यत्वेन सर्वशेषित्वमन्येषां तदुपसर्जनत्वेनानंदत्वं न स्वतः । तथाच श्रुतिः " एतस्यैवानंदस्यान्यानि भूतानि मात्रामुपजीवंति " इति । एवंचान्यत्र प्रियत्वनिषेध । अत्रात्मनः प्रियत्वे संशयो नास्तीत्यर्थः । इद्वचनमपि मानभूतं हि भूयासमिति प्रेमात्मनीक्ष्यते इति । अधुनाऽऽत्मनः सुखरूपत्व प्रतिपादयितुं चतुर्थो विकल्पप्रतिसंधेन प्रियतेति

पसर्जनत्वघटितप्रियलक्षणेन लक्षितं भवति । सुखसाधनत्वेन संमतस्य विषयादेरात्मशेषत्वादिति भावः ॥ ४२ ॥

ममास्त्वित्यनुकूलत्ववेद्यं यद्यपि यत्सुखम् ॥
न तथाऽप्यात्मशेषत्वादनन्यार्थतया मतम् ॥ ४३ ॥

तृतीयमनूद्यापनुदति । ममास्त्विति । "ममास्तु इदमित्यनुकूलत्ववेद्यं यद्यपि सुखं भ्रांतिसिद्धं तथाऽप्यनन्यार्थतया न मतम् । मुख्यं सुखमनन्यार्थमेव नान्यशेषभूतमीदृशं त्वात्मसुखमेव । विषयसुखस्य त्वात्मार्थत्वमेवेत्याह । आत्मशेषत्वादात्मोपसर्जनत्वादित्यर्थः ॥ ४३ ॥

अनुपाध्यनुकूलत्ववेद्यं यत्तत्सुखं मतम् ॥
इति यत्तार्किकैः प्रोक्तं तदात्मन्येव युज्यते ॥ ४४ ॥

प्रथममुक्तं तमेव चतुर्थपक्षं स्वीकुर्वन्नाह । अनुपाधीति । अनुपाधि अन्योपाधिकं न अन्योपसर्जनीभूतं न, अनुकूलत्ववेद्यं सर्वेषामनुकूलवेदनीयं तार्किकैर्नैयायिकैर्यत्प्रोक्तं "तत्सुखमात्मन्येव, न तु ब्रह्मादिलोकांत्रेषु विषयेषु युज्यते । सर्वेषां विषयेंद्रियजन्यसुखानामात्मशेषत्वात्तदुपाधिक आत्मानंद एवेत्यर्थः ॥ ४४ ॥

न द्वितीयः किमत्रेष्टमाश्रयत्वमितीर्यताम् ॥
यदुपादानता तस्यादात्मनः परिणामिता ॥ ४५ ॥

प्रथमविकल्पचतुष्टयमध्ये द्वितीयं द्विधा विकल्प्य खंडयति सार्धद्वयेन । न द्वितीय इति । किमत्र प्रियत्वविचारे आश्रयत्वं सुखाश्रयत्वंकिमिष्टं संमतमिति त्वया ईर्यतां कथ्यताम् । सुखाश्रयत्वं किं सुखोपादानत्वं किंवा सुखाधारत्वमात्रं न तावदाद्य इत्याह । यदुपादानता तत्सुखाश्रयत्वं स्यात् तदाऽऽत्मनः परिणामिता स्याद् विकारिता भवेद् । 'उपयन्नपयन् धर्मो विकरोति हि धर्मिणम्' इति न्यायादित्यर्थः ॥ ४५ ॥

तथाचानित्यताऽपि स्यात्तथा स्वर्गादिसुख तु कः ॥
बदरस्य यथा कुंडं तथात्मा चेत्सुखाश्रयः ॥ ४६ ॥

एवं सति किं स्यादनित्यत्वं विना न किमपीत्याह । तथाचेति । तथाच परिणामित्वे च अनित्यताऽपि स्यात् । अपि अनिर्मोक्षादिदोषसमुच्चायकः । तथाऽऽत्मनो नित्यत्वे स्वर्गादिभुक् कः, स्वर्गमोक्षौ कस्य स्यातामित्यर्थः । द्वितीये त्वाह । बदरस्य यथा कुंडं बदरीफलस्य यथा कुंडं कुंडिका आश्रयः तथात्मा चेत्सुखाश्रयः सुखाधारः ॥ ४६ ॥

**तदुपादानमन्यत्र त्वत्सिद्धांते निरीक्ष्यते ॥**
**अनेनैव तृतीयोऽपि पक्षो ऽपास्त इतीष्यताम् ॥ ४७ ॥**

तर्हि सुखोपादानं किं आत्मा तु नेत्युक्तं तदतिरिक्तं तु निरीक्षणीयमेव न त्वस्तीत्याह । तदुपादानमिति । त्वत्सिद्धांते नैयायिकराद्धांते अन्यत्र आत्मनो भिन्नस्थले निरीक्ष्यते एव । नत्वधुनाऽपि लब्ध इत्यर्थः । अहं सुखीत्यादिप्रतीतिस्तु भ्रांत्यैव नैयायिकमते देहादाविवेति । ननु तृतीयस्य का गतिरत आह । अनेनैवेति । पूर्वोक्तेनाश्रयत्वविचारेण सुखस्योपादानमाश्रयो वा इत्यादिना तृतीयोऽपि सुखप्रकाशहेतुत्वमिति पक्षोऽपि परास्त इत्यर्थः ॥ ४७ ॥

**चतुर्थे तु सुखात्मत्वं प्रियत्वं प्रत्यगात्मनः ॥**
**तथासति न काचित्स्यात्क्षतिः कस्यापि वादिनः ॥ ४८ ॥**

ननु ज्ञातस्यैव सुखस्य पुमर्थत्वात्सुखज्ञानहेतुत्वमास्तामिति चेन्न ज्ञानस्य कार्यत्वेऽनवस्थापत्तेः, तथाहि यत्कार्यं तन्मते उपादानापरोक्षज्ञानजन्यं येनेदं जन्यते तदपि कार्यं तस्यापि तथैव जन्यत्वे तस्या अनिवार्यत्वापत्तेरतो ज्ञानसुखरूप एवात्मा इति चतुर्थपक्ष एवावशिष्यत इत्याह । चतुर्थे इति । चतुर्थे पक्षे प्रत्यगात्मनः देहेंद्रियादिसर्वाभ्यंतरस्य साक्षिणः प्रियत्वमनन्यशेषत्वं तदेव सुखात्मत्वं सुखचिद्रूपत्वम् । तथा सति आत्मनः सदानंदचिद्रूपत्वे कस्यापि वादिनः क्षतिर्नास्ति ॥ ४८ ॥

**इत्यात्मानंदरूपत्वे संक्षेपाद्युक्तिरीरिता ॥**
**अत आत्मसुखप्रीता सुखं विषयजं त्यज ॥ ४९ ॥**

आत्मन आनंदत्वमतिपादनमुपसंहरति । इत्यात्मानंदेति । आत्मानंद-

रूपत्वे युक्तिः आत्मानंदरूपः सर्वशेषित्वात् । यन्नैव तन्नैवं यथा धनादि न चेदमप्रयोजकमानंदभिन्नत्वे तु खित्वापत्तेर्नहि तु स्वकालेऽपि कश्चिदात्मवियोगमिच्छति, देहद्वयस्य तु स्वरूपत्वेन तद्वियोगं त्विच्छति, देहद्वयवियोगे सुखमहमस्वाप्समित्युत्थितस्य सुखपरामर्शादित्याह । सक्षेपादीरिता कथिता ।, अत परिशेषादात्मभिन्नस्यात्मभिन्नत्वेन सुखवत्त्वाभावादात्मरूपत्वेनैव सुखत्वम् । सुख विषयज ब्रह्मलोकपर्यंत विषयेंद्रियसंयोगजमात्माध्यस्त त्यज । अहं किमालवे त्वमात्मानंदपरायणा आत्मानंदेधिष्ठानभूते प्रेमवती भवेत्याह । आत्मसुखमीता निरतिशयपूर्णानंदनिमग्ना भवेत्यर्थ ॥ ४९ ॥

यदानदेन जीवंति प्राणिन सर्व एव हि ॥ मनस्त्वं परमानदे निमग्नं भव सर्वदा ॥ १ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यहरिहरसरस्वतीप्रियशिष्यपरमहंसपरिव्राजकाचार्यजगन्नाथसरस्वतीविरचिते अद्वैतामृते

तृतीयः कवलः ॥ ३ ॥

इत्यद्वैतामृततरंगिण्यां टीकायां तृतीयः कवल ॥ ३ ॥

# अद्वैतामृतग्रंथे

## चतुर्थः कवलः

ॐ नमः शिवाय ।

इत्थं विवेकाश्रमशीतरश्मि-
वाक्चंद्रिकाचर्चिततुष्टचित्ता ॥
निजानुजं सा किल चित्तवृत्तिः
पुनर्बभाषे परपुष्टभाषा ॥ १ ॥

॥ श्रीपरमात्मने नमः ॥ ॥ एवं तृतीयकवलेन श्रुतियुक्तिभ्यामात्मन आनंदरूपत्वं प्रतिपाद्य प्रपंचमिथ्यात्वं विना ऽत्रेच्छानुदयादतस्तन्मिथ्यात्वप्रतिपादनपरं चतुर्थकवलमारभमाणा चित्तवृत्तिः षड्भिः स्वाशयमाविर्भावयांचकारेत्याह । इत्थमिति । सा चित्तवृत्तिः निजानुजं निजस्य स्वस्यानुजः कनिष्ठः भ्राता तं किलेति पूर्ववत् पुनर्बभाषे । कथं भूता । परपुष्टभाषाकोकिलवचना । पुनः कथंभूता । विवेकाश्रमशीतरश्मिवाक्चंद्रिकाचर्चिततुष्टचित्ता विवेकाश्रमः शीतरश्मिरिव चंद्र इव तस्य वाक्चंद्रिका इवाह्लादकत्वात्तमोनिवर्तकत्वाच्च तया चर्चितं पूजितमतएव तुष्टं चित्तं यस्याः सा ॥ १ ॥

भ्रातर्विवेकाश्रम सम्यगुक्तं
प्रतीच आनंदमहोमयत्वम् ॥
प्रष्टुं यदिच्छाम्यधुनाऽपि
किंचित्तदुत्तरं प्रीतमना विधेहि ॥ २ ॥

किं जगादेत आह । भ्रातरिति । हे भ्रातर्विवेकाश्रम प्रतीचः प्रत्यगात्मनः आनंदमहोमयत्वं आनंदस्य महांसि तेजांसि स एव वा पूर्णप्रकाशः तन्मयत्वं तद्रूपत्वं त्वया सम्यक् उक्तं शोभनतया कथितम् । अ-

धुना सांप्रतं किंचिद्वक्ष्यमाणं प्रष्टुमिच्छामि । विषयेंद्रियग्रंथे दृढतरत्वात्तच्छैथिल्यमृते उपदेशो हृदि न लगति, अनादिकालमारभ्य विषयाशा मनसि प्रविष्टा सा सुगमापायेन बहिर्निष्कासयितुं न शक्यते तत्त्यागे किंचित्कारणं वक्तव्यमित्यादि किंचिच्छब्दार्थः । भो स्वामिन् यत्प्रष्टव्यं तदुत्तरं तस्य प्रश्नस्य प्रतिवाक्यं प्रीतमनाः प्रसन्नमना देहीत्यर्थः ॥ २ ॥

त्वया यदुक्तं विषयप्रसूतं
सुखं त्यजेत्यत्र न हेतुरस्ति ॥
किं सार्वभौमोऽपि महाविभूति-
स्त्यजत्यलं खेटकलोमकादि ॥ ३ ॥

तमेवेच्छाविषयभूतं प्रश्नं विदधाति । त्वयेति । हे भगवन् विषयप्रसूतं विषयेंद्रियसंप्रयोगेण प्रादुर्भूतं सुखं त्वं त्यजेति त्वया भवता उक्तम् । कनिष्ठत्वेन युष्मन्निर्देशः । अत्र विषयसुखत्यागे हेतुर्नास्ति कथं नास्त्यत आह । किं सार्वभौमोऽपि सर्वासु भूमिषु भवोऽधिष्ठाता भवति स तथा चक्रवर्ती, महाविभूतिः महती सप्तद्वीपाधिपत्यरूपा विभूतिरैश्वर्यं यस्य स तथा, अलमतिशयेन, खेटकलोमकादि खेटके मृगयायां यथेच्छं वनविहारादिरूपायां शशादिकं त्यजति किम् । अपि तु न त्यजतीत्यर्थः ॥ ३ ॥

ततश्चिदानंदपरिप्लुताऽपि
त्यक्ष्यामि तोपान् विषयोद्भवान्न ॥
कः पंडितोऽप्यंग विवर्धमाने
निजास्पदे श्रेयसि तृप्तिमेति ॥ ४ ॥

साक्षीरूप आनंदस्तु ते ऽतिसंनिहितस्तं नित्यं विहाय किमयं विषयानंदे निमज्जसीत्याशंक्य 'अधिकस्याधिकं फलम्' इति न्यायेन तस्मिन्सत्यपि तान्न त्यक्ष्यामीत्याह । तत इति । हे मुने ऽहं चिदानंदपरिप्लुता चिदानंदेन परिप्लुता परितो व्याप्ताऽपि विषयोद्भवान्विषये-

भ्यः प्रादुर्भूतान् तोषान् तृप्तिविशेषान् भोगेषु प्रसिद्धान् ततः सार्वभौम-दृष्टांतान् न त्यक्ष्यामि । ननु पंडितास्तु त्यजंत्येवात आह । कः पंडि-तोऽप्यंग विवर्धमाने, अंग हे स्वामिन् निजास्पदे निजस्य स्वस्यास्पदे स्थाने श्रेयसि सुखविशेषे विवर्धमाने विशेषेणैधमाने कः पंडितोऽपि शास्त्रज्ञोऽपि तृप्तिमेति । न तृप्तिं प्राप्नोतीत्यर्थः ॥ ४ ॥

संवर्धिताऽहं विषयोत्थतोषैः
प्राप्ता चिदानंदकथामिदानीम् ॥
त्यक्ष्यामि चेत्तान्महताऽऽगसा त-
द्भस्मीभविष्यामि निमेषमात्रात् ॥ ५ ॥

यैस्तोषैरिह पुष्टिं प्रापिता तांश्चेत्त्यक्ष्यामि तदा कृतघ्नताऽपि मे स्यात्त-तो नाश एव भवेदित्याह । संवर्धितेति । हे भ्रातः अहं विषयोत्थतोषैः विषयजन्यतृप्तिभिः संवर्धिता वृद्धिं प्रापिता अनादिकालमारभ्य तर्पिता पोषिता चिदानंदकथां चिदानंदस्य कथा कथनमात्रं इदानीं प्राप्ता । नहि भोज्यकथनमात्रेण कस्यचित्तृप्तिर्भवति, विषयोत्थतोषा अल्पक-व्या वृद्धिकारणत्वात्, यत्नैवं तत्नैवं यथाऽऽत्मानंदः हेतुरस्तु साध्यं माभूदिति चेत्तत्राह । त्यक्ष्यामि चेत्तान् भोगान् यदि त्यक्ष्यामि महता-गसा अल्पपराधेन कृतघ्नतापापेन वा तत्तदा निमेषमात्रात् तत्क्षणमेव भस्मीभविष्यामि ।वस्तुतस्तु स्वरूपानंदप्राप्तौ वृत्तिनाश एव भवतीति भावः ॥ ५ ॥

यः पालितो येन सता ऽसता वा
स तं परित्यज्य विनाऽपराधम् ॥
श्रयेत्समृद्धं स्वयेद्विरुद्धं
गच्छेत्स विध्वंसमसाहसेन ॥ ६ ॥

पुनरपि 'योऽयमाश्रित्य तिष्ठति स तद्विघातको न भवति' इति न्यायमाश्रित्याह । य इति । यः पुरुषः येन सता सन्मार्गानुसारिणा असता असन्मार्गानुसारिणा पालितो रक्षितः स तं सोपकारिणमपराधं

विना परित्यज्य समृद्धं समाश्रयेत्-आश्रयेत्-। विरुद्धं-रचयेत् तेन विरोधं कुर्यात्। असाहसेन-निश्चयेन विध्वंसं गच्छेत्-॥ ६ ॥

शब्दादिजन्येषु सुखेषु तस्मा-
द्धेयत्वहेतुं वद कोविदोऽसि ॥
विना न हेतुं विषयोत्थतोष-
त्यागं करिष्यामि भवद्वचोभिः ॥ ७ ॥

किंच त्यागे हेतुं विना कथं विषयान् त्यक्ष्यामीत्याह। शब्दादीति। हे भ्रातः शब्दादिजन्येषु सुखेषु हेयत्वे हेतुं त्याज्यत्वे हेतुं वद, कोविदः तत्र हेतुवदने पंडितोऽसि। भवद्वचोभिः हेतुं विना भवद्वचनप्रतिपादितहेतुमंतरा विषयोत्पन्नतोपत्यागं न करिष्यामि ॥ ७ ॥

इति चित्तवृत्तिमविनीतवचो
विषयवल्लरीं विषयसंगवतीम् ॥
स निरीक्ष्य भिक्षुरथ मंजु जगौ
जगदांध्यनाशजनकं वचनम् ॥ ८ ॥

तस्या वचो निशम्य भिक्षुः किं चकारात आह। इतीति। अथानंतरं स भिक्षुः मंजु कोमलं वचनं जगाद। कथं भूतं जगाद। आंध्यनाशजनकं मूढजनाज्ञाननाशकम्। किं कृत्वा। इति पूर्वोक्तप्रकारेणोक्तवतीं चित्तवृत्तिं निरीक्ष्य दृष्ट्वा। कथंभूतां चित्तवृत्तिम्। विषयसंगदूषितां विषयसंगेन भग्निताम्। पुनः कथंभूताम्। अविनीतवचोविषयवल्लरीं अविनीतानि अशिक्षितानि वचांसि विषया इव बंधकानि तेषां वल्लरीं लताम् ॥ ८ ॥

विषयाणां तन्वि तत्त्वं पूर्वमेव निरूपितम् ॥
तेषां पुनः पक्षपाताद्विस्मृत्याथ विपृच्छसि ॥ ९ ॥

किं वचनं जगादात आह। विषयाणामिति। हे तन्वि विषयाणां तत्त्वं स्वरूपं भ्रांतिविषयत्वमशुभजनकत्वमित्यादिपूर्वमेव प्रथमवक्तव्ये एव निरूपितं युक्तिपूर्वं कथितम्। तेषां विषयाणां तत्पूर्वोक्तं स्वरूपं

विस्मृत्याथ संप्रति पक्षपातात्पक्षपतनभयात् पक्षस्य विषयसत्यत्वस्य पातोऽनालोचनम्, मया विषयस्य सत्यत्वप्रतिज्ञा कृता प्रतिज्ञा संन्यासनिग्रहस्थानभयात्। पुनः पृच्छसि ॥ ९ ॥

स्वप्नोपलब्धराज्येन रंको ऽपि नहि तुष्यति ॥
किं पुनः प्राप्तसाम्राज्यः परमार्थत एव यः ॥ १० ॥

ननु प्रत्यक्षप्रमाणसिद्धे विषये कथं जिहासा इत्याशंकां स्वप्नदृष्टांतेन परिहरति। स्वप्नेति। रंकोऽपि दरिद्रोऽपि स्वप्नोपलब्धराज्येन स्वप्नदृष्ट-राज्येन हि यस्मान्न तुष्यति। यः परमार्थत एव साम्राज्यः किं पुनः तुष्यति ॥ १० ॥

सम्राट् श्रेयोऽन्यदन्विच्छेद्यदि तत्पारमार्थिकम् ॥
स्वल्पं वा बहु वा स्वाप्नश्रेयसे तु न सज्जते ॥ ११ ॥

ननु स्वप्नसुखमपि सुखत्वाविशेषादेष्टव्यमेवेत्यत आह। सम्राडिति। सम्राट् चक्रवर्ती ऐहिकसर्वसुखसंपन्नः स्वल्प वा बहु वाऽधिकं वाऽन्वि-च्छेत्तत्पारमार्थिकं व्यावहारिकसत्यमेवेच्छेत्। तु पुनः स्वाप्नश्रेयसे स्वप्नसुखार्थं न सज्जते तत्र प्रीतिं न करोति। अथवा, सम्यक् राजते सम्राट् मुमुक्षुः स्वल्पं वा बहु वा अन्विच्छेत् विषयसुखेभ्यो ऽन्यत् भिन्नं पारमार्थिकं त्रिकालाबाध्यं सत्यानंदरूपमेवेच्छेत्। स्वाप्न-श्रयसे क्षणिकसुखं भोक्तुं न सज्जते। तत्र प्रीतियुक्तो न भवतीत्यर्थः ॥ ११ ॥

संवर्धितो राजपुत्रो वने भिल्लेन केनचित् ॥
न त्वं भिल्लो राजपुत्र इत्याप्तेन प्रबोधित• ॥ १२ ॥

दुःखदे विषयजन्ये सुखे त्वं निमग्नाऽसि सांप्रतं यदा पूर्णानंदे निर्मंक्ष्यसि तदा दुःखदं सर्वं विनंक्ष्यति, कथं भस्मीभविष्यतीति संदृष्टां-तमाह द्वाभ्याम्। संवर्धित इति। कश्चन राजपुत्रः वने भिल्लेन केनचित्संवर्धित। आप्तेन यथाभूतार्थवादितार्थोपदेष्ट्रा केनचित्प्रबोधित-स्त्वं भिल्लो न किंतु राजपुत्र इति ॥ १२ ॥

सद्यस्त्यक्त्वा भिल्लधर्मं राजधर्मान्समाचरन् ॥
केनागसा चित्तवृत्ते भण भस्मीभविष्यसि ॥ १३ ॥

सद्यः तत्कालमेव भिल्लधर्मं भिल्लत्वजातिप्रयुक्तं धर्मजातं त्यक्त्वा राजधर्मान् शास्त्रत्वादीन् धर्मान्समाचरन्नालंबीभवति यथा तथा त्वमपि विषयाभिलाषान् क्षुद्रान् त्यक्त्वा पूर्णानंदे निमग्ना सती हे चित्तवृत्ते केनागसा अपराधेन भस्मीभविष्यसि, त्वं भण वद ॥ १३ ॥

विमूढो राज्यमुत्सृज्य स्वाप्नराज्योपलब्धये ॥
निद्रां कर्तुं यथा याति वनं वर्जितसज्जनम् ॥ १४ ॥

हे चित्तवृत्ते ऽधुना बुद्धिहीनसेवितकरलेढिन्यायविषयतां प्राप्ताऽसीत्याह द्वाभ्याम् । विमूढ इति । यथा विमूढः विशेषेण मूढः मोहं प्राप्तः वनं याति । लोकैः पृष्टः किं कर्तुं यासि स्वप्नसुखोपलब्धये निद्रां कर्तुं यामीत्याह । निद्रामिति । कस्यै सिद्धये यासीत्याह । स्वाप्नेति । कथं भूतं वनम् । वर्जितसज्जनं वर्जिताः सज्जनाः यथार्थज्ञानवंतः यस्मात्तद्भ्रांतिमात्रसिद्धम् ॥ १४ ॥

स्वकरस्थितमप्यात्मानंदमुत्सृज्य भामिनि ॥
प्रवृत्ताऽसि भ्रमात्सिद्धं भोक्तुं विषयजं सुखम् ॥१५॥

हे भामिनि भ्रमात्सिद्धं प्रतीतं विषयजं सुखं भोक्तुमनुभवितुं प्रवृत्ताऽसि । किं कृत्वा । स्वकरस्थितं स्वहस्तस्थितमिवातिसन्निहितमप्यात्मानंदमुत्सृज्य नित्यानंदं त्यक्त्वा । मिथ्याभूते विषयसुखे अतृप्तिजनके प्रत्युत तृष्णासाधने प्रवृत्ता अतो भ्रांताऽसीत्यर्थः ॥ १५ ॥

विषयास्तावदत्र स्युर्यद्यमी पारमार्थिकाः ॥
तत्तज्जन्यसुखप्राप्तिलंपटं को निवारयेत् ॥ १६ ॥

विषया मिथ्या भ्रांतिसिद्धत्वात् रज्जुसर्पादिवदिति यदि सत्याः स्युस्तदा श्रुत्यादिभिर्निषिद्धा न स्युरित्याह । विषया इति । यदि चेत् अमी विषयास्तावदादौ अत्र विचारकाले पारमार्थिकाः सत्याः स्युर्भवेयुः तत्तज्जन्यसुखप्राप्तिलंपटं स्रक्चंदनादिजन्यैहिकामुष्मिकसुखप्राप्तिकं को निवा-

रयेत् को निषिध्येत्, अपितु न कोऽपि निषिध्येदित्यर्थः । निषेधश्च श्रूयते–उत्तिष्ठत जाग्रत । अस्यार्थः–हे जीवाः अनाद्यविद्याप्रसुप्ता उत्तिष्ठत भ्रांतिकल्पितं विषयभोगं त्यजत, जाग्रत अज्ञाननिद्रायाः क्षयं कुरुतेति । तथाचात्रैव भाष्यम्– एवं पुरुषे आत्मनि सर्वं प्रविलाप्य नामरूपकर्मत्रयं यत् मिथ्याज्ञानविजृंभितक्रियाकारकफललक्षणं स्वात्मयाथात्म्यज्ञानेन मरीच्युदकरज्जुसर्पगगनमलानीव मरीचिरज्जुगगनस्वरूपदर्शनेनैव स्वस्थः प्रशांतः कृतकृत्यो भवति यतोऽतस्तद्दर्शनार्थमनाद्यविद्याप्रसुप्ता उत्तिष्ठत । हे जंतवः आत्मनोऽभिमुखीभवत जाग्रत अज्ञाननिद्राया घोररूपायाः सर्वानर्थबीजभूतायाः क्षयं कुरुतेति विषयाभिलाषिणां निंदापूर्वकमनिष्टफलं दर्शयति । श्रुत्यंतरम्– "पराचः कामाननुयंति बालाश्च ते मृत्योर्यंति विततस्य पाशम्" इति । अस्यार्थः–ते मूढाः अतएव बालाः अत्यल्पबुद्धयः पराचः बहिर्गतान् कामान् काम्यंते भोगासक्तैर्कामाः विषयास्तान् अनुयंति अनुगच्छंति चिदात्मभिन्नविषयतृष्णाप्रेरिताः अनुगच्छंतः मृगतृष्णाजलेनेव तृप्तिं न गच्छंति, तर्हि क्व गच्छंति, मृत्योरविद्याकामकर्मसमुदायस्य विततस्यातिविस्तीर्णस्य पाशं सततजन्ममरणजरारोगाद्यनर्थजातं प्राप्नुवंतीति॥१६

यः सर्पं स्रग्भ्रमोपेतस्तद्गंधायाभिधावति ॥
हस्ते सत्यस्रजं हित्वास किं सुखमवाप्स्यसि ॥१७॥

भ्रमसिद्धस्यापि कथं न सुखहेतुत्वमत आह । य इति । यः सर्पे स्रग्भ्रमोपेतः सर्पे माल्याज्ञानवान् तद्गंधाय स्रजो गंधाय गंधं घ्रातुमभिधावति शीघ्रं गच्छति । स हस्ते विद्यमानं सत्यस्रजं हित्वा त्यक्त्वा किं सुखमवाप्स्यति, अपितु न प्राप्स्यति। तथा हे चित्तवृत्ते विषयेषु मिथ्याभूतेषु पूर्णानंदं नित्यं सदाप्राप्तं त्यक्त्वा धावंत्यास्तव सुखलेशोऽपि तृप्तिसाधनभूतो न प्राप्स्यतीत्यर्थः ॥ १७ ॥

विषयाणां भ्रमोत्थत्वं श्रुतिरेवाह शोभने ॥
काशयंती ममैवार्थं वक्ष्यमाणं मया ऽधुना ॥ १८ ॥

अनुमाने स्वरूपासिद्धिं वारयति । विषयाणामिति । हे शोभने । परमेश्वरसंमुखत्वमेव वृत्तेः शोभनत्वमित्याशयः संबुद्धेः । अधुना मया वक्ष्यमाणमिममर्थं प्रकाशयंती बोधयंती श्रुतिरेव विषयाणां भ्रमोत्थत्वं भ्रांतिसिद्धत्वमाह वदति ॥ १८ ॥

यत्र द्वैतमिवाभाति तत्रान्योऽन्यद्विजिघ्रति ॥
अन्योन्यं पश्यति तथा शृणोत्यन्योन्यदंतिके॥ १९॥

का सा श्रुतिरतो बृहदारण्यकपंचमब्राह्मणोक्तश्रुतिमुदाहरति, यत्र द्वैतमिवेति द्वाभ्याम् । तत्रैव पूर्वं स यथा सैंधवघनो, नेतरो बाह्यः कृत्स्नः इत्युक्तम् । पूर्णे चिद्घने प्रपंचः कथमित्याक्षेपे भ्रांतिसिद्धमेव द्वैतमिवशब्देन सूचयति । यत्राज्ञानकाले द्वैतमिव द्वैतसदृशं भाति मूढानां तत्र तस्मिन्काले अन्यः पुरुषः अन्यद्गंधादिकं उपादत्ते सुखसाधनत्वेन गृह्णातीत्यादि । एवं दर्शनादिकं बोध्यम् ॥ १९ ॥

अन्योन्यचाभिवदति मनुते ऽन्योन्यदीप्सितम् ॥
विजानाति तथा ऽन्योन्यदिति व्यवहृतिः किल ॥२०॥

ननु द्वैतमस्ति न वा नाद्यः तदस्तित्वे निषाधानुपपत्तेः, न द्वितीयः प्रतियोगिज्ञानं विनाऽपि तदनुपपत्तेरित्यत आह । व्यवहृतिरिति । वाचा वदनमात्रमेव । तथाच श्रुतिः– "वाचा रंभणं विकारो नामधेयम्" इति । अन्यथाऽप्युक्तं "शाब्दस्य हि ब्रैह्मण एष पंथा यन्नाम भिर्ध्यायति धीरपार्थैः" इति तु व्यवहारिक एवास्त्वत आह । किलेति । कविरुद्रिनद्वासिष्ठोक्तधातृकथायाच विकल्पमात्रमित्यर्थः ॥ २० ॥

यदात्मैवाभवत्सर्वमुदिते ज्ञानभास्करे ॥
तदा तु केन कं जिघ्रेत् पश्येत्तद्वच केन कम् ॥ २१ ॥
शृणुयात्केन कं तत्राभिवदेदपि केन कम् ॥
मन्वीत केन कं तद्वद्विजानीयाच केन कम् ॥ २२ ॥

सर्वकारकव्यवहारमाक्षिप्य प्रदर्शयितुम् "यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्" इति सर्वकारकव्यावृत्तिनिषेधं कुर्वती श्रुति तत्र च

स्थितामर्थतः पठति । यदात्मैवेति । यदा ज्ञानभास्करे उदिते सति सर्वं मायातत्कार्यमात्मैव ब्रह्मात्मैव संपन्नं ब्रह्मणि कल्पितत्वात् । तद्व्यतिरिक्तसत्ताभावात्तदा तज्ज्ञानकाले तु केन करणेन कं कर्मभूतं जिघ्रेद्दृश्लीयात्सर्वस्यात्ममात्रत्वात्; एवमग्रेऽपि बोध्यमिति ॥२१॥२२॥

**सर्वं येन विजानाति विजानीयात्तु केन तम् ॥**
**विज्ञातारमिमं केन विजानीयान्मनागिति ॥ २३ ॥**

परप्रकाशं प्राप्य बाह्यमंतःकरणं चात्मा प्रकाशयति तं प्रकाशं सर्वसत्ताप्रकाशादमन्यः कः प्रकाशयेदित्याह । सर्वमिति । येनात्मना प्रकाशरूपेण पुरुषः सर्वं विजानाति तं विदात्मानं केन चैतन्यभिन्नेन विजानीयात् । तुशब्दः चैतन्यभासकमात्रनिषेधकः । विज्ञातारं बुद्धेः साक्षिणं इमं सदाऽपरोक्षं केन स्वभास्येन मनाक् इयदपि विजानीयात् । सूर्यादेरपि यदि स्वभास्यघटादिभास्यत्वं नास्ति तदा तत्प्रकाशस्यान्यभास्यत्वं सुतरां दुर्घटमिति भावः ॥ २३ ॥

**स एव नेतिनेत्यात्मा यो ग्राह्यो नहि गृह्यते ॥**
**अशीर्यः शीर्यते नायमसंगो नहि सज्जते ॥ २४ ॥**

**सितो न व्यथते नैव रिष्यते प्रबलैरपि ॥**
**परादाद्ब्रह्म तं योऽन्यत्रात्मनो ब्रह्म वेद तु ॥ २५ ॥**

सर्वनिषेधे कृते आत्मैव शिष्यते इति निषेधमुखेनात्मानं बोधयति, स एवेतिसार्धेन । नेतिनेत्यात्मा सर्वकारणनिषेधावधिभूतः यो ग्राह्यो नहि गृह्यते ग्रहणविषयो नाग्राह्यत्वात् । करणागोचरत्वात् शब्दप्रत्ययप्रवृत्तिनिमित्तसकलकार्यधर्मातीतत्वादित्यर्थः । अशीर्यः शीर्यते नायं अपक्षयधर्मरहितत्वात् । कुतो ऽत आह । असंगो नहि सज्जते । असंगत्वात् न संबध्यते इत्यमूर्तत्वात् । सितः बद्धो बाह्याभ्यंतरशून्यः अतो न व्यथते न पीड्यते न रिष्यति प्रबलैरपि सर्वनाशकत्वेन प्रसिद्धैः प्रबलवातादिभिर्नश्यतीत्यर्थः । याज्ञवल्क्य इति मैत्रेयीमिति स सन्न्यासं ज्ञानमभिधाय संन्यस्तवानित्यर्थः । संमत्यात्मभिन्नजगतोऽपि मि-

ण्यात्वप्रतिपादिकाः श्रुतीरुदाहरति सार्धपद्भिः । परादादिति । यः पुरुषो लोकेऽपि ब्रह्म ब्राह्मणजातिमात्मनोऽन्यत्रान्येषु वेद जानाति तमेव वादिनं ब्राह्म ब्राह्मणजातिः परादात् पृथक् कुर्यात् । तुशब्दो व्यतिरेकार्थः । आत्मभिन्नस्यात्मसत्तया सतस्तद्भिन्नत्वेनात्यंतामावादित्यर्थः ॥ २४ ॥ २५ ॥

क्षत्रं परादात्तं वेद योऽन्यत्र क्षत्रमात्मनः ॥
लोकाः परादुस्तं लोकान् यो वेदान्यत्र चात्मनः २६

एवमन्यत्रापि बोध्यमित्याह । क्षत्रमित्यादिचतुर्भिः । यः आत्मनोऽन्यत्र क्षत्रं क्षत्रियजातिं वेद । क्षत्रं क्षत्रियजातिः । तं भेदवादिनं परादात् पृथक्कुर्यात् । यो लोकान् चतुर्दशभुवनानि ॥ २६ ॥

देवा वेदाश्च भूतानि तं परादुरसंशयम् ॥
आत्मनोऽन्यत्र यो देवान्वेदान् भूतानि वेद वा ॥२७॥

देवा ब्रह्मादयः वेदा ऋगादयः भूतानि स्थावरजंगमानि वेद यथार्थज्ञानवेद्यत्वेन ॥ २७ ॥

सर्वं परादाद्योऽन्यत्रात्मनो वेदाखिलं पुमान् ॥
इदं ब्रह्मक्षत्रमिदमिमे लोका इमे सुराः ॥ २८ ॥

संकोचे मानाभावः इतिन्यायेनाह । सर्वमिति । आत्मनोऽन्यत्र आत्मनो भिन्नमधिष्ठानं जगतो वेद ॥ २८ ॥

इमे वेदास्तथेमानि भूतानीदं तथाऽखिलम् ॥
यत्किंचित्तद्विजानीयादयमात्मेतिकोविदः ॥ २९ ॥

तर्हि कीदृशं वेदनं, श्रुतिविवक्षितमत आह । इमे वेदा इति । यत्किंची सत्मर्वप्रपंचः " अयं सदापरोक्षः आत्मा । सर्वं खल्विदं ब्रह्म आत्मैवेदं सर्वम् " मय्येव सकलं जातं मयि सर्वं प्रतिष्ठितम् ॥ यदि सर्वं लयं याति तद्ब्रह्माद्वयमस्म्यहम् इत्यादिश्रुत्यंतराच्चेति ॥ २९ ॥

सदेव सौम्येदमग्र आसीदेकमेवाद्वयम् ॥
इति च श्रुतिरप्याह नेह नानास्ति किंचन ॥ ३० ॥

सर्वं खल्विदं ब्रह्मेति छांदोग्ये पूर्वमुक्तं तज्जत्वात्तल्लत्वात्तदनत्वाद्ब्रह्मात्मैवेदं सर्वमिति तस्यैव दार्ढ्यार्थं श्वेतकेतुं प्रति तत्ज्ञानोपदेशः । तथाहि श्वेतकेतुं प्रति तत्ज्ञानोपदेशः । तथाहि श्वेतकेतुः पित्राज्ञया चतुरो वेदान्पठित्वा उच्चासने उपविष्टः "उततमादेशमप्राक्षो येनाश्रुतं श्रुतं भवत्यमतं मतं भवत्यविज्ञातं विज्ञातम्" इति स आदेशो न जात इत्युवाच पुत्रः । पिता पुनरुवाच । चतुरो वेदानधीत्य सांगानष्टादश पुराणानि च यावदात्मतत्त्वं न जानाति तावदकृतार्थ एव । श्रुत्यान्यविज्ञानेनान्यविज्ञानं श्रुत्वाऽऽश्चर्यतां प्राप्तः पुनः पप्रच्छ । कथं नु भगवन्स उपदेशः । पिता उवाच । यथा सौम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्यात् इति कारणज्ञानेन कार्यज्ञानदृष्टांतमुक्त्वा उवाच सदेव सौम्येदमग्र आसीत्"इत्याह । सदेवेति । हे सौम्य प्रियदर्शन जगत उत्पत्तेः प्राक् सदेवेति । अस्तितामात्रं वस्तु सूक्ष्मं निर्विशेषं सर्वगतमेकं निरजनं निरवयवं विज्ञान यदवगम्यते सर्ववेदांतेभ्यः । एव शब्दोऽवधारणार्थः । इदमत्र भाष्यं तद्व्याख्यानमुच्यते— यद्विज्ञानेन सर्वविज्ञानेन सर्वविज्ञानं लभ्यते तद्विज्ञानं प्रतिज्ञातं प्रकटीकर्तुं सर्वसन्मात्रत्वं प्रतिजानीते । सदेवेति । सच्छब्दस्य सामान्यविशेषविषयत्वं व्युदस्यति । सदितीति । पृथिव्यादिभ्यो विशेषमाह । सूक्ष्ममिति । नभ आदिभ्योऽप्याह । निर्विशेषमिति । अंत्यविशेषेभ्योऽप्याह । सर्वगतमिति । ताटस्थ्यं व्यावर्तयति । एकमिति । प्रत्यगभिन्नस्य संसारित्वं निषेधति । निरंजनमिति । निष्क्रियत्वेन तत्कूटस्थमाह । निरवयवमिति । यथोक्ते वस्तुनि प्रमाणमाह । यदवगम्यत इति । ननु पूर्वमीदृशमिदानीं न किमिति चेन्नेदानीं नामरूपविशेषणवद्भाति तदानीं केवलमेवेति तात्पर्यात् । यथा सुप्ते किंचिन्नास्ति उत्थितः सर्वं पश्यति यथा पूर्वाह्णे घटादिसिसृक्षुणा कुम्भकेन प्रसारितं मृत्पिंडं दृष्ट्वा ग्रामांतरं गत्वा प्रत्यागतोऽपराह्णे घटशरावादिकमुपलभ्य वदति 'मृदेव पूर्वाह्णे आसीत्' इति यथा कार्यकारणभावनिषेधपूर्वकं सजातीयं निषेधयति । एकमेवेति । एकमेव एवशब्देन स्वगतभेदोऽपि परास्तः । ननु घटा-

देर्मृद्व्यतिरेकेण परिणामपिता कुलालादिर्निमित्तभूतस्तथा ऽत्रापीत्यत आह । अद्वयमिति । अद्वितीयं सद्व्यतिरेकेण सतः सहकारिकारणं द्वितीयं वस्त्वंतरं निषिध्यते । विजातीयं द्वितीयमस्य न विद्यते इत्यद्वितीयं सदेवेदमित्युक्तं तद्विपरीतग्रहणनिवृत्त्यर्थमिति । ननु सद्वादिनोऽपि सतः सदुत्पद्यत इति चेन्न घटात् घटांतरोत्पत्त्यदर्शनात् । सतः सदंतरोत्पत्त्यभावेऽपि यथा मृद्घटादिरूपेणावतिष्ठते । कथंप्रागुत्पत्तेरिदमासीदित्युच्यते, सदेवेत्यवधारणार्थत्वात् । अतएवेदं शब्दवाच्यस्यासदेवेदमिति साक्षाच्छ्रुत्यैव निषेधादेवं सतः संस्थानमात्रमिदं "वाचारंभणमात्रत्वाद्विकारस्येति । ननु" निष्कलं निश्रेयम्" इत्यादिश्रुतेर्निरवयवे विकारसंस्थानं कथमिति चेद्ब्रह्मविवर्तत्वात्प्रपंचस्य रज्जुसर्पादिवत् मिथ्यात्वात् । अन्यामपि प्रपंचमिथ्यात्वबोधिकां श्रुतिमाह । अन्याश्रुतिराह वदति । किमाहात आह । नेहेति । इह मायाशबले ब्रह्मणि नानाभिन्नत्वं किंचन नास्ति न विद्यते । ननु ब्रह्मभिन्नस्य सत्यसत्यपि निषेधानुपपत्तेरिति चेन्न, अनिर्वचनीयख्यातेरुपपादितत्वात् । नन्वेवमपि निर्गुणे निषेधो मायाशबले वा नाद्यः अप्रसक्तनिषेधापत्तेःन द्वितीयस्तत्रैव वेदांततात्पर्यविषयत्वापत्तेरिति चेन्न कल्पितमायां स्वीकृत्यैव शास्त्रविचारप्रवृत्तेः । प्रथमपक्षे तु कथाया अप्यप्रवृत्तेः । अतएवोक्तं वृद्धैः– 'चोद्यं वा परिहारो वा क्रियतां द्वैतभाषया । अद्वैतभाषया चोद्यं नास्ति नापि तदुत्तरम्' इति । मूकीभाव एव स्यादाद्यपक्षेऽतो द्वितीयस्यैव योग्यत्वात् । अनया श्रुत्या स्वसंसृज्यमानाधिकरणनिष्ठाऽत्यंताभावप्रतियोगित्वरूपमिथ्यात्वलक्षणस्य मुखत एवाभिहितत्वात् । प्रपंचस्तु वर्तते सद्रूपो नास्तीति प्रतीते । सत्वाविच्छिन्नत्वेनैव प्रपंचस्य निषेधात् न च प्रतियोगिता व्यधिकरणधर्मस्य कथमवच्छेदकत्वमस्मिन्पक्षे व्यधिकरणधर्मावच्छिन्नाभावस्य स्वीकृतत्वादित्यलं बहुना ॥ २० ॥

मृत्योः स मृत्युमाप्नोति यो नानेवेह पश्यति ॥
एतदात्म्यमिदं सर्वं सत्यमात्मैव केवलम् ॥ २१ ॥

ननु नानादर्शने किं दूषणमित्याशंक्य गर्भवासपरंपरा एवेत्याह। मृत्योरिति। यः पुरुषः इह आत्मनि नानेव प्रपंचं आत्मभिन्नं पश्यति स मृत्यो-मरणं प्राप्य पुनर्मृत्युं मरणं प्राप्नोति। पुनःपुनर्जन्ममरणपरंपरामनुभवतीत्यर्थः। तर्हि किं दर्शनमिष्टमत आह। ऐतदात्म्यमिति। इदं सर्वं जगत् एतदात्म्यं एतदात्मसत्तातिरिक्तसत्ताशून्यमित्यर्थः। तर्हि आत्मा किंरूपोऽत आह। सत्यं त्रिकालाबाध्यम्, एतेन मायातत्कार्यनिषेधः। तन्निषेधान्वेषणे तु अधिष्ठानावशेषो हि नाशः कल्पितवस्तुन इत्येवोत्तरमिति संतोष्टव्यम्॥ ३१॥

इत्याद्यभिवदंत्यो हि शतशोऽथ सहस्रशः॥
श्रुतयः संति वामोरु जगन्मिथ्यात्वबोधने॥ ३२॥

अन्यापि श्रुतयः संति किं जगतो मिथ्यात्वबोधने तावत्य एतदर्थाः श्रुतयः संतीत्याह। इत्यादीति। हे वामोरु जगन्मिथ्यात्वबोधने शतशः सहस्रशः श्रुतयः श्रुतिवाक्यानि विद्यंते। आदिना शिवमद्वैतचतुर्थंमन्यंते इत्यादयो गृह्यंते॥ ३२॥

तस्माज्ज्ञात्वा जगत्सर्वं मृगतृष्णाजलोपमम्॥
सच्चिदानंदमात्मानं श्रयांतरायवर्जितम्॥ ३३॥

अहं सर्वविघ्नैरनभिभूतं किं वस्तु श्रयेत आह। तस्मादिति। हे शोभने तस्मात् श्रुत्युक्तजगन्मिथ्यात्वहेतोः। सर्वं जगन्मृगतृष्णाजलं यथा न तृप्तिजनकं तथा ब्रह्मादिस्थावरांतविषयजातं न तृष्णाशामकं प्रत्युत तृष्णाजनकमेव इति ज्ञात्वा ततः परावृत्य प्रत्यगात्मानं त्वंपदलक्ष्यं तत्पदलक्ष्यसच्चिदानंदाभिन्नं श्रय तदेवाहमस्मीति निश्चिनु। तत्रापि ब्रह्मलोकादिवत्कश्चिद्विघ्नो भविष्यतीत्यत आह। अंतरायवर्जितमिति। विघ्नरहितमित्यर्थः॥ ३३॥

सर्वं जगदिदं भाति गंधर्वनगरोपमं॥
आत्मसौधं परित्यज्य तत्सौधानि किमिच्छसि॥ ३४॥

हे चित्तवृत्ते मृगतृष्णानदीजलपानजन्यतृप्ती यथा ऽनादरस्तथा संसार-

देर्मृद्व्यतिरेकेण परिणाममपिता कुलालादिर्निमित्तभूतस्तथा। ऽत्रापीत्यत आह । अद्वयमिति । अद्वितीयं सद्व्यतिरेकेण सतः सहकारिकारणं द्वितीयं वस्त्वंतरं निषिध्यते । विजातीयं द्वितीयमस्य न विद्यते इत्यद्वितीयं सदेवेदमित्युक्तं तद्विपरीतग्रहणनिवृत्त्यर्थमिति । ननु सद्वादिनोऽपि सतः सदुत्पद्यत इति चेन्न घटात् घटांतरोत्पत्त्यदर्शनात् । सतः सदंतरोत्पत्त्यभावेऽपि यथा मृद्घटादिरूपेणावतिष्ठते । कथंप्रागुत्पत्तेरिदमासीदित्युच्यते, सदेवेत्यवधारणार्थत्वात् । अतएवेदं शब्दवाच्यस्यासदेवेदमिति साक्षाच्छ्रुत्यैव निषेधादेवं सत. संस्थानमात्रमिदं "वाचारंभणमात्रत्वाद्विकारस्येति । ननु" निष्कलं निश्रेयम्" इत्यादिश्रुतेर्निरवयवे विकारसंस्थानं कथमिति चेद्ब्रह्मविवर्तत्वात्प्रपंचस्य रज्जुसर्पादिवत् मिथ्यात्वात् । अन्यामपि प्रपंचमिथ्यात्वबोधिका श्रुतिमाह । अन्याश्रुतिराह वदति । किमाहात आह । नेहेति । इह मायाशबले ब्रह्मणि नानाभिन्नत्वं किंचन नास्ति न विद्यते । ननु ब्रह्मभिन्नस्य सत्यसत्यपि निषेधानुपपत्तेरिति चेन्न, अनिर्वचनीयख्यातेरुपपादितत्वात् । नन्वेवमपि निर्गुणे निषेधो मायाशबले वा नाद्यः अप्रसक्तिनिषेधापत्तेर्न द्वितीयस्तत्रैव वेदांततात्पर्यविषयत्वापत्तेरिति चेन्न कल्पितमाया स्वीकृत्यैव शास्त्रविचारप्रवृत्तेः । प्रथमपक्षे तु कथाया अप्यप्रवृत्तेः । अतएवोक्तं वृद्धैः – 'चोद्यं वा परिहारो वा क्रियतां द्वैतभाषया। अद्वैतभाषया चोद्य नास्ति नापि तदुत्तरम्' इति । मूकीभाव एव स्यादाद्यपक्षेऽन्तो द्वितीयस्यैव योग्यत्वात् । अनया श्रुत्या स्वसंसृज्यमानाधिकरणनिष्ठाऽत्यंताभावप्रतियोगित्वरूपमिथ्यात्वलक्षणस्य मुख्यत एवाभिहितत्वात् । प्रपंचस्तु वर्तते सद्रूपो नास्तीति प्रतीते । सत्वावच्छिन्नत्वेनैव प्रपंचस्य निषेधात् न च प्रतियोगिता व्यधिकरणधर्मस्य धर्मावच्छेदकत्वमस्मिन्पक्षे व्यधिकरणधर्मावच्छिन्नाभावस्य स्वीकृतत्वादित्यलं बहुना ॥ ३० ॥

मृत्योः स मृत्युमाप्नोति यो नानेव पश्यति ॥
एतदात्म्यमिदं सर्वं सत्यमात्मैव केवलम् ॥ ३१ ॥

ननु नानादर्शने किं दूषणमित्याशंक्य गर्भवासपरंपरा एवेत्याह । मृत्योरिति । यः पुरुषः इह आत्मनि नानेव प्रपंचं आत्मभिन्नं पश्यति स मृत्योः मरणं प्राप्य पुनर्मृत्युं मरणं प्राप्नोति । पुनःपुनर्जन्ममरणपरंपरामनुभवतीत्यर्थः । तर्हि किं दर्शनमिष्टमत आह । ऐतदात्म्यमिति । इदं सर्वं जगत् एतदात्म्यं एतदात्मसत्तातिरिक्तसत्ताशून्यमित्यर्थः । तर्हि आत्मा किंरूपोऽत आह । सत्यं त्रिकालाबाध्यम्, एतेन मायातत्कार्यनिषेधः। तन्निषेधान्वेषणे तु अधिष्ठानावशेषो हि नाशः कल्पितवस्तुन इत्येवोत्तरमिति संतोष्टव्यम् ॥ ३१ ॥

**इत्याद्यभिवदंत्यो हि शतशोऽथ सहस्रशः ॥**
**श्रुतयः संति वामोरु जगन्मिथ्यात्वबोधने ॥ ३२ ॥**

अन्यापि श्रुतयः संति किं जगतो मिथ्यात्वबोधने तावत्य एतदर्थाः श्रुतयः संतीत्याह । इत्यादीति । हे वामोरु जगन्मिथ्यात्वबोधने शतशः सहस्रशः श्रुतयः श्रुतिवाक्यानि विद्यंते । आदिना शिवमद्वैतचतुर्थंमन्यंते इत्यादयो गृह्यंते ॥ ३२ ॥

**तस्माज्ज्ञात्वा जगत्सर्वं मृगतृष्णाजलोपमम् ॥**
**सच्चिदानंदमात्मानं अयांतरायवर्जितम् ॥ ३३ ॥**

अहं सर्वविघ्नैरनभिभूतं किं वस्तु श्रयेत आह । तस्मादिति । हे शोभने तस्मात् श्रुत्युक्तजगन्मिथ्यात्वहेतोः । सर्वं जगन्मृगतृष्णाजलं यथा न तृप्तिजनकं तथा ब्रह्मादिस्थावरांतविषयजातं न तृष्णाशामकं प्रत्युत तृष्णाजनकमेव इति ज्ञात्वा ततः परावृत्य प्रत्यगात्मानं त्वंपदलक्ष्यं तत्पदलक्ष्यसच्चिदानंदाभिन्नं श्रय तदेवाहमस्मीति निश्चिनु । तत्रापि ब्रह्मलोकादिवत्कश्चिद्विघ्नो भविष्यतीत्यत आह । अंतरायवर्जितमिति । विघ्नरहितमित्यर्थः ॥ ३३ ॥

**सर्वं जगदिदं भाति गंधर्वनगरोपमं ॥**
**आत्मसौधं परित्यज्य तत्सौधानि किमिच्छसि ॥३४॥**

हे चित्तवृत्ते मृगतृष्णानदीजलपानजन्यतृप्ती यथा ऽनादरणतया संसार-

सुखेऽनादरः कर्तव्यस्त्वया इत्याह । सर्वमिति । हे शोभने इदं सर्वं जगत् गंधर्वनगरोपमं यथा कार्तिकादिमासे प्रातःकाले वनेंवप्रपरिखाप्र-णादिभिरलंकृतं धवलनगरं दृश्यते तत्तुल्यं जगदिदम् । यथा कश्चिद्वदे-त-मया तत्र नगरे नद्यां स्नात्वा तत्रापणे ऽन्नादिकं क्रीत्वा पक्त्वा भु क्त्वा शयित्वाऽविसुखंलब्धम् । ब्रह्मलोकादिजगत्सुखं विविक्तानां हास्यास्पदमेवात आत्मसौधं यथा सुधया श्वेतवर्णेन पाषाणस्य भस्मना निर्मितं मंदिरं संसारिणा तथात्मसौधं नित्यानंदस्वरूपं ब्रह्मलोकादिसौ-धेभ्योऽप्युत्तुचं निर्मलं परित्यज्य विहाय तत्सौधानि तस्य गंधर्वनगर-स्य सौधानि किमिच्छसि । तत्रेच्छा न कर्तव्येति भावः ॥ ३४ ॥

ताडिता पुच्छविकला कृंतकर्णास्खलद्गतिः ॥
सरमा चरमावस्थां प्राप्ताऽप्युज्झति न भ्रमम् ॥ ३५॥

यदि तदिच्छां न त्यक्ष्यसि तदा शुन्या उपमेयतां गमिष्यसीत्याह त्रि-भिः । ताडितेति । यथा सरमा शुनी लगुडादिभिराघातिता पुच्छविक-ला पुच्छरहिता कृंतकर्णा कृंतौ छिन्नौ कर्णौ यस्याः सा चरमावस्था-मंत्यावस्थां प्राप्ताऽपि भ्रमं भ्रांतिज्ञानं तद्विषयं वा न त्यजति ॥ ३५ ॥

यथा तथा कचिच्छिन्ना कचिद्भिन्ना कचिद्धता ॥
चित्तवृत्ते त्यजस्येनं विषयेषु भ्रमं नहि ॥ ३६ ॥

हे चित्तवृत्ते तथैनं विषयेषु भ्रमं हि यस्मान्न त्यजसि । कथंभूता त्वम् । कचिद्विषये छिन्ना द्वैधीभावं काष्ठवत् द्वैधीभावं गमिता । कचिद्भिन्ना मध्ये पटवद्विदारिता । कचिद्विषये हता लोष्ठवद्धष्टा ॥ ३६ ॥

वारिताऽपि मुहुर्भ्रांत्वा भक्षते मक्षिकाक्षतम् ॥
चित्तवृत्ते त्यजस्येनं विषयेषु भ्रमं नहि ॥ ३७ ॥

वारिताऽपि निषिद्धाऽपि मुहुर्वारंवारं भ्रांत्वा मक्षिकाक्षतं मक्षिकाभिः व्रणीकृतं न त्यजति सरमा तथा त्वं मृतिहताऽपि अनेकेषु विषयेष्व-पमानिताऽपि विषयोत्थं विषयेष्वाधिक्यं भजसे । अतएवोक्तम् रागिणो विरमा ननुविषयेंते क्षीणेषु क्षीणाभवंति' इति ॥ ३७ ॥

अज्ञानमात्रपरिकल्पितमाकलय्य
विश्वं चिदात्मनि भुजंगमिव स्रजीदम् ॥
भीतां जवेन भ्रमतीमिह चित्तवृत्ते
तस्यागतोऽप्युपहसिष्यति नैव लोकः ॥ ३८ ॥

भ्रांत्यात्मानमनिष्टं ज्ञात्वा त्यक्ष्यसि चेद्धास्यास्पदं न यास्यसि किमि-त्याह । अज्ञानेति । हे चित्तवृत्ते अज्ञानमात्रपरिकल्पितं चिदात्मनि विश्वमाकलय्य अनिष्टं ज्ञात्वा जवेन वेगेन भ्रमाधिष्ठानभूतसत्यात्मत्या-गतो लोकः किं नैव हसिष्यति । अपितूपहसिष्यत्येवार्थः । इहलोके यथा काचिद्भ्रांता स्त्री स्रजं स्वकंठस्थां सर्पं मत्वा भीता सती वेगेन-धावती त्यक्त्वोपहस्यते तथा त्वमपीति भावः ॥ ३८ ॥

अज्ञानसंभवमिदं जगदित्यवेहि ।
नास्यापरं किमपि कारणमस्ति सत्यम् ॥
सत्ये हि शुक्तिशकले स्फुरतोऽपरोक्षं ।
रूप्यस्य कोन्वनवबोधमपास्य हेतुः ॥ ३९ ॥

ननु यथात्मनः सत्यत्वं जगतो मिथ्यात्वं स्यात्तदेत्थं स्याज्जगत्तु स-त्यं ब्रह्मकारणकत्वान्मृत्कारणकघटवत् नच स्वरूपासिद्धिरिति वाच्यम् "आत्मन आकाशः संभूतः" इत्यादिश्रुतेरित्यत आह । अज्ञानेति । हे चित्तवृत्ते इदं जगदज्ञानसंभवमित्यवेहि जानीहि । अस्य जगतोऽपरं किमपि सत्यं कारणं नास्ति । हि यस्मात्सत्ये शुक्तिखंडेऽपरोक्षे स्फु-रतः प्रत्यक्षं प्रतीतस्य रूप्यस्य रजतस्यानवबोधमज्ञानमपास्य हित्वा को हेतुः, अपितु न कोपीत्यर्थः । अनुमानं त्वसिद्धयाग्रस्तत्वादुपेक्ष-णीयम् । ननु ब्रह्मकारणकत्वप्रवादस्य का गतिरिति चेदेकविज्ञानेन सर्वविज्ञानप्रतिज्ञासिद्ध्यर्थं प्रधानकारणवादखंडने तात्पर्यात् उत्प-त्तिश्रुतेश्चाद्वैते तात्पर्यात् न तु ब्रह्मकारणत्वे अधिष्ठानत्वे मात्रेण कारणं ब्रह्म गीयते इत्यादिवचनैर्वार्तिककारेण ब्रह्मकारणकत्वस्य खंडितत्वाच्च अप्रयोजकत्वाच्चानुमानं नोत्तिष्ठति अबाध्यत्वस्योपाधित्वाच्च । नचोपाधेः

किं फलमिति वाच्यम् साध्याभावसाधनमेव फलं तथाहि जगत् मिथ्या-बाध्यत्वात् यन्नैवं तन्नैवं यथाशुक्तिशकलमिति उपाध्यभावेनसाध्याभा-वसाधनादिष्टसिद्धिरिति अन्वयिदृष्टांतस्तु रजतमे यदि जगत्सत्वेनासत्वेन वा निरूप्येत तदाऽस्य कारणं पर्यालोच्येतापि अनेनाधिष्ठानेऽस्य प्रतीत-स्याज्ञानातिरिक्तं कारणं नास्तीत्यर्थः ॥ ३९ ॥

सत्यादिदं यदि भवेन्न भवेन्मृषा त-
न्मिथ्यात्वमस्य सुभगेऽनुभवानुसारि ॥
नह्यद्ययद्भवति तच्छ्व इति प्रसिद्धमास्थां
ततः परिहरात्र विनाशशीले ॥ ४० ॥

स्वरूपासिद्धिं दृढयति । सत्यादिति । सत्याद्ब्रह्मणः इदं भवेत् ब्रह्मो-पादकं जगद्यदि भवेत्तत्तदा न मृषा भवेत् । तत्र किं प्रमाणमत आह । हे सुभगेऽस्य जगतोऽनुभावानुसारि प्रत्यक्षसिद्धं देहादेर्मिथ्यात्वम् । कथं प्रत्यक्षं देहादेर्मिथ्यात्वमत आह । नहीति । हि यस्मादद्य दिने यद्भवति तत् श्वः आगामिदिने न भवति इति लोके प्रसिद्धम् । ततः किं करणीयं मया क्षणविध्वंसिनि जगति आस्थां न कर्तव्येत्याह । आस्थां इदमनुकूलं जातमिदमपरं भविष्यतीत्याकारिकां दृढवासनां विनाशशीले ऽवश्यं नाशशीले जगति परिहर दूरीकुरु । भूतस्य भाविनश्च चितां त्यक्त्वा । वर्तमाने काले वर्तस्व समाहिता भवेति यावत् । उक्तंच वशिष्ठे ' यत्रेंद्रजालमखिलं मायामयमवस्तुकम् ॥ तत्र कास्था कथं नाम हेयोपादेयदृष्टय इति ॥ ४० ॥

नोत्पद्यते न लयमेति विवर्द्धते च
न क्षीयते न चलति क्वचिदेव आत्मा ॥
पूर्वो न नोपरतया प्रथितो न बाह्यो-
नैवांतरः सकलदृक् श्रुतिशेषसिद्धः ॥ ४१ ॥

नन्वात्माप्युत्पद्यतां दृश्यत्वाद्देहादिवत् " नच दृश्यत्वासिद्धिर्दृश्यते त्वग्र्यया बुद्ध्या " इतिश्रुतेरित्याशंक्य यास्कपठितषड्भावविकारनिषेधपू-

वैकमात्मनः पूर्णत्वबोधनार्थं पूर्वापरादिदिग्परिच्छेदं निषेधयन्नात्मानं निरूपयति । नोत्पद्यत इति । कचित्कदाचिदपि एष आत्मा नोत्पद्यते न जायते, नास्ति, न लयमेति न म्रियते, न विवर्धते, न क्षीयते, न चलति न परिणमति इतिदेहादिनिष्ठषड्भावविकारप्रतिषेधः । अनेन वर्णाश्रमाद्यभिमानं त्याज्यमिति सूचितम् । अन्यथा 'त्वंपदार्थविवेकाय संन्यासः सर्वकर्मणाम्' इति निषेधलंघनापत्तेरिति । तथाच स्मृतिः— 'न जायते म्रियते वा कदाचिन्नायं भूत्वा भविता वा न भूयः ॥ अजो नित्यः शाश्वतो ऽयं पुराणो न हन्यते हन्यमाने शरीरे' इति । न पूर्वः पूर्वदिगवच्छिन्नो न, पूर्वकालावच्छिन्नोऽपि न । नोपरतया पूर्ववत् । न बाह्यो नांतरः किंतु पूर्णः । किं प्रमाणमीदृशेऽत आह । सकलदृक् स्वकल्पितसर्वप्रकाशः स एव दृक् वा । सर्वप्रमाणसाक्षिणि स्वप्रकाशे प्रमाणापेक्षा नास्तीत्यर्थः । तर्हि तदभावे नास्ति किमत आह । श्रुतीति । 'अनाशिनोऽप्रमेयस्य' इति स्मृतेर्नेतिनेत्यादिवाक्यैः सर्वनिषेधशेषत्वेन प्रतिपादितो विद्वदनुभवसिद्धश्चेति । अनेनानुमानं बाधितमिति बोध्यम् ॥ ४१ ॥

उच्चावचान्यनुभवन्प्रतिबिंबभूता-
न्यालक्ष्यते उपचयापचयादिमान्वा ॥
तस्मादिदं सुखचिदेकरसं विबोध-
मासाद्य शोकरहिता भव चित्तवृत्ते ॥ ४२ ॥

नन्वात्मनः पूर्णत्वे देवमनुष्यतिर्यगादिभेदः किंनिबंधन इत्याशंक्य सत्त्वादिगुणनिबंधन इत्याह । उच्चेति । उच्चावचानि प्रतिबिंबभूतानि देवादिशरीराणि अनुभवन्नविद्यया तेष्वध्यासं कुर्वन् उपचयापचयादिमान्वा, वा इवार्थे, सुरनरतिर्यगादिदेहवानिवालक्ष्यते । घटमठादिना ऽऽकाश इव सत्वाधिक्ये देवादिः, रजआधिक्ये मनुष्यादिः, तमआधिक्ये पश्वादिः । यथा शुद्धोऽपि स्फटिकः पीतरक्तनीलाद्युपाधिभेदेन पीतो रक्त इत्यादिव्यवहारमागिव लक्ष्यते तथात्माऽपि । अतो देवादिभेद-

स्यौपाधिकत्वात्परिपूर्णचिदानंदे निमज्य शोकरहिता भवेत्युपदेशमुपसं- हरन्नाह । तस्मादिति ।, हे चित्तवृत्ते इदं सदाऽपरोक्षं विदेकरस चिद्घनानंदं विबोधं मनआदिषु विशेषो बोधो यस्यात्मनस्तमासाद्य तदेवाहमस्मीति साक्षादनुभूय "तरति शोकमात्मवित्" इतिश्रुतेः शोकरहिता भव ॥ ४२ ॥

चित्तवृत्तिरिति भ्रात्रा निजेन प्रतिबोधिता ॥
विषयेभ्यो रतिं सद्यो निश्चकर्षात्मनः किल ॥ ४३ ॥

ईदृशं परमोपदेशं श्रुत्वा चित्तवृत्तिः किं चकारात आह । चित्तवृत्तिरि- ति । चित्तवृत्तिः इति पूर्वोक्तेन प्रकारेण निजेन भ्रात्रा सहोदरेण समानाधिकरणेन प्रतिबोधिता परिपूर्णात्मनो बोधं प्रापिता विषयेभ्य ऐहिकामुष्मिकभोगेभ्यः सद्यः उपदेशवाक्यार्थानुभवकाले आत्मनो रतिं प्रीतिं निश्चकर्ष आकृष्टवतीत्यर्थः ॥ ४३ ॥

नलिनीमिव तोयेभ्य. संमग्नां करिगेहिनी ॥
विषयेभ्यो वहिश्चक्रे चित्तवृत्ति रतिं निजाम् ॥४४॥

चित्तवृत्तिः कथं विषयेभ्यो रतिं निश्चकर्षेत्यत्र दृष्टांतमाह । नलि- नीमिति । करिगेहिनी हस्तिनी तोयेभ्यो जलेभ्य. संमग्नां जलाधोगतां नलिनीं कमलिनीमिव विषयेभ्यो निजां रतिं वहिश्चक्रे विषयत्यागपरा- यणा बभूव ॥ ४४ ॥

सा तदा तत्परं ज्योतिर्दधाना विषयोज्झिता ॥
अंतर्दीपा बभौ काचकूपकेव गतावृतिः ॥ ४५ ॥

कथं विषयत्यागपराऽभूदत्र दृष्टांतमाह । सेति । सा चित्तवृत्तिस्तदा तस्मिन्काले अंतर्दीपा मध्यदीपा काचकूपकेव प्रकाशात्मपवधायककाच- निर्मितपात्रमिव बभौ चकाशे । कीदृशी काचकूपका । गतावृतिः गता आवृतिरावरणं प्रकाशनिरोधक यस्या सा तथा । कथंभूता चित्तवृ- त्ति । विषयोज्झिता विषयैर्विषयैरुज्झिता त्यक्ता । पुनस्तद्वैदांतप्रसिद्धं परं सर्वप्रकाशेभ्य· उत्कृष्टं निरतिशयं ज्योति प्रकाशं दधाना । यथा

कूपका मकाशनिरोधका न भवति तथा वृत्तिरहमाकारतामिदमाकारतां त्यक्त्वा निश्चला बभूवेत्यर्थः ॥ ४५ ॥

**अस्मिन्नवसरे दक्षा मुमुक्षाऽभ्येत्य योगिनम् ॥**
**वैराग्यतीर्थमायांतं नातिदूरे न्यवेदयत् ॥ ४६ ॥**

अधुना विवेकफलं वैराग्यं मुमुक्षामासिरूपं दर्शयति । अस्मिन्निति । अस्मिन्काले विवेकदार्ढ्यसमये दक्षा चतुरा मुमुक्षा योगिनं विवेकाश्रमम-भ्येत्य वैराग्यतीर्थं परमहंसं नातिदूरे निकटे न्यवेदयदकथयत् । विवि वेकादनंतरं वैराग्यं भवतीत्यर्थः ॥ ४६ ॥

**तां विवेकाश्रमः क्षामां मुमुक्षां वीक्ष्य तापसीम् ॥**
**सुमसन्नमनाः प्राह भद्रे ऽत्रोपविशेत्यलम् ॥ ४७ ॥**

विवेकाश्रमो भिक्षुर्मुमुक्षामागतां साधनचतुष्टयचरमावस्थामनेकजन्मसंचितपुण्यफलभूतां विवेकजन्यां दृष्ट्वा किं चकार प्रसन्नचित्तसंपन्न इत्याह । तामिति । विवेकाश्रमो भिक्षुः तां प्रसिद्धप्रभावां क्षामामतिकृशां तापसीं मनइंद्रियनिरोधलक्षणतपःपरायणा मुमुक्षां ब्रह्मलोकादिविषयत्यागपूर्वकमोक्षेच्छां वीक्ष्य सुमसन्नमनाः सुतरां निर्मलचित्तः सन्नाह । हे भद्रे कल्याणरूपे अत्र अस्मिन्मठे अलमुपविश इमं भूषय अस्य वैराग्यादिकमेव भूषणमिति । अन्यथावृथेत्यर्थ ॥ ४७ ॥

**पांचजन्ये मठे ऽस्माकं यतो भीत्याऽनवस्थितिः ॥**
**चित्तवृत्तिरियं सा सुमसन्ना विहिता मया ॥ ४८ ॥**

यथा कथंचित्परमार्थनिष्ठा वैराग्यादिपूर्विका प्राणिना भवेदित्याशयेन मुमुक्षाया. तापस्याः विवेकाश्रमस्य भिक्षोश्च संवादरूपा कथामुपन्यस्यति । पांचेति । हे तापसि पांचजन्यमठेऽस्मिन्मनुष्यदेहे यतोभीत्या रागद्वेषादिसंसारभयात् अस्माकं विवेकाश्रमादिभिक्षूणामनवस्थितिः अवस्थितिर्नास्ति सा इयं चित्तवृत्तिर्मया विवेकाश्रमेण सुमसन्ना रागद्वेषादिमलनिवृत्त्या निर्मलीकृता ॥ ४८ ॥

**मुमुक्षे तापसीदानीं विषयं तव निर्मला ॥**

चित्तवृत्तिरथोत्थाय श्रुतपूर्वां तु तापसीम् ॥
ननाम दंडवद्भूमौ परित्यज्य स्वदुष्टताम् ॥ ४९ ॥

मुमुक्षा उवाच चित्तवृत्तिरियं मे किं साधयिष्यति ते विषयं सुखेन साधयिष्यतीत्याह । मुमुक्षे इति । हे मुमुक्षे तापसि इदानीं निर्मला चित्तवृत्तिस्तव विषयमनायासतः सुखेन करिष्यति संपादयिष्यति अतस्त्वं स्थिरा भव तिष्ठेति । चित्तवृत्तिस्तापसीं दृष्ट्वा किं चकार, नम्रा बभूवेत्याह । चित्तवृत्तिरिति । अथानंतरं चित्तवृत्तिः श्रुतपूर्वां तापसीं दृष्ट्वा उत्थाय भूमौ दंडवन्ननाम । किं कृत्वा । स्वदुष्टतां परित्यज्य । सर्वान्कामादिदोषान् त्यक्त्वा निरहंकारा जाता इत्यर्थः ॥ ४९ ॥

मुमुक्षा लक्ष्य तां स्वच्छां प्रसन्नवदनांबुजाम् ॥
परमात्मप्रसादस्ते भवत्वित्याशिषं जगौ ॥ ५० ॥

मुमुक्षा प्रणामं स्वीकृत्याशीर्वादं ददावित्याह । मुमुक्षेति । मुमुक्षा तापसीत्याशिषं जगौ आशीर्वचनं कृतवती । इतीति किम् । हे चित्तवृत्ते तवात्मप्रसादो भवतु परमेश्वरस्तव हृदि तिष्ठतु । किं कृत्वा । तां चित्तवृत्तिं स्वच्छां निर्मलां प्रसन्नवदनांबुजां प्रसन्नं वदनांबुजं यस्याः सा तथा तां लक्ष्य । अनेन मुमुक्षोः प्रसन्नवदनत्वमपि लक्षणमिति सूचितम् ॥५०॥

वैराग्यतीर्थसंन्यासी विवेकाश्रमतोऽवर ॥
मठं प्राप पांचजन्यं त्यक्तदंडो दिगंबरः ॥ ५१ ॥

इति मुमुक्षागमनमभिधायानेकजन्मानुष्ठितनित्यनैमित्तिकादिकर्मजन्यपुण्यपुंजफलभूतसंन्यासाराधिभूतं परमहंससंन्यासं संवर्तादिभिरनुष्ठितमवधूतैर्नारदनारायणसंवादरूपपरमहंसोपनिषदाभिधातुं तीव्रतरवैराग्यतीर्थागमनं प्रपयति चतुर्भि । वैराग्येति । वैराग्यतीर्थसंन्यासी पांचजन्यं मठं प्राप । कर्थभूतः । विवेकाश्रमतोऽवर. तत्पश्चाद्भावित्वात्निष्ठ । वर इति छेदेऽपि न दोष, परममंगलरूपाश्रमस्य साक्षाद्वेत्वात् । पुनः त्यक्तो दंडो येन स तथा । पुनर्दिगंबरः दिग्वस्त्रः ॥५१॥

बाहूपबर्हणो भूमिमंचकः पाणिपात्रभुक् ॥
अपादुको गुहागेहो जलाशयकमंडलुः ॥ ५२ ॥

पुनर्बाहूपबर्हणः बाहू भुजौ उपबर्हणमुपधानं यस्य स तथा । उक्तं च- ' अनुत्तरीयवसनमनुपस्तीर्णशायिनम् ॥ बाहूपधानं शाम्यंतं तं देवा ब्राह्मणं विदुः ' इति । पुनर्भूमिमंचकः भूमिः मंचः शय्या यस्य सः । पुनः पाणिपात्रभुक् पाणिर्हस्त एव पात्रं तेन भुंक्ते इति तथा । पुनः अपादुकः न विद्यते पादुके यस्य स तथा । पुनः गुहागेहो गुहा पर्वतादिकं दरी गेहो यस्य स तथा । उक्तंच बादरायणेन भागवते-' सत्यां क्षितौ किं कशिपोः प्रयासैर्बाहौ स्वसिद्धे उपबर्हणैः किम् ॥ सत्यंजलौ किं पुरुधान्नपात्र्या दिग्वल्कलादौ सति किं दुकूलैः ॥ चीराणि किं पथि न संति दिशंति भिक्षां नैवांघ्रिपाः परभृतः सरितोऽप्यशुष्यन् ॥ रुद्धा गुहाः किमजितो ऽवति नोपपन्नान्कस्माद्भजंति कवयो धनदुर्मदांधान् ' इति । पुनर्जलाशयो नद्यादिरेव कमंडलुः जलपानपात्रं यस्य स तथा ॥ ५२ ॥

विचरन्पृथिवीमेतां जडोन्मत्तपिशाचवत् ॥
अयाचितयथाप्राप्ताहारः कारकतोज्झितः ॥ ५३ ॥

पुनः एतां पृथ्वीं जडोन्मत्तपिशाचवद्विचरन्, जडोन्मत्तादिर्यथा एषा दिग्गंतव्या एषा नेति न विचारयति, तथा ऽयमपि पूर्वापरचिंतारहितः केवलं वर्तमानकाले स्थितः । नच वर्तमानकाले तु सर्वे तिष्ठंतीति वाच्यम् । अन्ये तु भूतभाविपदार्थानपि चिंतयंति । अयमेव विशेषोऽस्य भूतभावि न चिंतयेत् । न च वर्तमानकालिकवस्तुभानेऽपि चिंतनत्वाविशेषादविशेष इति वाच्यम्, तैस्त्वहंकारपूर्वकं चिंत्यते ऽनेन तु निरहंकारेणैव पदार्था भास्यंते इति विशेषत्वात् । अतएवोक्तम्- ' नास्माकमस्त्यहंकारो व्यवहारेषु यः क्षम. ॥ तुर्य एव हि तिष्ठेयं यत्र दृश्यं न विद्यते ' इति । ननु तुर्ये तिष्ठेयमित्युक्तवतां वेदांतिनां द्वैतखंडने

प्रवृत्तानां त्रित्वापत्तिरेकं तुर्यं स्थितिस्तत्कर्ता चेति मूलहानिर्वृद्धिमिच्छ-त इति न्यायापत्तिरिति वाच्यम् । यथा स-भूमा कुत्र स्थित इति पृष्टे स्वे महिम्नि इत्यत आह । कारकतोज्झितः कारकतया उज्झितः त्यक्तः । " यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत् " इत्यादिश्रुत्या स्वरूपसाक्षात्कारे सर्वस्य कारकमात्रस्यात्ममात्रताभिधानात् । अतएवा-याचित यथा अयाचितमार्गेण यथाप्रारब्धं प्राप्ताहारः । अतएवोक्तम्- 'येन केनचिदाच्छिन्नो येन केनचिदाशितः ॥ यत्रक्वचनशायी स्यात्तं देवा ब्राह्मणं विदुः ' इति ॥ ९३ ॥

दधानोऽतः परं ज्योतिर्बहिर्धूलिविधूसरः ॥
विवेकाश्रममानम्योपविवेश तदाज्ञया ॥ ९४ ॥

एतत्सर्वेनिदानं विशेषणमाह । दधानोऽतः, परं ज्योतिः तत्पदलक्ष्यं सच्चिदानंदमंतः त्वंपदलक्ष्याभिन्नत्वेन दधानः । पुनर्बहिर्धूलिविधूसरः देहाध्यासाभावात् धूलिलिप्तांगः । पुनः किं चकार । विवेकाश्रममानम्य ज्येष्ठत्वात्तस्य तदाज्ञया तस्य विवेकाश्रमस्याज्ञया उपविष्टवा-नित्यर्थः ॥ ९४ ॥

विवेकाश्रम आहैनं भिक्षो दंडकमंडलू ॥
कौपीनाच्छादनं वास. कंथां किं त्यक्तवानसि॥९५॥

वैराग्यतीर्थस्येदृशीं दशां दृष्ट्वा विवेकाश्रमः किमाह परमावधिभूतं परमहंससंन्यासमाक्षिपन्नाह । विवेकाश्रम इति । विवेकाश्रम एवं वैरा-ग्यतीर्थमाह । हे भिक्षो दंडकमंडलू कौपीनाच्छादनंवासः कूपपतनमर्ह-ति कौपीनम् । कूपशब्दात्सजि ह्रस्वो सज ईनादेशे । कौपीनं पापं तत्साधनत्वात्पुरुषमेढ्रोऽपि कौपीनं तस्याच्छादनं वास', अथवा कौपीनं मेढ्रस्तदाच्छादनमपि कौपीनं, आच्छाद्यते जलपात्रमनेनेति आच्छादनं जलशोधनपात्रं पृथगेव कौपीनं चाच्छादनं चानयोः समाहारः कौपी-नाच्छादनम्, वासः कटिवासः । कंथां शीतनिवारणीं किं त्यक्तवा-नसि । शास्त्रविहितत्यागे दोषमाहेति भावः ॥ ९५ ॥

इत्थं पृष्टः स तेनाह विवेकाश्रम शृण्वतः ॥
परहंसोपनिषदस्तात्पर्यं कथयाम्यहम् ॥ ५६ ॥

वैराग्यतीर्थसंन्यासी विवेकाश्रमभिक्षुणाऽऽक्षिप्तः किमाह पंचविंशतिश्लोकैर्नारदनारायणसंवादरूपां परमहंसोपनिषत्कथामाह । इत्थमिति । इत्थं पूर्वोक्तप्रकारेण पृष्टः स वैराग्यतीर्थः तेन विवेकाश्रमभिक्षुणा पृष्ट आह । हे विवेकाश्रम अतः शृणु । अवधूताश्रमे प्रमाणमिति शेषः । अहं परमहंसोपनिषदस्तात्पर्यं कथयामि ॥ ५६ ॥

देवर्षिर्नारदो ऽभ्येत्य देवं नारायणं विभुम् ॥
पप्रच्छोत्कंठया वाचा प्रांजलिः प्रश्रयान्वितः ॥५७॥

तां कथामेवावतारयति । देवर्षिरिति । नारदो देवर्षिर्विभुं व्यापकं देवं प्रकाशरूपं नारायणं सर्वनरांतर्यामिणं परमेश्वरं जगत्कल्याणार्थं लीलाविग्रहरूपेण बदरिकाश्रमनिवासिनं प्रांजलिः बद्धांजलिः प्रश्रयान्वितः प्रश्रयेण श्रुत्युपदिष्टेन शिक्षारूपेण मार्गेण युक्त उत्कंठया श्रद्धाभक्त्युत्साहव्यंजकया वाचा वाण्या पप्रच्छ पृष्टवान् ॥ ५७ ॥

भगवन्परमहंसानां को मार्गः का परा स्थितिः ॥
एतद्विज्ञातुमिच्छामि ततो मे ऽनुग्रहं कुरु ॥ ५८ ॥

किं पृष्टवानत आह । भगवन्निति । प्रवृत्तिं च निवृत्तिं च जनानामगतिं गतिम् ॥ वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति ॥ तत्संबुद्धौ हे भगवन् । अथ योगिनां परमहंसानां कोऽयं मार्गस्तेषां का स्थितिरिति श्रुतिमर्थतः पठति । परमहंसानां जीवन्मुक्तानां संन्यासोपनिषदा परमहंससंन्यास उक्तः, हंसोपनिषदि च उक्तः तत्र प्राप्तयोगस्य ज्ञानिनः कीदृशी लोके स्थितिरिति संदिह्यते । यदुक्तम्–' स्थितप्रज्ञस्य का भाषा समाधिस्थस्य केशव ॥ स्थितधीः किं प्रभाषेत किमासीत व्रजेत किम् ' इति । तथाच पामरत्वशंकयाऽवज्ञा स्यात्ततो महान्प्रत्यवायः स्यादित्येतत्स्वरूपज्ञानाय परमहंसोपनिषदारभ्यते । अथ योगिनां परमहंसानामिति । योगश्चित्तवृत्तिनिरोधस्तद्वंतो योगिनः, परमहं-

साश्चोत्पन्नतत्त्वज्ञानाः । तत्र निरुद्धचित्तोऽप्याणिमादिपूक्तदशायां समासक्तः सन्नात्मनि संशितो विपर्यस्तश्च परमपुरुषार्थाद्भ्रंशयतीति परमहंसपदं परमहंसश्च तत्त्वविवेकेनैश्वर्येष्वसारतां बुध्वा विरज्यति ॥ तदुक्तम्–' चिदात्मन इमा इत्थं प्रस्फुरंतीह शक्तयः इत्यस्याश्चर्यजालेषु नाभ्युदेति कुतूहलम् ' इति । परमहंसो विद्याबलेन विधिनिषेधौ लंघयति ततः शिष्टविगान स्यात् । तदुक्तम्–'सर्वे ब्रह्म वदिष्यंति संप्राप्ते च कलौ युगे ॥ नानुतिष्ठंति मैत्रेय शिश्नोदरपरायणाः' इति । तदर्थं योगिग्रहणम् । नच निष्कामकर्मानुष्ठानमपि योग इति वाच्यम्, विशेषणद्वयेन स्थितप्रज्ञत्वगुणातीतत्वादीनामभेदकत्वात् । तथाचोक्तं वासिष्ठे प्रश्नप्रतिवचनाभ्याम्–'राम उवाच । एवं स्थिते हि भगवन् जीवन्मुक्तस्य संमतः ॥ अपूर्वोतिशयः कोऽसौ भवत्यात्मविदां वर ॥ वसिष्ठ उवाच । नास्य कस्मिंश्चिदेवांशे भवत्यतिशयेन धीः ॥ नित्यतृप्तः प्रशांतात्मा स आत्मन्येव तिष्ठति ॥ मंत्रसिद्धैः तपःसिद्धैस्तंत्रसिद्धैश्च भूरिशः ॥ कृतकामाशयानादि तत्र का स्यादपूर्वता ॥ एक एव विशेषोऽस्य न समो मूढबुद्धिभिः ॥ सर्वत्रास्था परित्यागात्सदा निर्वासनं मनः ॥ एतावदेव खलु लिंगमलिंगमूर्तेः संशांतसंसृतिचिरभ्रमनिर्वृतस्य ॥ तज्ज्ञस्य यन्मदनकोपविषादमोहलोभापदामनुदिनं निपुणं तनुत्वम् ' इति । को मार्गः नारदो ब्रह्मपुत्रो देवर्षिर्मंगवंतं सनत्कुमारं प्रति जगाम । स हि नारदाय शोकतरणाय भूमानमुपदिष्टवान् । यथा " छंदोगानामाम्नातं अधीहि भगवन् इतिहोपससाद सनत्कुमारं नारदः " इत्यारभ्य " तस्मै मृदितकषायाय तमसः पारं दर्शयति भगवान्सनत्कुमारः " इत्यंतेन । स ततो लब्धसाक्षात्कारो मार्गस्थितिं पृच्छति । विज्ञानदार्ढ्याय का परा स्थितिः परा ऽवधिभूता निष्ठा । हे भगवन् एतद्वेदितुं ज्ञातुमिच्छामि ममानुग्रहं कुरु ॥ ९८ ॥

देवर्षिणैवं भगवान्प्रार्थितो भक्तवत्सलः ॥
मार्गं तावद्बभाषेचैर्मेघगंभीरया गिरा ॥ ९९ ॥

नारदेन पृष्टो नारायणो मार्गं परमहंसानामुवाचेत्याह । देवर्षिणैवमिति ।

भगवान्नारायणो देवर्षिणैवं भक्तवत्सलो मार्गं प्रार्थितः । मेघगंभीरया मेघवद्गंभीरया ऽगाधया गिरा वाचा । अहंकाररहित्येन च साहस्यम् ॥ ५९ ॥

**इदं परमहंसानां मार्गं लोके ऽतिदुर्लभम् ॥**
**वक्ष्यमाणं मया तेन यो गच्छेत्सोऽपि दुर्लभः ॥६०॥**
**स एव नित्यमुक्तिस्थः स एव श्रुतिशेषवित् ॥**
**विद्वांस इति मन्यंते स एव पुरुषो महान् ॥ ६१ ॥**
**सर्वदा मयि तच्चित्तं तच्चित्तेऽहं च सर्वदा ॥**
**असौ स्वमित्रपुत्रादिकलत्रभ्रातृबांधवान् ॥ ६२ ॥**

किमुवाचेत्यत आह । इदमिति । इदं ब्रह्मरूपं परमहंसानां संवर्तादीनां मार्गं लोकेऽतिदुर्लभम् । अतिदुर्लभश्चेन्नादर्तव्यः ' अतिक्लेशेन ये ह्यर्था अनर्थास्ते मता मया ' इतिन्यायादिति चेत् । लोक्यते दृश्यते लोको देहः तत्र इष्टाहंतादिमान् लोकः तत्र साधनहीने ऽतिरागिणि दुर्लभमेव । तथापीश्वरानुग्रहे सुलभमेवेत्याह । वक्ष्यमाणमिति । ' आश्चर्यवत्पश्यति कश्चिदेनम् ' इत्याशयेनाह । तेनेति । तेन मार्गेण यः गच्छेत्स दुर्लभः ' यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः ' इति स्मृतेः । नच पूर्वोक्तन्यायान्नादर्तव्य इतिवाच्यम् । 'दैवी ह्येषा गुणमयी मम माया दुरत्यया ॥ मामेव ये प्रपद्यंते मायामेतां तरंति ते ' इति स्मृतेर्भगवत्परायणानां तद्वशवर्तिनां तस्य न्यायस्यानादृतत्वात् । नचेदृशाः परमहंसाः प्रसिद्धाः कुत्रापीति वाच्यम्, जाबालोपनिषदादौ प्रसिद्धत्वात् । तथा हि तत्र परमहंसानां नाम संवर्तकारुणिश्वेतकेतुदुर्वासाऋषभनिदाघजडभरतदत्तात्रेयरैवतकप्रभृतयोऽव्यक्तलिंगाः अव्यक्ताचारा अनुन्मत्ता उन्मत्तवदाचरंत इति । स कीदृशः परमहंसोऽत आह । स एव नित्यमुक्तिस्थ इति । नित्या चासौ मुक्तिः नित्यमुक्तिर्ब्रह्मरूपा तत्रस्थः । पुनः स एव श्रुतिशेषवित् नेतिनेत्यादिवाक्यैर्यः शेषितो ऽवधित्वेन शेषस्तं वेत्तीति तथा " ब्रह्मविद्ब्रह्मैव भवति " इतिश्रुते.

अथवा श्रुतिशेषशब्देन सर्वाः श्रुतयः ता वेत्तीति तथा "वेदैर्विदेव वाहं यस्तं वेद स वेद वित्" इतिस्मृतेश्च । ब्रह्मानुभवचित्तविश्रांतिप्रतिपाद्यकशास्त्रपारंगतार इति मन्यंते । इति किम् । स एव पुरुषो महान् स एव परमहंसः महान्पुरुषो ब्रह्मैव । तथाच स्मृतिः—"दर्शनादर्शनं हित्वा स्वयं केवलरूपतः ॥ यस्तिष्ठति स तु ब्रह्मन् ब्रह्म न ब्रह्मवित्स्वयम्" इति । तथाच श्रुतिः—" महापुरुषो यच्चित्तं तत्सदा मय्येवावतिष्ठते तस्मादहं च तस्मिन्नेवावस्थीयते " इत्याशयेनाह । सर्वेदेति । इदानीं दृष्टं मार्गमुद्दिशति । असाविति । स्वमित्रपुत्रादिकलत्रभ्रातृबांधवान्स्वस्य मित्रं च पुत्रादिश्च कलत्रं च भ्रातरश्च बांधवाश्च तान् परित्यजेदित्यन्वयः । कलत्रं स्त्री । आदिना भृत्यादि ॥ ६० ॥ ६१ ॥ ६२ ॥

**शिखां यज्ञोपवीतं च यागान्स्वाध्यायमेव च ॥**
**ज्योतिष्टोमादिकर्माणि ब्रह्मांडं च परित्यजेत् ॥६३॥**
**कौपीनं वाससी दंडं संन्यसेन्न कमंडलुम् ॥**
**स्वशरीरस्य भोगाय नृलोकानुग्रहाय च ॥ ६४ ॥**

अन्यत्किं परित्यजेदत आह शिखामिति । शिखायज्ञोपवीते प्रसिद्धे । यागान् स्मार्तान् । स्वाध्यायं " स्वाध्यायोऽध्येतव्यः " इति नित्यविधिप्राप्तं वेदाध्ययनम् । ज्योतिष्टोमादीत्यादिना अग्निहोत्रादिपरिग्रहः । स्वाध्यायमेव चेति चकारेण न तदर्थोपयुक्तानि पदवाक्यप्रमाणशास्त्राणि वेदोपबृंहणादीनि च इतिहासपुराणानि च समुच्चीयंते । औत्सुक्यनिवृत्तिमात्रफलानां काव्यादीनां त्यागस्तु कैमुत्यन्यायसिद्धः । कर्माणि लौकिकवैदिकनित्यनैमित्तिकनिषिद्धकाम्यानि संगृह्यंते । पुत्रादित्यागेनैहिकभोगाः पद्धताः सर्वकर्मत्यागेन आमुष्मिकभोगाशा चित्तविक्षेपकारिणी परिहृता । ब्रह्मांडं च परित्यजेदिति । ननु स्वस्यापि ब्रह्मांडांतः पातित्वात्कथं तत्त्याग इति चेद्ब्रह्मांडत्यागेन तत्प्राप्तिहेतोर्विराडुपासनत्यागस्य विवक्षितत्वात् । तेन हिरण्यगर्भोपासनसमुच्चयः । सर्वमेवमंत्रोच्चारणेन परित्यज्य कौपीनादिकं न संन्यसेत् । कस्मै प्रयोजनाय । स्वशरीरस्य भोगाय नृलोकानुग्रहाय मनुष्यलोकोपकाराय

तथाच स्मृतिः–'कौपीनं युगलं वासः कंथां शीतनिवारणीम् ॥ पादुकं चापि गृह्णीयात्कुर्यान्नान्यस्य संग्रहम्' इति। स्वशरीरोपभोगो नाम कौपीनेन लज्जानिवृत्तिः। दंडेन गोसर्पादिपरिहारः। वाससा शीतादिनिवृत्तिपरिग्रहः। लोकस्योपकारो नाम दंडादिलिंगेन तदीयमुत्तमाश्रमं परिज्ञानाय तदुचिताभिवंदनभिक्षाप्रदानादिना सुकृतसिद्धिः शिष्टाचारप्राप्तायाः संन्यासमर्यादायाः पालनेन समुचीयते ॥ ६३ ॥ ६४ ॥

मार्गोऽयं परहंसानां न मुख्यः परिकीर्तितः ॥
मुख्या तु निष्ठा हंसानां शृणु तां नारदाधुना ॥ ६५ ॥

कौपीनादिपरिग्रहस्य मुख्यत्वं प्रतिषेधयति। मार्गोऽयमिति। न मुख्योऽवधूतानां विदुषां विविदिषूणां तु दंडग्रहणं मुख्यम्। स्मर्यते च–'दंडात्मनोस्तु संयोगः सर्वदैव विधीयते ॥ न दंडेन विना गच्छेदिपुक्षेपत्रयाद्बुधः' इति। दंडत्यागे प्रायश्चित्तमपि प्राणायामशतं स्मर्यते–'दंडत्यागे शतं चरेत्' इति। तर्हि परमहंसानां मुख्या निष्ठा केत्यत आह। मुख्या त्विति। हे नारद हंसानामवधूताश्रमं प्राप्तानां या निष्ठा ऽधुना तां शृणु। तुशब्दोऽत्यंतभेदद्योतकः ॥ ६५ ॥

तेषां न दंडो न शिखा न सूत्रं नापि वाससी ॥
न पादुके नांबुपात्रं न कंथा न निवासनम् ॥ ६६ ॥
न शीतं यत्र नोष्णं च न सुखं दुःखमेव च ॥
न मानो नापमानश्च नोर्मयो यत्स्पृशंत्यमी ॥ ६७ ॥

तामेवाह षोडशभिस्तेषां न दंड इति। ननु जनकादिवत् विद्वान् गृह एव तिष्ठतु, तथाच स्मृतिः–'ज्ञानामृतेन तृप्तस्य कृतकृत्यस्य योगिनः ॥ नैवास्ति किंचित्कर्तव्यमस्ति चेन्न स तत्त्ववित्' इति। यद्यपि ज्योतिष्टोमे कृष्णविषाणया कंडूयतीति प्रतिपत्तिवद्विदुषः संन्यासस्यार्थसिद्धत्वं तथापि चित्तविश्रांतिरहितस्य तृप्त्यभावेन विदुषोऽपि गृहस्थस्य नांदीमुखश्राद्धोरवामादिपूर्वकसंन्यासविधानात् 'प्रकृतिवद्विकृतिः कर्तव्या' इतिन्यायेनात्र विविदिषा संन्यासवत् प्रैषमंत्रेणैव

सर्वत्यागविधानात् इति । निवासभूः मठादिः निरुद्धाशेषवृत्तेर्योगिन शीतादिप्रत्ययाभावात् यथा बालस्य क्रीडासक्तस्य शीताद्यभावः तथा योगिनः परमात्मन्यासक्तस्य शीताद्यभावः, तदभावे च सुखाद्यभावः। तथाचोक्तम्– 'देहं च नश्वरमवस्थितमुत्थितं वा सिद्धो न पश्यति यतोऽध्यगमत्स्वरूपम् ॥ दैवादुपेतमथ दैववशादपेतं वासो यथा परिकृतं मदिरामदांधः' इति भागवते । पुरुषांतरसंपादितसत्कारः मानः, अपमानः तिरस्कारः स्वात्मव्यतिरिक्तपुरुषांतराभावात् । यान् अखंडानंदनिमग्नान् षडूर्मयः क्षुत्पिपासे शोकमोहौ जरामरणं च क्रमेण प्राणमनोदेहधर्मा आत्मतत्त्वासक्तान् योगिनः न स्पृशंति न व्यथयंति ॥ ६६॥६७॥

**शब्दस्पर्शरूपरसगंधानपि स्मरंति न ॥**
**निंदागर्वपरासूयादंभद्वेषादिवर्जिताः ॥ ६८ ॥**

अतएव शब्दादीनपि न स्मरंतीत्याह । शब्देत्यादि । समाधावेवं भवतु व्युत्थानकाले निंदादिदुःखं स्यादित्याशंक्य सदासमाहितेषु तज्जन्यं दुःखादि न स्यादित्याह । निंदेति । दोषो निंदा, अन्योन्योऽधिकोऽहमिति वृत्तिर्गर्वः, गुणेषु दोषोऽसूया, स्वकृत्यकीर्तनं दंभः, स्वेष्टप्रतिकूलेऽनिष्टचिंतनं द्वेषः । विषयादिभिरस्य सदृशो भवामीति मत्सरस्यादिना परिग्रहः ॥ ६८ ॥

**दर्पकामक्रोधलोभमोहाहंकारवर्जिताः॥**
**शरीरं शववत्स्वीयं पश्यंतः शोकवर्जिताः ६९ ॥**

पुनः कथंभूताः परमहंसाः । दर्पकामक्रोधलोभमोहाहंकारवर्जिताः, भर्त्सनादिषु बुद्धिर्दर्पः, योषिदाद्यभिलाषः कामः, कामितार्थविघातजन्यो बुद्धिविक्षोभः क्रोधः, प्राप्तस्य त्यागासहिष्णुत्वं लोभः, अहितेषु हितबुद्धिर्हितेषु अहितबुद्धिर्मोहः, देहेंद्रियादिषु आत्मत्वभ्रमोऽहंकारः, तैर्वर्जिता । पुनः शरीरं शववन्निर्त्यं पश्यंतः स्वशरीरं नित्यं कुणपवत् मृतशरीरं तुल्यं पश्यंतः । एतेन देहे सति कथं लिंगत्याग इति परास्तम्, देहस्य ज्ञानेन निरस्तत्वात् ।.अतएव शोकवर्जिताः शरीरनाशमालोच्य यः संसारिणां मनस्तापस्तेन रहिताः ॥ ६९ ॥

**एतच्छरीराभिमानत्यागाच्चिद्रूप आत्मनि ॥**
**अज्ञानसंशयभ्रांतिहेत्वज्ञानविवर्जिताः ॥ ७० ॥**

पुनः एतच्छरीरेऽभिमानत्यागात् एतच्छरीरे योऽभिमानोऽहमाकारावृत्तिस्तस्य त्यागात्सर्वाधिष्ठाने चिदात्मनि प्रत्यग्रूपेण साक्षात्कृते सति चिन्मात्रतां गताः । यथा चिन्मात्रस्य कस्मिन्नपि देहे ऽभिमानो नास्ति तद्रूपस्य परमहंसस्यैतच्छरीरेऽभिमानत्यागः संपन्नः । आत्मनीति देहलीदीपन्यायेनोभयत्र संबध्यते । पुनः चिद्रूपे चैतन्यमात्रे आत्मनि अज्ञानसंशयभ्रांतिहेत्वज्ञानविवर्जिताः । अज्ञानं चतुर्विधम् । कार्याविद्या अनित्याशुचिदुःखानात्मसु, नित्यशुचिसुखात्मख्यातिरविद्येति पतंजलिसूत्रात् । अनित्ये गिरिनद्यादौ नित्यत्वभ्रांतिरेकाविद्या । अशुचौ पुत्रकलत्रादिदेहे शुचित्वबुद्धिर्द्वितीया । दुःखे कृषिवाणिज्यादौ सुखित्वमतिस्तृतीया । गौणात्मनि पुत्रादिदेहे मिथ्यात्मनि स्वकीयदेहत्रये चात्मत्वमतिश्चतुर्थी । आत्मा कर्तृत्वादिमान् तद्रहितो वा इत्यादिसंशयः, भ्रांतिर्देहादिष्वहंबुद्धिः, एतद्धेतुभूतं यन्मूलाज्ञानं तेन वर्जिताः । एतेन यथा दिग्भ्रमे जाते सूर्यदर्शनेन नष्टे कालांतरे पुनर्भ्रमस्तथाऽऽत्मविषयभ्रांतिरपि पुनर्भविष्यतीत्यपास्तम्, मूलस्य नष्टत्वादेवानुत्पत्तेरिति दृष्टांते तस्यानाशात् ॥ ७० ॥

**नित्यमुक्ता अतो ये ऽस्मिन्विचरंति महीतले ॥**
**ते हंसाः परमा ज्ञेयास्तेषां निष्ठेयमीदृशी ॥ ७१ ॥**

का स्थितिरितिप्रश्नस्योत्तरमुपसंहरति । नित्यमुक्ता इति । अतो मूलाज्ञाननिवृत्तेः येऽस्मिन्महीतले नित्यमुक्ता आत्मरूपत्वान्निरहंकारा विचरंति ते परमहंसा विद्वत्संन्यासिनः अवधूता इति ज्ञेयाः । तेषां परमहंसानां ईदृशीयं पूर्वोक्ता निष्ठेति ॥ ७१ ॥

**शांताचलाद्वयानंदविज्ञानघन एव यः ॥**
**स आत्मा मे परं धाम तत्सूत्रं सा शिखा मता ॥ ७२ ॥**

भो वैराग्यतीर्थ किं ते धाम सूत्रं शिखा आसनं संध्या च का

इति प्रश्ने सत्याह । शांतेति । शांताचलाद्वयानंदविज्ञानघन एव प्रपंचाभावोपलक्षितः, शांतः अचलः क्रियारहितः अद्वयः आनंदः सुखरूपः विज्ञानघनः विद्धन एव य आत्मा स मे परं धाम स्थानं धीयतेऽस्मिन्सर्वमिति व्युत्पत्तेः । तत्सूत्रं स आत्मा । तदिति विधेयलिंगत्वान्निर्देशः, सूत्रवत्सर्ववेष्टकत्वात् । सा शिखा अत्रापि पूर्ववन्निर्देशः, शेते सर्वोपरि तिष्ठतीतिव्युत्पत्तेः ॥ ७२ ॥

**परमात्मात्मनोरैक्यज्ञानमेव ममासनम् ॥**
**अज्ञानतत्कृतभेदनाशः संध्या मता मम ॥ ७३ ॥**

आसनमाह । परमात्मेति । परमात्मा तत्पदार्थः आत्मा त्वंपदार्थः, तयोरैक्यज्ञानमभेदसाक्षात्कारः मम परमहंसस्यासनं आस्यते उपविश्यतेऽस्मिन्निति व्युत्पत्तेः । संध्यामाह । अज्ञानतत्कृतभेदनाशः अज्ञाननाशपूर्वकभेदनाशः संध्या, संधौ भवा इत्युक्तेः ॥ ७३ ॥

**सर्वान्कामान्परित्यज्याद्वैतब्रह्मात्मचिंतनम् ॥**
**अयमेव परो दंडः पंचमुद्रासमन्वितः ॥ ७४ ॥**

पश्चं संन्यासांगमाह । सर्वानिति । सर्वान्ब्रह्मलोकादिविषयान्कामान्परित्यज्याद्वैतब्रह्मात्मचिंतनं अद्वैतरूपेण यद्ब्रह्मात्मनः स्फुरणम् । अयमहमस्मीति निष्ठेति यावत् । अयमेव परः श्रेष्ठः सर्वदुःखनिवर्तकत्वाद्दंडः अनादिकालमारभ्याज्ञानेनाहं दुःखित्वमापादितोऽतो बोधस्तस्य दंडः । कथंभूतो दंडः । पंचमुद्रासमन्वितः ध्यानादिपंचमुद्रायुक्त इत्यर्थः ॥ ७४ ॥

**ज्ञानदंडो धृतो येन एकदंडी स उच्यते ॥**
**काष्ठदंडो धृतो येन सर्वाशी ज्ञानवर्जितः ॥ ७५ ॥**
**स याति नरकान् घोरान्महारौरवमेव च ॥**
**इति श्रुतिः स्वयं प्राह ज्ञानदंडस्ततो मम ॥ ७६ ॥**

चतुर्थाश्रमलिंगत्यागनिमित्तो दोषः स्यादित्याशंक्य सर्वदोषमूलभूताज्ञाननिवर्तकत्वान् ज्ञानदंडस्यैव शास्त्रप्रतिपाद्यत्वं प्रत्युत ज्ञानरहितस्यैव दोषत्वमित्याह । ज्ञानदंड इति । त्रिदंडितो यथा—वाग्दंडो मनो-

दंडः कायदंडश्चेति त्रिविधो दंडः । एवमेकदंडिनां द्विविधो ज्ञानदंडः काष्ठदंडश्चेति । तेषां स्वरूपं च दक्षेणोक्तम्-'वाग्दंडो मौनमातिष्ठेत्कर्मदंडस्त्वनीहताम् ॥ मानसस्य तु दंडस्य प्राणायामो विधीयत ' इति । मौनादीनां वागादिदमनहेतुत्वाद्यथा दंडत्वं तथैवाज्ञानतत्कार्यदमनहेतुत्वात् ज्ञानस्य दंडत्वम् । अयं ज्ञानदंडो येन परमहंसेन धृतः स एव मुख्य एकदंडी उच्यते, मानसस्य ज्ञानदंडस्य चित्तविक्षेपेण विस्मृतिर्माभूदिति स्मारकः । काष्ठदंडो ध्रियते एतदज्ञात्वा वेषमात्रेण पुरुषार्थसिद्धिमभिमेत्य येन परमहंसेन काष्ठदंडो धृतः स बहुविधयातनोपेतान् महारौरवसंज्ञकान् नरकान् याति प्राप्नोति । तत्र हेतुः । यतः सर्वाशी वर्ज्यावर्ज्यम कृत्वा सर्वमश्नाति सर्वाशी । तत्र हेतुर्ज्ञानवर्जितः । इति स्वयं साक्षात् श्रुतिः प्राह वदति ॥ ७५ ॥ ७६ ॥

**एवं योऽन्तर्ध्यानयुक्तः परमहंस ईरितः ॥**

**नास्य कार्यं नमस्कारो न स्वधाकार एव च ॥ ७७ ॥**

अन्यथा च" के चात्महनो जनाः " इतिश्रुत्या पूर्वार्धेन 'तांस्ते प्रेत्याभिगच्छंति 'इति वदंत्या ज्ञानहीनस्य नरकाभिधानात् अतो ज्ञानदंडकाष्ठदंडयोर्यदंतरमुक्तं मत्वाऽधमत्वलक्षणं तत् ज्ञात्वोत्तमो ज्ञानदंडः यो धारयति स एव परमहंसो मुख्यो ज्ञेय इत्याशयेनाह । एवं य इति । यः परमहंसः अंतर्ध्यानसंयुक्तः, अंतः प्रत्यगात्मनः ध्यानं ब्रह्मात्मैक्यनिष्ठा तद्युक्तः, इति मुख्यत्वे हेतुगर्भं विशेषणमिति । ननु मा भूदस्य काष्ठदंडोऽन्या तु क्रिया शिष्टाचारपरंपराप्राप्तस्यावश्यमपेक्षितामर्यादा इत्याशंक्य ज्ञानामृतेन तृप्तस्येति वचनमाश्रित्याह । नास्येति । अस्य सदापरोक्षस्य चिदात्मरूपस्य परमहंसस्य नमस्कारो न कार्यं स्वस्मिन्परकृततां संभाव्यान्यस्मिन् जडे चेतनेवोत्कृष्टत्वमकारकत्वेऽो नमस्कारः स्वस्य न कार्यः स्वभिन्नस्य चेतनस्य जडस्य चाऽभावात् । षष्ठी कर्तरि । कर्तृत्वप्रयोजकस्य देहादेरपातत्वात् । यथोक्तं श्रुत्येन-' भेदाभेदौ सपदि गलितौ पुण्यपापे विशीर्णे मायामोहौ क्षयमधिगतौ नष्टसंदेहवृत्तेः ॥ शब्दातीतं त्रिगुणरहितं प्राप्य तत्त्वावबोधं

निस्त्रैगुण्ये पथि विचरतः को विधिः को निषेधः' इति। निर्नमस्कारमस्तुतिमितिवचनाच्च । श्राद्धादावपि न स्वधाकारोऽस्य ॥ ७७ ॥

**न श्रौषट् न वषट्कारो नावाहनविसर्जने ॥**
**न मंत्रं नापरं ध्यानं नान्योपासनमेव च ॥ ७८ ॥**

श्रौषडादिकर्तुर्यजमानस्योद्देश्यविषयस्य देवताश्चैतत्स्वरूपत्वात् श्रौषडादिकमप्यस्य नेत्याह । न श्रौषडिति । ननु 'भिक्षाटनं जपः शौचं स्नानं ध्यानं सुरार्चनम्। कर्तव्यानि षडेतानि सर्वदानृपदंडवत्' इतिविधानात्कथं न कर्तव्यमित्याशंक्य मुख्यतदितरयोर्भेदस्य दर्शितत्वादस्य वचनस्य न मुख्यपरत्वमित्याह । नावाहनविसर्जने इति । सदागमस्यावाहनाभावात्तदभावे विसर्जनाभावः । न मंत्रो जपव्यत्वेन विवक्षितः । नापरं ध्यानमात्मनो भिन्नमस्यास्ति । नान्योपासनमेव च, अन्योऽसावन्योऽहमस्मीत्यन्योपासननिषेधात् ॥ ७८ ॥

**संग्रहो न सुवर्णादेर्न स्पर्शो नेच्छयेक्षणम् ॥**
**बाधा हि नरकांता स्यादेवं सति न संशयः ॥ ७९ ॥**

संग्रहो न कर्तव्यः सुवर्णादेरित्याह । संग्रह इति । सुवर्णादेः संग्रहः स्पर्शश्च नास्ति । नेच्छया रागेण ईक्षणं न दर्शनमपि । ननु भिक्षाचमनाद्यर्थं धातुपात्रापेक्षा इति चेन्न, धातुभिन्नपात्रचतुष्टयविधेर्यतेः चत्वारि पात्राणि इत्यादेर्वैयर्थ्यापत्तेरिति । तथा च निषेधोऽपि जागर्ति सुवर्णरजतादिपात्राणां भिक्षा आचमनाद्यर्थानामेकमपि नैव परिग्रहेदिति । यमोऽप्याह—'हिरण्मयानि पात्राणि कृष्णायसमयानि च ॥ यतीनां तान्यपात्राणि वर्जयेत्तानि भिक्षुकः' इति । तथाच श्रुतिः—भिक्षुर्हिरण्यं रसेन ग्राह्यं चेत् स आत्महा भवेत् ॥ यस्माद्भिक्षुर्हिरण्यं यो न दृष्टं च न ग्राह्यं च सर्वे कामा मनोगता व्यावर्तंते" इति । अस्यार्थः— रसेन प्रेम्णा हिरण्यं स्वर्णं न ग्राह्यं न गृहीतव्यम् । प्रथमाप्रयोगः छांदसः । स आत्महा आत्मैव सत्यमन्यत् शुक्तिरजतवत् मिथ्या इत्यनंगीकारात् आत्मा तेन हत इव भवति तेनात्महा भवेत् । स्मृतिश्च—

'ब्रह्म नास्तीति यो ब्रूयाद्द्वेष्टि ब्रह्मविदं च यः ॥ अभूतब्रह्मवादी च त्रयस्ते ब्रह्मघातकाः' इति । स्मृत्यंतरम्– 'पतत्यसौ ध्रुवं भिक्षुर्यस्य भिक्षोर्द्वयं भवेत् ॥ धीपूर्वं रेतउत्सर्गो द्रव्यसंग्रह एव च इति' । अन्यापि– 'योऽन्यथा संतमात्मानमन्यथा प्रतिपद्यते ॥ किं तेन न कृतं पापं चौरेणात्मापहारिणा ' इति । न दृष्टं न स्पृश्यमश्नेच्छेदिति शेषः । चकारैः श्रुतं च कथितं च व्यवहृतं न चेच्छेदिति समुच्चयः । दर्शनादिकं चाभिलाषादिपूर्वकहिरण्यादिवृत्तांतश्रवणतद्गुणकथनतदीयक्रयादिव्यवहारा अपि प्रत्यवायहेतव इत्यर्थः । हिरण्यादिवर्जनस्य फलमाह । सर्वे कामा मनोगता इति । पुत्रभार्यादीनां हिरण्यपूर्वकत्वात्तत्त्यागे सर्वत्याग इति, मनोगता इत्यनेन कामानां मनोधर्मत्वं बोध्यम् । " ह्रीर्धीर्भीरेतत्सर्वं मन एव " इति श्रुतेः । न च मनोनिमित्तकत्वमेषामिति वाच्यम् , सामानाधिकरण्यानुपपत्तेरिति । मनसि सति सत्त्वं तल्लये सुषुप्ते तदभावाच्च । आत्मा तु चित्सदानंदघनः स एव परमहंसस्वरूपः परमहंस एव कृतकृत्यो भवति नान्य इति । तथाच श्रुतिः–" परपूर्णानंदैकबोधस्तद्ब्रह्माहमस्मि " इति । कृतकृत्यो भवति ' आत्मन्येव च संतुष्टस्तस्य कार्यं न विद्यते ' इति स्मृतेः । उक्तंच– ' न सुखं देवराजस्य न सुखं चक्रवर्तिनः ॥ यत्सुखं वीतरागस्य ज्ञाननिष्ठस्य योगिनः ' इति तस्मात्परमहंस एव विद्वान्पूर्णानंदनिमग्न इति ॥ ७९ ॥

परमहंसोपनिषदमेवमाह हरिः स्वयम् ॥
देवर्षये नारदाय तस्मादेवंविधोऽस्म्यहम् ॥ ८० ॥

एवं नारदनारायणसंवादरूपां परमहंसोपनिषदर्थभूतां स्वनिष्ठायां प्रमाणत्वेन दर्शितामुपसंहरति । परमहंसोपनिषदमिति । परमहंसोपनिषदं हरिर्नारायणो देवर्षये नारदाय स्वयमाह साक्षादुपदिष्टवान् । तस्मात् श्रुतिप्रमाणात् एवंविधोऽहं -विधिनिषेधागोचरः चित्सदानंदोऽद्वितीयोऽहमस्मीति ॥ ८० ॥

चिदात्मनि जगन्नाथे आनंदाब्धावनंतके ॥

रममाणस्य किं मे स्यात्कंथादंडकरंडकैः ॥ ८१ ॥

तमेवार्थमाह । चिदात्मनीति । मे कंथादंडकरंडकैः कंथा शीतनिवारणी दंडं सन्यासमर्यादापालनकं लिंगं करंडको जलपानभाजनं तैः मम विध्यागोचरस्य किं साध्यं स्यात्, अपितु न किमपीत्यर्थः । कथंभूतस्य मे । जगन्नाथे सर्वजगदंतर्यामिस्वरूपे आनंदाब्धौ पूर्णानंदसमुद्रे अनंतके देशादित्रिविधपरिच्छेदहीने रममाणस्य परमप्रीत्या चिदात्मन्यासक्तस्य ॥ ८१ ॥

इति वैराग्यतीर्थस्य वच आकर्ण्य विस्मिता ॥
पप्रच्छ चित्तवृत्तिस्तं विवेकाश्रममंतिके ॥ ८२ ॥

इति वैराग्यतीर्थस्य वचनं श्रुत्वा सा किं कृतवतीत्यत आह । इति वैराग्येति । वैराग्यतीर्थस्य इति पूर्वोक्तप्रकारं वचनमाकर्ण्य श्रुत्वा विस्मिता आश्चर्यं प्राप्ता सती तं विवेकाश्रमं भिक्षुमंतिके समीपे वर्तमानं पप्रच्छ चित्तवृत्तिरिति ॥ ८२ ॥

भ्रातस्त्वया जीव एवानंदरूप उदाहृतः ॥
विषयत्यागपूर्वं मे रतिं तत्रोक्तवानसि ॥ ८३ ॥

किं पृष्टवतीत्यत आह । भ्रातरीति । हे भ्रातस्त्वया जीव एव लिंगशरीरावच्छिन्न एव आनंदरूपः परमानंद उक्तः विषयत्यागपूर्वं रतिं प्रीतिं तत्र जीवे उक्तवानसि ॥ ८३ ॥

अथ तु मस्करी वक्त्यानंदितां परमेष्ठिनः ॥
इदानीमस्मि संदेहदोलालोलाऽऽमलाशया ॥ ८४ ॥

विवेकाश्रमवचो यथा निश्चित तदुक्त्वा वैराग्यतीर्थवचोभिमतं स्वज्ञातं यथातथा दर्शयति । अथं त्विति । अयं वैराग्यतीर्थसंन्यासी तु परमेष्ठिनो ब्रह्मण आनंदितां आनंदरूपां तां वक्ति कथयति । तुशब्दोऽत्यंतभेदद्योतनार्थः । इदानीं सांप्रतं भवतो भिन्नार्थं वचः श्रुत्वा ऽहं संदेहदोलालोला संदेहो विरुद्धकोटिस्पर्शज्ञानं स एव दोलातया लोला चंचला संदिग्धा अतएवामलाशया आसमंतान्मलो मलिनः आशयो

ऽतस्करणं यस्याः सा तथा। मल इति छेदेऽपि स एवार्थः । अथवा अमलाशया इति छेदः । पूर्वं भवदुक्त्या विषयविमुखा सती निर्मलाभवं संप्रति संदिग्धा जातेत्यर्थः ॥ ८४ ॥

पिंडं त्यक्त्वा करंलेढीत्याभणक उपस्थितः ॥
यत्त्यक्त्वा विषयान्सर्वान्नोपादेयं निरीक्ष्यते ॥ ८५ ॥

अतः करंलेढितिन्यायविषयतां प्राप्ता इत्याह । पिंडमिति । यथा लोके काचित् योषा शर्कराघृतादियुतं पिंडं त्यक्त्वा करं स्वहस्तं लेढीति जनैर्हस्यते तथाहमपि । आभणको न्यायः उपस्थितः प्राप्तः । दार्ष्टांते योजयति । यदिति । यद्यस्माद्धेतोरानंदजनकान् सर्वान्विषयांस्त्यक्त्वा उपादेयो ग्राह्यो भवदुपदिष्टः पूर्णानंदो न प्रतीयतेऽतस्ततोऽप्युत्थापिता निर्विषया सती किं कुर्यां कुत्र गच्छेयम् ॥ ८५ ॥

कावला मृदुलाऽत्राहं का निष्ठा परमेष्ठिनि ॥
तपोभिर्दुष्करैरस्मिन्नास्थिताः कपिलादयः ॥ ८६ ॥

किंच 'सहस्रेभ्यः सहस्रेभ्यः कश्चिदुत्थाय वीर्यवान् ॥ भिनत्ति वासनाजालं पंजरं केसरी यथा ॥ यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः ॥ श्रुत्वाऽप्येनं वेद न चैव कश्चित् दुर्गं पथस्तत्कवयो वदंति' इत्यादिवचनैरतिदुर्घटेऽस्मिन्नर्थे योषाया मे सामर्थ्यं नास्तीत्याह । कावलेति । हे ब्रह्मन्नत्रास्मिन्नर्थे ऽवला तपोबलरहिता स्त्री मृदुला मृदुस्वभावा दुःखसहनासमर्था क्व । परमेष्ठिनि परब्रह्मणि निष्ठा काऽतिदुर्लभा । अस्मिन्योगे दुःसाध्ये दुष्करैः दुखेन क्रियंते साध्यंते दुष्कराणि तैस्तपोभिः कपिलादयः । आदिना ऋषभादिपरिग्रहः । आस्थिता निष्ठां प्राप्ताः ॥ ८६ ॥

किंचात्मनि जगत्सर्वं दृश्यतेऽज्ञानकल्पितम् ॥
इति त्वयोक्तं तत्रापि निश्चयो मे न जायते ॥ ८७ ॥

किंचेदं जगन्मिथ्या इत्यपि मम निश्चयो न जायते इत्याह । किंचेति ।

आत्मनि जगत्सर्वं अज्ञानकल्पितं इति यत् त्वया उक्तम् । तत्रापि जगतो ज्ञानकल्पितत्वे मे मम निश्चयो न जायते ॥ ८७ ॥

**जीवात्मनि जगत्सर्वं कल्पितं परमात्मनि ॥**
**आद्ये किं बहवो जीवाः किं तावंति जगंत्यपि ॥८८॥**

अज्ञानेनात्मनि जगत् कल्पितमित्यत्र जीवात्मा ज्ञानेनेति वक्तुं न शक्यते अज्ञानस्य जीवाश्रयत्वे आत्माश्रयाद्यापत्तेः, अज्ञानेन जगदात्मनि कल्पितमज्ञान कल्पितं न वाद्ये स्वेन स्वस्य कल्पितत्वे आत्माश्रयः द्वितीये ज्ञाने परस्पराश्रयः तृतीये चक्रकं चतुर्थे ऽनवस्थानकल्पितं चेदद्वैतहानिरिति । किंच जीवशब्देनांतःकरणविशिष्ट उच्यते । उपहितो वा शुद्धो वा नाद्यः कार्यकोटिनिविष्टस्याधिष्ठानत्वानुपपत्तेः, न द्वितीयः स्वोपहितस्य स्वाधिष्ठानत्वानुपपत्तेः, न तृतीयः शुद्धत्वानुपपत्तेः । द्वितीयं कल्पमाह । परमात्मनि ब्रह्मणि जगदज्ञानेन कल्पितं ब्रह्मनिष्ठेनाज्ञानेन जगत्तस्मिन्कल्पितम् । आद्ये पक्षे जीवात्मनि जगत्सर्वमिति । अस्मिन्पक्षे जीवा बहवो नेके जगंत्यपि किं तावंति प्रतिजीवं भिन्नानि किम् ॥ ८८ ॥

**किंचेदं जगदेकं सत्सर्वजीवेषु कल्पितम् ॥**
**द्वितीये ज्ञानहेतुत्वं जगतः कथ्यते कथम् ॥ ८९ ॥**

जीवबहुत्वपक्षे द्वितीयकोटिमाह । किंचेदमिति । किंवा पक्षांतरे एकं जगत्सर्वजीवेषु कल्पितं बहवो जीवाः । अस्मिन्पक्षे द्वितीयकोटिः एको वा जीवः । एकत्वपक्षे बंधमोक्षानुपपत्तिरपि कल्पितं वा परात्मनि इति । द्वितीयपक्षो न विचारसहः प्रतिभातीत्याह सार्धेन । द्वितीय इति । जगतो ज्ञानहेतुत्वं कथमज्ञानशब्देन सांख्यकल्पिता प्रकृतिरुच्यते । नैयायिकसंमतो ज्ञानाभावो वा भवत्कल्पितमनिर्वचनीयं वा । नाद्यः ईक्षतेर्नाशब्दमित्यादिवचनैस्तस्या त्वया खंडितत्वात्, न द्वितीय अभावस्योपादानत्वानंगीकारात्, न तृतीय. प्रातीतिकस्य शुक्तिरजततुल्यस्य गुरुशास्त्रादिव्यवहारविषयपदार्थ प्रत्ययहेतुत्वादिति ॥ ८९ ॥

नाज्ञानं भवेदीशे सर्वज्ञे सर्वशक्तिके ॥
तत्र कल्पयतो ऽज्ञानं महान् दोषः प्रसज्यते ॥ ९० ॥

"यः सर्वज्ञः स सर्ववित् ॥ यस्य ज्ञानमयं तपः" इत्यादिश्रुतेः सर्वज्ञे ज्ञानविरुद्धमज्ञानं कल्पयतो महान् दोषः स्यादित्याह । नहीति । सर्वज्ञे सर्वप्रकाशके सर्वशक्तिके सर्वाः शक्तयोऽचिंत्यप्रभावा यस्य स तस्मिन्परमेश्वरे अज्ञानं कल्पयतः ईश्वरोऽज्ञानी मूढ इति कल्पनाकृतवत एव मूढत्वं वदंति । महांतं दोषमपि कथयंतीत्याह । महान् दोष इति ॥ ९० ॥

इत्यज्ञानां मतिःस्त्रीणां न विप्रो विदुषां कथम् ॥
अजं गजं हि ते कुर्युस्तर्ककर्कशबुद्धयः ॥ ९१ ॥

मन्निश्चयस्त्वीदृशः भवादृशां पंडितानां निश्चयं न जानामीत्याह । इत्यज्ञानामिति । इत्यज्ञानां मूढानां स्त्रीणां मतिः निश्चयः विदुषां पडितानां घूकवत्तमः सूर्ये कल्पयतामर्थतो विपर्ययग्रस्तानामिति हास्योक्तिः । विपर्ययमेव तेषां प्रकटयति । अजं गजं हि ते कुर्युः, हि यस्मात्ते परमेश्वरमज्ञवद्वदंतो येन विपर्ययेणेश्वरं मूढं मन्यंते तेनैवाजं बर्करं गजं हस्तिनमपि कर्तुं समर्थाः । अतएवेश्वरज्ञानाभावात्तर्कमात्रप्रधाना इत्याह । तर्ककर्कशबुद्धय इति ॥ ९१ ॥

भ्रातः प्रातः समुत्थाय कस्य चास्यं निरीक्षितम् ॥
आनीता ऽस्म्यद्य केनोच्चैः कर्मणेमं मठं प्रति ॥ ९२ ॥

वैराग्याद्रागिणो बिभ्यतीति इमं अर्थं बोधयंती वैराग्यतीर्थं दृष्ट्वा स्वहृदयकंपनादिहेतुं भयं दर्शयति सार्धद्वयेन । भ्रात इति । हे भ्रातः प्रातःकाले समुत्थाय मया कस्यास्यं मुखं निरीक्षितं दृष्टम् । अद्यकाले केनोच्चैः तीव्रवेगेन कर्मणा तत्कालफलदेनेमं मठं मनुष्यदेह मत्यानीता प्रापिताऽस्मि । फलेस्तु उच्चैः कर्मणा अनेकजन्मसंचितपुण्यकर्मणेत्यभिप्रायः ॥ ९२ ॥

कथं दृष्टो ऽयमद्यैव श्रुतः पूर्वं ममानुजः ॥

वेपते मे मनस्तात भीमं दृष्ट्वा दिगंबरम् ॥ ९३ ॥

हे तात भ्रातः अयं ममानुजः श्रुतः पूर्वंश्रुतप्रभावः अद्य वाऽस्मिन्काले एव कथं केन प्रकारेण दृष्टः । भीमं बिभ्यति रागिणोऽस्मादितिव्युत्पत्तेः, दिगंबरमाशांबरं दृष्ट्वा मे मनः वेपते कंपते ॥ ९३ ॥

उरः शिरस्ताडयंतीं नासिकानेत्रकुंचनैः ॥
अग्रजामनुजः प्राह चित्तवृत्तिं यतीश्वरः ॥ ९४ ॥

अनुजः अनु पश्चाज्जातः पुण्यवशादनुजो विवेकाश्रमः यतीश्वरः भिक्षुराजः अग्रजां पूर्वजां चित्तवृत्तिं प्राह । कथंभूताम् । उरः वक्षः शिरस्ताडयंतीम् । पुनर्नासिकानेत्रकुंचनैः नासिके च नेत्रे च कुंचनं वैराग्यभयेन देहसंकोचनं च तानि तैर्लक्षिताम् ॥ ९४ ॥

उद्वेगं त्यज तन्वंगि तत्त्वोद्योगं हृदा ऽऽवह ॥
तव संशयमुत्पन्नं कुर्वे ऽनुत्पन्नसन्निभम् ॥ ९५ ॥

विवेकाश्रमश्चित्तवृत्तिं किमुक्तवानत आह । उद्वेगमिति । हे तन्वंगि बाह्यविषयत्यागेन सूक्ष्मांगि हृदा मनसा तत्त्वोद्योगं आवह पूर्णानंदाविर्भावे यत्नं कुरु तत्संमुखा भव । तव संशयमुत्पन्नमनुत्पन्नसदृशमहं कुर्वे । स्वमन उद्योगं पौरुषं विना कदाऽप्यभयं न लप्स्यसे मया ज्ञायसे त्वं विषयत्यागं कुर्वंती दुःखिता । जाता स्वयमेवालोचय । ये रागिणो दुःखिनस्ते विरक्ताः सुखिनो ऽभवन् अतः स्वपौरुषसाध्ये फले चिरं न कर्तव्यमित्यर्थः । तथाच वसिष्ठः— 'पौरुषेण प्रयत्नेन चित्तमाश्वेव जीयते ॥ अचित्तेन प्रयत्नेन पदे ब्रह्मणि दीयते ॥ स्वायत्तं च स्वसाध्यं च स्वचित्ताकांतिमात्रकम् ॥ शक्नुवंति न ये कर्तुं धिक् तान्पुरुषजंबुकान् ॥ स्वपौरुषैकसाध्येन स्वेप्सिततत्यागरूपिणा ॥ मनःप्रशममात्रेण विना नास्ति शुभागतिः ॥ नूनं दैवमनादृत्य मूढसंकल्पकल्पितम् ॥ पुरुषार्थेन सविद्या नय चित्तमचित्तताम्' इति ॥ ९५ ॥

आत्माज्ञानमपथ्यत्व तावद्दृश्यस्य दृश्यते ॥
आत्मबोधविनाशपथ्यत्वमपि तस्यैव संमतम् ॥ ९६ ॥

भ्रायमाशय', वस्तुतो जीवश्चैवन्याद्भिन्नः कश्चिन्निरूप्येत तदेत्यमुपाल-भ्येमहि—एक एवात्मा शुद्धसत्त्वमायासंबंधेनेश्वरः स एव मलिनपृष्ठदर्पण इव मलिनाज्ञानोपाधिको जीव इति व्यवहियते, यथा निद्रादोषेणोपप्लुत एक एव जीव ईश्वरं कल्पयति अन्यान्प्रमातॄन् कल्पयति, सर्वं पदार्थ-जात रथनद्यादिकं च जाग्रद्दृष्टे फलायोन्मुखे सति प्रबुध्यति, तथेश्वर-प्रसादात्साधनसंपत्तौ अनादिमायया सुप्तो जीव एकः सर्वकल्पको महा-वाक्येन स्वरूपसाक्षात्काररूपप्रबोधं प्राप्नोति, अज्ञानस्याघटनघटनाप-टीयसः चैतन्यबलात्सर्वकल्पकस्य नैयायिकमेदवत् स्वपरनिर्वाहकस्य चिन्मात्राश्रयविषयस्य स्वीकारात्सर्वदोषपरिहारः ' यस्याज्ञानाद्भ्रमाति तस्य ज्ञानान्ननश्यति ' इतिव्याप्तेरज्जुसर्पादौ दृष्टत्वेन प्रतीतिमात्रसिद्ध-स्य प्रपंचस्याज्ञानं विना न किंचिदुपादानमधिष्ठानस्य च कल्पितगुण-दोषाभ्यामस्पृष्टस्य श्रुतिस्मृतिविद्वदनुभवसिद्धत्वादित्यभिप्रायं मनसि निधाय चित्तवृत्त्युक्तान्विकल्पान्स्वप्नदृष्टतेन परिहर्तुमाह। आत्माज्ञानेति। तावदादौ हे चित्ते तव सर्वविकल्पग्रासकर्त्रीं व्याप्तिं शृणु । यस्य यदज्ञानोत्पन्नत्वं तस्य तत् ज्ञाननाश्यत्वं शुक्तिरजतादौ प्रसिद्धम् । दृश्यत्वहेतोरपि तत्प्रसिद्धिः यथा रजतस्य दृश्यत्वात् शुक्त्यज्ञानसमुत्थ-त्वं शुक्तिज्ञाननाश्यत्वं तथा दृश्यस्येति हेतुगर्भं विशेषणम् । प्रपंच-स्यात्माज्ञानसमुत्थत्वं चित्सदानंदाद्वितीयपरिपूर्णानंदा ज्ञानवती त्वं तस्यैवानिर्वचनीयस्य प्रपचस्यात्मबोधविनाश्यत्वं निरंतरपरिपूर्णप्रकाश-साक्षात्कारनिवर्त्यत्वं सम्मतम् । वेदांतार्थतात्पर्यज्ञानवद्भिः पूर्वैर्भि-रितिशेषः ॥ ९६ ॥

एकाकी पुरुषः शय्यामधिशेते यदा तदा ॥
न रथास्तत्र वर्तंते रथयोगास्ततोऽपि च ॥ ९७ ॥

स्वप्नमाह बृहदारण्यकश्रुत्या दर्शयति द्वाभ्याम्। एकाकीति। एकाकी असहायः बाह्यसहायानपेक्षः यदा शय्यामधिशेते शय्यायां अधि, शीङ्स्थासामित्याधारस्य कर्मसंज्ञायां द्वितीया, शेते शयनं करोति न रथास्तत्र वर्तंते। तत्र स्वप्ने रथाः प्रसिद्धाः। रथयोगाः रथैर्युज्यंते इति

रथयोगा अभ्वादयः । ततोऽपि च, अपिचाभ्यां तदुपादानभूतकाष्ठलोहादिसमुच्चयः ॥ ९७ ॥

न पंथानो भवंत्यत्राथ रथान् पश्यतीप्सितान् ॥
रथयोगान्पथश्चैतत्किं कार्यमिति चिंतय ॥ ९८ ॥

न पंथानो रथयोग्या भवंति । अत्र स्वप्ने अथ रथान् पथः इप्सितान् पश्यति प्रकाशयति स्वयंप्रकाशः आदित्यादेरभावादिंद्रियाणामुपरतत्वात् । अज्ञानोपादानस्य मनसश्च विषयाकारेणोपेक्षणात् । अधिष्ठानत्वमात्रेणात्मन उपादानत्वं व्यवह्रियते, कल्पितस्याधिष्ठानातिरिक्तसत्ताकत्वाभावात् । इति तात्पर्येण श्रुतौ पुरुषः सृजत इति प्रयोगः । पुरुषस्य निर्विकारस्य परिणाम्युपादानत्वाभावात् । अज्ञानं विना रथादेरन्यदुपादानं न संभवति अनिर्वचनीयसृष्टेरनिर्वचनीयोपादानस्य योग्यत्वादित्याशयेनाह । किं कार्यमिति । कस्य कार्यं किं कार्यमज्ञानं विना न कस्यापि कार्यं स्वप्नजगदित्यर्थः । किं कार्यं किमपि कार्यं नास्तीति मायामात्रमिति चिंतय विचारय । तथेदं जगच्चिदधिष्ठानाज्ञानोपादानमनिर्वचनीयमेवेति । अतएवोक्तम्– 'मायामात्रमिदं द्वैतमद्वैतं परमार्थतः ', इति । अविद्यैव जगदाकारेण परिणमते इत्यत्र वासिष्ठमपि–' यथेंद्रजालमखिलं मायामयमवस्तुकम् ॥ तत्र कास्था कथं नाम हेयोपादेयदृष्टयः ॥ज्वालावच्चेद्रुद्धवर्णाऽपि मषीमलिनकोटरा॥ बल्कात्पन्यप्रसादेन क्षीयते तदवेक्षणात् ॥ जडैव चिन्मयी वासावन्यस्वदोपजीवनी ॥ निमेषमप्यतिष्ठंती स्वैपांशंकां प्रयच्छति ' इति ॥ ९८ ॥

उपलक्षणमेतच्च श्रुत्युक्तमिति कीर्तितम् ॥
रंकः साम्राज्यमाप्नोति संम्राट् रंकत्वमेव च ॥ ९९ ॥

एतच्छ्रुत्युक्तमुदाहरणं भ्रांतिज्ञानानामुपस्थापकमित्याह । उपलक्षणमिति । एतच्च श्रुत्युक्तं विपर्ययात्मकमुपलक्षणमिति उपलक्षणमात्रं कीर्तितं बहूनां विपर्ययदृष्टांतानामेकदेशमात्रं कथितमन्येऽपि मिथ्याज्ञानस्य बहवो दृष्टांताः इत्याह । रंक इति । दरिद्रः साम्राज्यं सम्य·

कृ राजते सम्राट् चक्रवर्ती तस्य भावः साम्राज्यं आधत्ते कुरुते । स्वप्ने इति शेषः । सम्राट् रंकत्वमेव च पुनः रंकत्वमाधत्ते ॥ ९९ ॥

**निद्रितो दृश्यते ऽवंत्यां समीपस्थैर्नरैर्नरः ॥**
**स तु देहं समीपस्थं मेरोरुपरि पश्यति ॥ १०० ॥**

अत्रैवोदाहरणांतरमाह । निद्रित इति । समीपस्थैर्नरैः अवंत्यामुज्जयिन्यां निद्रितः निद्रा जाताऽस्येति निद्रितः निद्रां प्राप्तः स उज्जयिन्यां सुप्तः । समीपस्थं देहमवंतीवर्तमानं समीपस्थं स्वशरीरं मेरोः पर्वतविशेषस्योपरि उर्ध्वं वर्तमानं पश्यति ॥ १०० ॥

**मानुषे ऽस्मिन् शरीरेऽभिमानसंपन्न एव सन् ॥**
**व्याघ्रो भूत्वोचितं कार्यं तद्देहस्य करोति च ॥१०१॥**

तथैवान्यदाह । मानुषेति । अस्मिन्मनुष्यदेहे ऽभिमानसंपन्नः प्राप्तः । द्वितीयाश्रितेति समासः । एव सन् तच्छरीराभिमानमपरित्यज्यैव मनुष्य एव सन्नित्यर्थः । व्याघ्रो भूत्वा सिंहभावं प्राप्य तद्देहस्य व्याघ्रदेहस्योचितं मनुष्यादिमारणरूपं कृत्यं करोति । चकारोन्यदेहस्य तत्कार्यकारणस्य समुच्चायकः ॥ १०१ ॥

**सर्वं चैतच्चित्तवृत्ति त्वं विचारय तत्त्वतः ॥**
**अज्ञानस्य विलासो ऽयं भवेद्वा न भवेदिति ॥ २०२॥**
**यद्यज्ञानविलासोऽयं न स्यादन्यनिदानजः ॥**
**तत्त्वज्ञानापनोद्यत्वं तस्य स्यान्न कथंचन ॥ २०३ ॥**

अस्य प्रपंचस्य स्वप्नेंद्रजालगंधर्वपत्तनमरुमरीचिकातुल्यस्य मायामात्रत्वनिश्चयं विना निर्वाहो न भविष्यतीत्याह । सर्वमिति । हे चित्तवृत्ते मर्त्य चैतत्तत्त्वतो विचारय । परमार्थदृष्ट्या विचार्यमाणेन किंचिदुपलभ्यते जलात्पृथक्त्वेन तरंगवत् । यथा तरंगो दृश्यमानोऽपि नास्त्येव तथायं प्रपंचोऽपि तत्त्वदृष्ट्या नास्त्येवेति । ननु ब्रह्मणो रूपाद्यभावान् कथं दृश्यत्वमित्याशंक्य नटी यथा नभसि किंचिद्गानादि प्रक्षिप्य सेनानगरादिकं दर्शयति तथेयं मायानटी किं न दर्शयतीत्याह । अज्ञानस्येति । यदि विचारं विना प्रतीयते नभसि गंधर्वनगरमिवा ज्ञान-

स्यैव विलासः परमार्थदृष्ट्या न भवेत् । तरंग इवेति भावः । अयं प्रपंचो मायाविलासोऽज्ञानापनोद्यत्वात् । शुक्तिरजतवदिति न चेदम-प्रयोजकमत आह । यदीति । अयं प्रपंचो यद्यज्ञानविलासो न स्यात्किंतु अन्यनिदानजः अज्ञानादन्यत्प्रधानपरमाण्वादि तज्जन्यः स्याच्चदा तत्स्वज्ञानापनोद्यत्वं तस्य कथंचन केनापि प्रकारेण न स्यात् । न चाज्ञानप्रागभावे व्यभिचार इति वाच्यम्, तस्यानंगीकारात् । तथाहि । प्राक्कालावच्छिन्नाभावत्वं विनाश्यभावत्वं वा प्रतियोगिजनकाभावत्वं । वा प्रागभावत्वं नाद्यः आत्माश्रयापत्तेः । न द्वितीयः चक्रकापत्तेः । विनाश्यभावत्वमित्यत्र किं विनाशि, ध्वंसप्रतियोगित्वं, ध्वंसत्वं किं, जन्याभावत्वं जन्यत्वं प्रागभावप्रतियोगित्वं प्रागभावत्वं विनाश्यभावत्वमिति न तृतीयः अन्योन्याश्रयापत्तेरिति । अतएव न विरुद्धः । न च प्रपंचः सत्यः, अर्थक्रियाकारित्वात् इति प्रकरणसंमतेति वाच्यम्, पारमार्थिकत्वस्योपाधित्वात् । न च फलाभावः पूर्वानुमानस्य तत्फलस्य सत्वात् । न च स्वरूपासिद्धः दृष्टांतहेतोर्निश्चयात् । न च मन्मते पक्षे साध्यसंदेहः तस्यानुकूलत्वात् । पक्षादन्यत्र गृहीतव्याप्तिकहेतोः बलात्पक्षे साध्यज्ञानरूपाया अनुमितेर्निष्पन्नत्वात् । न च कालात्ययापदिष्टता मया मायाविलासत्वरूपसाध्याभावस्य पक्षे निश्चितत्वादिति वाच्यम् । त्वया निश्चितत्वेऽपि मया अनिश्चितत्वे न दत्तोत्तरत्वात् । न च व्यावहारिकत्वमुपाधिः मायाविलासे प्रपंचे तस्य सत्वात् । ज्ञानापनोद्ये शुक्तिरजतादावसत्वादितिवाच्यम्, प्रपंचः सत्यः व्यावहारिकत्वाभावादिति । तत्फलस्य त्वया वक्तव्यत्वेन त्वन्मते प्रपंचस्य व्यावहारिकत्वेन स्वरूपासिद्धेः पारमार्थिकत्वस्योपाधेरुक्तत्वाच्चेति ॥ १०२ ॥ १०३ ॥

स्वप्नोपमं सर्वमवेहि तस्मा-
ज्जगाद्ध गत्यंतरमस्ति नात्र ॥

---

१ मायाविलासत्वादिपक्षपूर्वानुमाने सार्वत्रिकहेतोरपर्थः । २ साध्यव्याप्यप्रकारे सति साधनव्यापकत्वात् । ३ पक्षे साध्याभावः ।

स्वप्ने मुहूर्तेऽब्दशतभ्रमेण
चिरस्थितो वाऽत्र चिरस्थितो न ॥ २०४ ॥

स्वप्नतुल्यं मायामात्रमिदं जगदिति जानीहीत्युपसंहरन्नाह । स्वप्नोपम-मेति । हे चित्तवृत्ते तस्मात्पूर्वोक्तश्रुतेर्युक्तेश्च सर्वमिदं जगत्स्वप्नोपमं स्वप्नतुल्यमवेहि जानीहि । गच्छति विपरिणमते इति जगत् देहादि । पर्यैंद्रजालिकेनोप्तबीजादिकं तत्कालं पत्रपुष्पफलादिना परिणमते तथा गर्भे क्षिप्तं बीजादिकं कलिलबुद्बुदादिद्वारा करचरणादिरूपेण परिणमते बालो युवा वृद्धो भवति तत्र दर्शनादिव्यापारं करोति वा-गादिव्यापारं च करोति । तत्र केवलस्यात्मनो दर्शनादिक्रियाभावात् "निर्गुणं निष्क्रियम्" इति श्रुतेः केवलस्येंद्रियादेर्जडत्वेन तदभावात् अंतःकरणस्यापि केवलस्य जडत्वात् न तदाश्रयत्वम् । यथा जला-दिप्रतिबिंबः न केवलं जलस्य धर्मः सूर्यादिकं विनापि प्रतीतेर्न सूर्या-देस्तद्भिन्नत्वाभावादेव अहं जानामि पश्यामि गच्छामीत्यादि व्यवहार-स्यापि लोहो दहतीत्यादिवत् भ्रांतिमात्रत्वात् ऐंद्रजालिकव्यवहारवत् । अतएवोक्तं वृद्धैः—'एतस्मात्किमिवेंद्रजालमपरं यद्गर्भवासस्थितं रेतश्चे-तति हस्तमस्तकपदप्रोद्भूतनानांकुरम् ॥ पर्यायेण शिशुत्वयौवनजराऽवे-षैरनेकैर्वृतं पश्यत्यत्ति शृणोति जिघ्रति तथा गच्छत्यथाऽऽगच्छति' इति अत आह । न गत्यंतरमस्ति तत्र तस्मिन्व्यवहारे स्वप्नादितुल्यत्वं विना गत्यंतरं प्रकारांतरं नास्ति । स्वप्ने विपरीतमात्राने उदाहरणमाह । स्वप्ने मुहूर्ते स्वप्ने स्वप्नावस्थायां मुहूर्ते द्विघटिकाकालेऽब्दशतभ्रमेण वर्षशतभ्रमे चिरस्थितो वाऽत्र, वा इवार्थे, अस्मिन्देशे चिरस्थिता इवेत्यु-त्थिताः परामृशंति । वस्तुतः किम् । अतः चिरस्थिता न वर्षं न चि-रस्थिता भ्रांत्यैव शतवर्षप्रतीतिविशेषोदाहरणं चात्र गाधिलवणहरिश्चंद्रा-द्यो बोध्या इति । तथा चोक्तं वासिष्ठे—'मुहूर्ते वत्सरश्रेणि लवणस्या-नया कृता ॥ रात्रिर्द्वादशवर्षाणि हरिश्चंद्रस्य निर्मिता ' इति । अनया रीत्या दैत्यो ब्रह्मलोकं गतस्तत्र मुहूर्तेऽत्र युगादि जातानि स्वप्ने

हृद्देशे रथादिकं श्रुत्यैव दर्शितमतो मायया देशकालनियमो नास्तीति ॥ १०४ ॥ मायामात्रमिदं द्वैतं चतुर्थे कवले स्थितम् ॥ तद्व्याख्यया च मायेशस्तुष्यतु परमेश्वरः ॥ १ ॥

इति श्रीपरमहंसपरिव्राजकाचार्यहरिहरसरस्वतीप्रियशिष्यपरमहंसपरिव्राजकाचार्यजगन्नाथसरस्वतीविरचितेऽद्वैतामृते चतुर्थः कवलः संपूर्णः ॥ ४ ॥

इत्यद्वैतामृततरंगिण्यां टीकायां चतुर्थः कवलः ॥ ४ ॥

# अद्वैतामृतग्रंथे

## पंचमः कवलः ।

ॐ नमो नारायणाय ।
चिद्रूपमस्तीति हि निर्विवादं
जगत्प्रकाशेत कुतो ऽन्यथेदम् ॥
आत्मा तदेवेति तदाश्रयो वे-
त्येवं परं संशयमेति लोकः ॥ १ ॥

॥ श्रीपरमात्मने नमः ॥ ॥ एवं विषयदोषदृष्टिवर्णनपूर्वकं वैराग्यं सर्वसाधनपोषकं प्रथमकवले निरूपितम्, ततो द्वितीयकवलेन त्वंपदार्थशोधनार्थं दीपदृष्टांतेनात्मनः स्वयंज्योतिष्ट्वं निरूपितं तत्र प्रमाणमपि दर्शितमंथोपाख्यानेन तदेव द्रढीकृतम्, ततस्तृतीयेन तदर्थमेवात्मन आनंदतायां श्रुतियुक्तिदर्शिते, चतुर्थेन तत्पदार्थशोधनार्थं प्रपंचस्याज्ञानविलासत्वेन मिथ्यात्वं दर्शितम्, पंचमे कवले स्थूणानिखनन्यायेन तत्त्वंपदार्थशोधनपूर्वकं महावाक्यार्थो वर्णयिष्यते, तत्र बह्वीनां श्रुतीनां प्रामाण्यं दर्शितमिति। तत्र तावदात्मनश्चिद्रूपत्वं श्रुतियुक्तिभ्यां निरूपयितुमाह । चिद्रूपमस्तीति । हीति प्रसिद्धौ । चिद्रूपं वर्तते इति निर्विवादं विवादस्याभाव इति निर्विवादम् । अभावार्थे ऽव्ययीभावः । ज्ञानमात्रसत्वे कस्यापि विवादो नास्ति सर्वस्यापि व्यवहारस्य ज्ञानसाध्यत्वात् । ज्ञानाभावे जगदांध्यं स्यादित्याह । जगदिति । अन्यथा ज्ञानानंगीकारे इदं जगत्कुतः कस्माद्धेतोः प्रकाशेत । प्रकाशकहेतोरभावाज्जगत्प्रकाशान्यथानुपपत्तिप्रसूतार्थापत्तिरेव प्रकाशे प्रमाणमिति न विवादास्पदमेतेऽत आह । आत्मा तदेवेति । तज्ज्ञानमेवात्मा तदाश्रयो वा ज्ञानाश्रयो वा इत्येवं अभिप्रायं लोकः लोकपदं दृश्यते लोको देह तदविवेकात् लोकः परं किंतु संशयमेति प्राप्नोति ॥ १ ॥

आत्मा तदेवेत्यपि पक्ष आहुः
किं तत्क्षणध्वंस्यथवाऽस्तु नित्यम् ॥
तत्स्थानमात्मेत्यपि पक्ष आहु -
रेकः स आत्मा घटते ऽथ नाना ॥ २ ॥

ननु जिज्ञासुल्लोकः कथं संशयं प्राप्नोतीत्याशंक्य तान् पक्षान् शुत्वा फे ते पक्षा इत्यत आह । आत्मा इति । तदेव ज्ञानमेवात्मा इत्यपि अस्मिन्नपि पक्ष आहुः । किं तत् ज्ञानम् । क्षणध्वंसि अथवाऽस्तु नित्यं बौद्धाश्चत्वारः तत्र शून्यवादिनो माध्यमिकाः सुषुप्त्यव्यवहितोत्तरक्षणे व्युत्थितस्य सुषुप्तावहं नासमित्यनुभवाच्छून्यमेवात्मा । तथाच श्रुतिः– "असदेवेदमग्र आसीत्" इत्याहुस्तदसत् नासमित्यनुभवस्याप्रामाणिकत्वात्प्रामाणिकत्वे बाह्यज्ञानाभावपरत्वात् । श्रुतेस्तु नामरूपाभावपरत्वात् । योगाचारास्तु क्षणिकविज्ञानमेवात्मा । तद्द्विविधम्–प्रवृत्तिविज्ञानमालयविज्ञानं च । तत्रायं घट इत्यादिप्रवृत्तिविज्ञानं सुषुप्तावहमित्यालयविज्ञानम्, सुखादिकमस्यैवाकारस्तदतिरिक्तवस्तुनोऽसिद्धेः । श्रुतिरपि– "अन्योंऽतरात्मा विज्ञानमयः" इत्याहुस्तदसत् पूर्वानुभूतपदार्थस्मरणानुपपत्तेः । पूर्वक्षणवर्तिनोऽनुभवितुरभावात् अन्यानुभूते चार्थे ऽन्यस्य स्मृत्ययोगात् न च पूर्वज्ञानस्योत्तरज्ञाने संक्रांतिः जनन्यनुभूतस्य गर्भस्य तनयेन स्मरणापत्तेरिति । सौत्रांतिकास्तु ज्ञानाकारानुमेयक्षणिकबाह्यार्थ एवात्मेतीच्छंति तदप्यसत्, मत्पक्षस्य घटादेरनुमेयत्वाभावात् । अन्यथाप्रहृतविषयत्वेन मत्पक्षस्याप्रामाण्यापत्तेरिति । वैभाषिकास्तु क्षणिकबाह्यार्थ एवात्मेत्याहुस्तदपि मंदं सोऽयं घट इति प्रत्यभिज्ञाया अप्रमाण्यापत्तेर्वास्वीकारे भिन्नाभिन्नविकल्पत्रासापत्तेरिति । अन्येऽप्यष्टादश भेदाः संति ते विस्तरभयान्नोच्यंते इति । देहाद्यात्मवादिनश्चार्वाका अप्यनित्यत्वादिदोषदुष्टत्वादुपेक्षणीया इति । तर्हि कीदृग्ज्ञानमात्मेत्यत आह । नित्यं त्रिकालाबाध्यम् । कथं तर्हि ज्ञानसमवायिकारणमात्मेत्यत आह । तत्स्थानमात्मेत्यपीति । तस्य ज्ञानस्य स्थानमाश्रय आत्मा इत्यपि पक्षे नैयायिकमते आहुर्वदंति । इत्यपिभ्यामस्वरसः सूचितो

ऽस्मिन्मते समवायस्य खंडितत्वात्। ज्ञानोपादानत्वे परिणामित्वापत्तेः 'उपयन्नपयन् धर्मो विकरोति हि धर्मिणम्' इतिन्यायस्योक्तत्वात्। एक आत्मा स अथ नानात्मा 'नानात्मानो व्यवस्थात' इतिसूत्रात्। इति नैयायिकाः सांख्या वदंति ॥ २ ॥

एवं विवादे सति सत्यनादौ
तर्काकसंलालितलोकसिद्धे ॥
वेदांतकांतोपवनप्रचारा
इत्थं नरा निर्णयमाहुरत्र ॥ ३ ॥

एवं नास्तिकमतानि नैयायिकेन खंडितानि नैयायिकमतं सांख्येन खंडितं सांख्यमते नानात्मवाद एतेषां चात्मैक्यवाद एवं सति कथं निर्णय इत्यत आह। एवं विवादे सतीति। सति हे पतिव्रते। तर्काकसंलालितलोकसिद्धे तर्काः शुष्कतर्काः श्रुतिविरुद्धाः यद्येक आत्मा तदैकस्मिन्मुक्ते मुक्ताः सर्वे स्युरित्याद्याकारकास्ते अंकाः कलंकाः तैर्लालिताः तोषिताः लोकास्तैः सिद्धे। एवं पूर्वोक्तप्रकारेणानादौ विवादे विरोधे सति अत्रावसरे वेदांतकांतोपवनप्रचाराः वेदांताः कांतोपवनमिव, यथा लौकिकसुखार्थिभिः उपवनमुद्यानं काम्यते तथा पूर्णापरिछिन्ननिरतिशयसुखार्थिभिर्वेदांताः काम्यंते तत्र प्रचारः प्रवृत्तिर्येषां ते तथा नरा इत्थं निर्णयं सिद्धांतमाहुः ॥ ३ ॥

आत्मा तदेवेति मते प्रथंते
विज्ञानमानंदमिति श्रुतिर्या ॥
प्रज्ञानशब्दं समुदीर्य याऽहं
ब्रह्मेति तत्तत्प्रमुखा असंख्या ॥ ४ ॥
चिदात्मभावे श्रुतयस्ततो ऽयं
पक्षस्तु तात्रच्छ्रुतिसिद्ध एव ॥
युक्तिस्तु चित्वाचिदिहाश्रयाशां
कुर्याद्गुणत्वादथ वार्थरूपात् ॥ ५ ॥

इत्थं कथमत आह । आत्मा तदेवेति सार्धेन । आत्मा तदेव ज्ञानमेव । एवेन तदाश्रयत्वव्यवच्छेदः । इतिमते परमसिद्धांतमते विज्ञानमानंदं विज्ञानं चिद्घनमानंदनिरतिशयानंदस्वरूपमिति या शब्दे प्रसिद्धा श्रुतिः, या प्रज्ञानशब्दं समुदीर्य याऽहं ब्रह्मेत्याह प्रज्ञानं ब्रह्म प्रकृष्टं निरतिशयप्रकाशं ब्रह्मेति या श्रुतिरखंडार्थं वदति तत्तत्प्रमुखा, असंख्या "आनंदो ब्रह्मेति व्यजानात्, आनंदरूपममृतं यद्विभाति, आनंदं ब्रह्मणो विद्वान्न बिभेति कुतश्चन, मृत्योः स मृत्युमाप्नोति, य इह नानेव पश्यति, बृहच्च तद्दिव्यमचिंत्यरूपम्, सत्यं ज्ञानमनंतं ब्रह्म, एको देव इत्याद्या अनंताः श्रुतयः ब्रह्मणश्चिदात्मभावे ज्ञानरूपत्वे प्रथंते तात्पर्येण प्रतिपादयंति । ततस्तस्माद्धेतोरयं पक्षः श्रुतिसिद्धः श्रुतिप्रतिपाद्य एव । एवमात्मनश्चिद्रूपत्वे श्रुतेः प्रामाण्यं दर्शयित्वा तत्र युक्तिं दर्शयितुं प्रतिजानीते सार्धाष्टभिः । युक्तिस्त्वति । तुरप्यर्थः । युक्तिरपि उच्यते इति शेषः । इह व्यवहारकाले चित् आश्रयाशां कुर्यात् साश्रयावित्वात् नित्यत्वादित्यर्थः । गुणत्वात् अर्थरूपत्वात् ॥ ४ ॥ ५ ॥

आद्येऽनपायाच्चिदिहाश्रयाशां
कुर्यात्करोतीति हि नान्वयोऽस्ति ॥
चिन्मात्रपक्षीकरणान्न मध्यो
सिद्धेर्गुणत्वस्य चिदाश्रयस्य ॥ ६ ॥

तत्राद्ये हेतुमनुपसंहारित्वेन खंडयति । आद्ये ऽनपायात् नित्यत्वात् चिदाश्रयाशां कुर्यादिति । नित्यत्वादिति हेतुरन्वयीव्यतिरेकी वा नाद्य इत्याह । नान्वयोऽस्तीति । अन्वयदृष्टांतो नास्ति । ननु चिदंतरत्वादित्यन्वयदृष्टांतो भवत्वत आह । चिन्मात्रपक्षीकरणात् न । द्वितीयः यत्र साश्रयत्वं नास्ति तत्र नित्यत्वं नास्तीति वक्तुमशक्यत्वात् । साश्रयत्वाभावे नित्यत्वनियमात् इति । आद्यत्रये प्रथममपोह्य द्वितीयस्य गुणत्वस्यात्मन्यसिद्धिमाह । न मध्योऽसिद्धेः । न द्वितीयः चिदाश्रयस्मादाश्रयस्य गुणत्वस्यासिद्धेः चिद्रूपे पक्षे गुणत्वस्य हेतोरहेतुः स्वरूपासिद्धेरित्यर्थः ॥ ६ ॥

नास्त्योर्थमात्रे सति साश्रये स्या-
चिदाश्रयोऽप्याश्रयसव्यपेक्षः ॥
तथा सतीयं प्रसृताऽनवस्था
निवारणीया बलिनेह केन ॥ ७ ॥

तृतीयं खंडयति । नास्ति इति । तृतीयोर्थरूपो हेतुर्न चितः साश्रयत्वसाधक इत्यर्थः । कथं न साधक इत्याशंक्यानवस्थापत्तेरित्याह । चिदाश्रयोऽप्याश्रयसव्यपेक्ष इति । एवं सति किं स्यादित्याशंक्यानवस्थां विहाय न किमपि स्यादित्याह । तथा सति चिदाश्रयस्याश्रयसव्यपेक्षत्वे सति अनवस्था प्रसृता प्रवृत्ता । तर्हि निवार्यतामियं पिशाचीत्याशंक्य भगवद्विमुखेभ्यो मायेव बलिनापि न निवारयितुं शक्येत्याह । निवारणीयेति ॥ ७ ॥

चिद्रूप एवायमुपेय आत्मा
श्रुतेश्च युक्तेश्च न हेयमेतत् ॥
प्रतिक्षणध्वंस इहाभ्युपेयः
किं दीपदृष्टांतवशादिहार्थात् ॥ ८ ॥

श्रुत्या युक्त्या च प्रतिपादितमात्मनश्चिद्रूपत्वमुपसंहरन् "नैषा तर्केण मतिरापनेया" इतिश्रुतेर्न त्याज्यमेतच्चिद्रूपत्वमित्याहार्धेन । चिद्रूप इति । अयं साक्षादपरोक्ष आत्मा श्रुतेश्च, चात् 'आदित्यवर्णं तमसः परस्तात्' इत्यादिस्मृतेः । युक्तेश्च चात्पुराणादिग्रहणम् । न हेयमेतत् । श्रुतिशासनं शिष्टैरादरेण शिरसा धार्यमिति ॥ सार्द्धपंचभिरात्मनः क्षणिकत्ववन्तृ खंडयति । प्रतिक्षण इति । प्रतिक्षणध्वंसः क्षणं क्षणं प्रतिध्वंसो यस्य स तथा । इह व्यवहारकाले दीपदृष्टांतवशात् अर्थात् प्रयोजनात् वा आत्मा प्रतिक्षणध्वंसोऽभ्युपेयः स्वीकर्तव्यः ॥ ८ ॥

प्रयोजनं न क्षणिकत्वपक्षे
चित्तेः किमप्यत्र विलोकयामः ॥
आद्यस्तु दीपोपमयैव तर्के-

तदस्तु, सूर्योपमया स्थिरत्वम् ॥ ९ ॥

न द्वितीय इत्याह । प्रयोजनमिति । चित्तेः क्षणिकत्वपक्षे किमप्यत्र व्यवहारे प्रयोजनं न विलोकयामः । भोजनादिव्यवहारे यागादिजन्यस्वर्गादिव्यवहारे वा श्रवणादिजन्यतत्त्वज्ञानव्यवहारे वा ज्ञानप्राप्यमोक्षव्यवहारे वा चित्तेः क्षणिकत्वप्रयोजनम् । नाद्यः तत्फलस्य तृप्त्यादेरभावापत्तेः न द्वितीयः यागादिकर्तुर्भिन्नस्य स्वर्गादिभोक्तृत्वानुपपत्तेर्व्यधिकरणत्वात् न तृतीयः साधकाभावेन ज्ञानानुपपत्तेरिति न चतुर्थः ज्ञानाश्रयस्य पूर्वक्षणवर्तिनः उत्तरक्षणेऽसत्वात् न व्यवहारानुपपत्तिरपीति । सर्वथापि क्षणिकत्वे फलाभाव इति प्रथमं प्रत्याह । आद्य इति । दीपोपमया दीपदृष्टांतेन तच्चेत्क्षणिकत्वं, यदि, निरंतरत्वेन धारात्वं तदा सुषुप्तिलोपापत्तिः, तत्स्वीकारे मात्रानुभूतस्य गर्भस्य स्मरणापत्तेरित्यरुच्या पक्षांतरमाह । तदस्त्विति । सूर्योपमया स्थिरत्वमस्तु ॥ ९ ॥

घटोपलब्धौ न पटोपलब्धिः
पटोपलब्धौ न घटोपलब्धिः ॥
आबालगोपालमिति प्रसिद्धं
तस्मान्न सिद्धं यदि तत्स्थिरत्वम् ॥ १० ॥

ननु सूर्यदृष्टांतेन कथं स्थिरत्वं पूर्वदिग्दृष्टस्य पश्चिमायामुपलब्धेरित्याशंक्यास्थिरत्वमित्यपि पदच्छेदः । तथाच यथा सूर्यस्योपाधिनास्वाधारचक्रेणास्थिरत्वं स्वतःस्थिरत्वं तथाऽऽत्मनोऽप्यंतःकरणवृत्त्याद्युपाधिसंबंधेनास्थिरत्वं स्वतःस्थिरत्वमित्याशयेनाह । घटेति । घटोपलब्धौ घटाकारायां वृत्तौ न पटोपलब्धिः पटोपलब्धौ पटज्ञाने न घटोपलब्धिः । आबालगोपालमिति प्रसंस्त्वेन प्रसिद्धेषु बालादिष्वपीति प्रसिद्धं तस्मान्न सिद्धं यदिति तत्स्थिरत्व चेत्सूर्योपमया स्थिरत्वं सोपाधिकं न स्यात्तदा प्रसिद्धं न स्यात् । सर्वजनप्रसिद्धिर्न स्यादिति नकारानुषंगेनान्वयः ॥ १० ॥

तद्ब्रूहि लाक्षारससन्निधाने
न पीतभावं स्फटिकोऽभ्युपैति ॥
पीते ऽथवा वस्तुनि सन्निकृष्टे
न रक्ततामित्यपि सुप्रसिद्धम् ॥ ११ ॥

अत उपाधिनैव स्थिरत्वव्यवहार इत्याह सार्धेन । तद्ब्रूहीति । स्फटिकः लाक्षाया रसस्य रक्तवर्णस्य सन्निधाने सति पीतभावं नाभ्युपैति पीतवर्णोपाध्यभावे पीतवर्णत्वं न याति । पीते वस्तुनि सन्निहिते सति न रक्तभाव यातीति सुप्रसिद्धम् । इत्यपि दृष्टान्तरसमुच्चायकौ ॥ ११ ॥

तत किमस्तु स्फटिक स्थिरात्मा-
ऽनुरागभेदात्क्षणिकोऽमलात्मा ॥
अतो ऽत्र विज्ञानमयो ऽयमात्मा-
ऽमलोऽचलो नित्यविभुर्विबोधः ॥ १२ ॥

एव सति कथं क्षणिकः स्फटिक इत्यत आह । तत इति । स्थिरात्मा स्थिरोऽपि स्फटिको यथाऽनुरागभेदात् पीताद्युपाधिभेदात् । पीतसन्निधाने पीत एव न रक्तः, रक्तसन्निधानक्षणे रक्त एव न पीतः क्षणिक इति व्यवह्रियते । वस्तुतस्तु अमलात्मा स्फटिकः शुद्धो निर्मल इत्यर्थः । दृष्टान्तमुक्त्वा दार्ष्टान्तमाह । सार्धेन । अत इति । अत्र दार्ष्टान्ते अयमात्माऽमलः मायामलवर्जितः अचलः चलनवर्जितः नित्यविभु सदापूर्णविबोध इन्द्रियादिभिर्विशेषो बोधो यस्य स तथा । वृत्त्युत्पत्त्या उत्पन्न इव तन्नाशे नष्ट इव भवन्नास्तीत्यर्थः ॥ १२ ॥

तत्तत्प्रकाश्याकृतिचित्तसूर्या-
दर्शभित्तिभागे प्रतिबिम्बितात्मा ॥
तन्नाशतो नष्ट इवैतदात्त-
क्रमात्क्रमीव प्रतिभासते न ॥ १३ ॥
नैनं प्रकाशयति कश्चिदयं चिदात्मा

सर्वं प्रकाशयति नैव करोति चैनम् ॥
कश्चित्करोति भुवनानि चतुर्दशायं
हंतास्य नायमुपसंहरति त्रिलोकीम् ॥ १४ ॥

कथं वृत्त्यादिसंबंधेनेदृश आत्माऽतो दृष्टांतमाह । तत्तत्प्रकाश्येति । तत्तत्प्रकाश्या घटादयः तत्राकृतिराकारो यस्य तत्तत्प्रकाश्याकृति तत्तत्प्रकाश्याकारतां गतं चित्तं तत्र सूर्यं अश्मभित्तिभागे मण्यादिभित्तिभागे यथा प्रतिबिंबितस्तथा प्रतिबिंबितश्चासावात्मा तन्नाशतो नष्ट इव यथा सूर्यसंबंधे प्रतिबिंबितसूर्य उत्पन्न इव तस्य तद्भित्तिसंबंधाभावे नष्ट इव तथा चित्तप्रतिबिंबित आत्मा चित्तनाशे नष्ट इव । एतदाप्रक्रमात् एष चासावाप्रक्रम एतदाप्रक्रमस्तस्माद्विषयाकारतां प्राप्तचित्तात्क्रमीव क्रमो ऽस्यास्तीति क्रमी गमनवानिव । वस्तुतो नाशपदेनोत्पत्तिरपि विवक्षिता । तथाच तदुत्पत्तौ उत्पत्तिमानिव नोऽस्माकं प्रतिभासते । यदि तु एतदात्मा इति पाठस्तदा स्पष्ट एवार्थः । पूर्वार्थं तपाठस्य प्रतिबिंबित आत्मा स्वरूपं यस्येत्यर्थः । तथाच श्रुतिः—"यथा ज्योतिरात्मा विवस्वान् एको बहुधा यो गच्छन्" ॥ 'एक एव हि भूतात्मा भूते भूते व्यवस्थितः ॥ एकधा बहुधा चैव दृश्यते जलचंद्रवत् ॥ रूपं रूपं प्रतिरूपो बभूव' इति । "अयमात्मा ब्रह्मविज्ञानमयो मनोमयः प्राणमयश्चक्षुर्मयः श्रोत्रमयः पृथ्वीमयः आपोमयो वायुमय आकाशमयस्तेजोमयः" इत्यादि । अधुना श्रुत्यर्थनिरूपणद्वारा परात्मतत्त्वं तस्या विश्वासार्थं निरूपयति एकोनषष्टिभिः । नैनमिति । कश्चिद्बाह्यः प्रकाश आंतरश्चैनमात्मानं न प्रकाशयति 'न तत्र सूर्यो भाति न चंद्रतारकम्' इति । अयं चिदात्मा सर्वबाह्यमांतरं च भासयति "यस्य भासा सर्वमिदं विभाति" इति श्रुतेः । नैव करोति चैनं आत्मानं यत्नेन कश्चिन्नैवोत्पादयति "अविनाशी वा रेऽयमात्मा" इत्यादिश्रुतेः । अयमात्मा चतुर्दश भुवनानि करोति मायया ऐंद्रजालिकवदुत्पादयति । 'मयाध्यक्षेण प्रकृतिः सूयते स चराचरम्'

इति "स्मृते । अस्यात्मनो" हंता नाशयिता न विद्यते ' न हन्यते हन्यमाने शरीरे " इति स्मृतेः । अयं त्रिलोकीं सर्वं जगत् उपसंहरति " यत्प्रयंत्यभिसंविशंति " इति श्रुते. ॥ १३ ॥ १४ ॥

"वस्त्वेव तत्र नहि यत्र तु नायमास्ते
"कालं तमत्र कलयामि न यत्र नायम् ॥
देशोऽपि दुर्लभतर स तु यत्र नास्ति
बालादिधर्मरहितो विमलश्चिदात्मा ॥१५॥

ननु कालादेर्नित्यत्वात्कथ सर्वसंहर्तृत्वमत आह । वस्त्वेवेति । यत्र वस्तुन्यधिष्ठानत्वे नाय न वस्त्वेव न वर्तते यद्वस्त्वेव न " सर्वं खल्विद ब्रह्म " इति श्रुते । यत्र अयमात्माऽनन्तं कालमपि न पश्यामि । देशोऽपि दुर्लभतर स देशोऽपि नास्ति यत्र देशेऽधिष्ठानत्वेनाय नास्ति, सर्वदेशकालाधिष्ठानत्वात् । " अनंतं ब्रह्म " इति-श्रुते अतो देशकृतकालकृतो वस्तुकृत परिच्छेदो यत्र नास्ति ' सदनन्त सत्य ज्ञानम् " इति श्रुते, सर्वगत इतिस्मृतेश्च । नित्यत्वेन स्थूलदेहस्यावस्था बाल्ययुवादिरूपा अस्य पूर्णस्य न संतीत्याह । बालादीति । अतएव विमलो निर्मलश्चिदात्मा इति ॥ १५ ॥

नैनं प्रकाशयति वागगृहीतसंगा
नैनं मनो विशति मानपथव्यतीतम् ॥
वेद प्रमाणपथमागतमर्थजातं
सर्वं निषिध्य परिभीतवदाह शेषम् ॥१६॥

" यतो वाचो निवर्तंते, नेव वाचा न मनसा " इत्यादिश्रुतेरर्थमाह । नैनमिति । एनमात्मानं वाक्शब्दो न प्रकाशयति न विषयीकरोति । हेतुगर्भं विशेषणम् । कुतो न विषयीकरोति । यतो ऽग्रहीत सगः सबधो यस्या सा तथा । नहि सबध विना वृत्तिमात्र प्रवर्तते " असगो नहि सज्जते " इतिश्रुतेरात्मनो ऽसगत्वात् । ननु मन एव प्रवर्ततामत आह । नैन मन इति । अग्राह्यं मनो न विशति कथभूतं

मनः । मानपथव्यतीतं अप्रमाणं तथाच प्रयोगः मनो न प्रमाणं प्रमाणसहकारित्वादालोकवदिति । उक्तंच–'अप्रमाणमनोऽस्माकं प्रमादेराश्रयत्वतः' इति । ननु "तं त्वौपनिषदम्" इति श्रुतेः कथं तत्र शब्दाप्रवृत्तिरित्यत आह । वेदे इति । नेति नेति इत्यादिवेदः परिभीतवत् परितो भीत इव शेषं अवधिभूतमाह वदति । किं कृत्वा । प्रमाणपथमागतं सर्वं प्रतियोगित्वेन विषयतां गतं ब्रह्मभिन्नं वस्तुतामात्रं निषिध्य । अतएवोक्तम्–'अतद्व्यावृत्त्या यं चकितमभिधत्ते श्रुतिरपि इति'। उक्तंच बादरायणेनापि–'शब्दातिगः शसद्धहः' इति । अथवा यद्यप्यनाशिनोऽप्रमेयस्येत्यादिवचनात्सर्वथा विषयत्वं नास्ति । कुतः स्वप्रकाशत्वात् । स्वस्य स्वविषयत्वे कर्मकर्तृभावविरोधापत्तेरन्यस्य जडस्य प्रकाशकत्वानुपपत्तेस्तथाऽप्यतद्धर्माध्यारोपणनिवर्तकत्वेन वेदस्य प्रामाण्योपपत्तेरिति तद्भाष्योक्तेः । वेदः सर्वमर्थजातं निषिध्य प्रमाणपथमागतं यथा स्यात्तथा शेषमाह । न चैवं सति घट्टकुटीप्रभातन्यायापत्तिरिति वाच्यम् । शेषमाहेत्यस्य सर्वनिषेधावधिभूतं बोधयति । वाग्व्यापारं विनैव सूचयतीत्यर्थः । यथा चित्रलेखया पत्रे सर्ववर्तमानकालिकराजादिव्यक्तयो लिखिताः, उषा बाणपुत्री सर्वा व्यक्तीर्नेति नेतीति निषिध्यानिरुद्धं दृष्ट्वा तूष्णींबभूव, पार्श्वस्थैर्निश्चितो यो न निषिद्धः सोऽनिरुद्ध इति हरिवंशे प्रसिद्धा कथा, तथा श्रुत्या शेषित इति ॥ १६ ॥

नैवास्ति किंचिदणु यस्य न सोऽन्तरास्ते
तत्रापि नैव महदेप न यस्य बाह्यः ॥
संकल्पहीनमिह सर्वगुहाशयं तं
पश्यत्यमुष्य कृपयैव हि वीतशोकः ॥ १७ ॥

तस्य दुर्लभत्वमेव प्रतिपादयति । नैवास्तीति । स आत्मा यस्यांतर्नास्ति एतादृशमणु किंचिदेवास्ति तत्रापि किंचिदपि वस्तु नैव महत् । यस्य एष आत्मा न बाह्यः, संकल्पहीनं मनोरहितं सर्वगुहाशयं सर्वमपिह इह बुद्धिगुहायामधिष्ठानत्वेन स्थितमात्मानममुष्येश्वरस्य कृपयैवानुग्रहे

मैव पश्यति साक्षात्करोति । ततः वीतशोको भवति । तथाच श्रुतिः– "अणोरणीयान्महतो महीयान् आत्माऽस्य जंतोर्निहितो गुहायाम्" इति । अन्यच्च वचनम्–" ईश्वरानुग्रहादेव पुंसामद्वैतवासना" इति । तत्प्रसादं विना न लभ्यते । तथाचोक्तम्–' यावन्नानुग्रहः साक्षाज्जायते परमेशितुः ॥ तावन्न सद्गुरोः प्राप्तिः सच्छास्त्रं वापि नो लभेत् ' इति । अत्रायमाशयः– 'यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ॥ यत्तपस्यसि कौंतेय तत्कुरुष्व मदर्पणम्' इति स्मृत्युक्तनिष्कामकर्मानुष्ठानं विनांऽतःकरणशुद्धिर्न, तामृते साधनचतुष्टयसंपत्तिर्न, तां विना श्रवणाद्यनुष्ठानं न, तद्विना ज्ञानं न ' तरति शोकमात्मवित् ' इतिश्रुतेः । शोकनिवृत्तिर्नेति श्रुतिस्मृतिरूपेश्वराज्ञोल्लंघिनां निःश्रेयसं दुर्लभमिति भावः । तथाचोक्तं भगवता–'श्रुतिस्मृती ममैवाज्ञे यस्त उल्लंघ्य वर्तते ॥ आज्ञाछेदी मम द्वेषी मद्भक्तोऽपि न वैष्णव' इति । तस्मादीश्वराज्ञापरिपालनजन्यतत्कृपयैव तं पश्यति ततो गतशोको भवति इत्यर्थः ॥ १७ ॥

सत्यस्य नैव चरणौ जवनस्य नैव
हस्तौ गृहीतुरपि पश्यति सोऽक्षिहीनः ॥
कर्णौ न चास्य स शृणोति स वेत्ति सर्वं
तं वेद कोऽपि न पुराणमनंतमाद्यम् ॥ १८ ॥

नन्वेवं कथं ज्ञातुं शक्य इत्याशंक्य सर्वेंद्रियहीनोऽपि सर्वसत्ताप्रदः सर्वेंद्रियव्यवहारसाधको ज्ञेय इत्याह। सत्यस्येति। सत्यस्य अधिष्ठानस्य चरणौ न । जवनस्य वेगतः हस्तौ न स्तः । गृहीतुः "अपाणिपादो जवनो ग्रहीता" इतिश्रुतेः कर्णौ श्रोत्रे न स्तः । स शृणोति शब्दं प्रकाशयति "स शृणोत्यकर्णः" इतिश्रुतेः । स सर्वं वेत्ति कोऽपि तं न वेद न ज्ञापयति । कुतो न वास्तवतीत्यत आह । पुराणं नित्यम् । अनंतं त्रिविधपरिच्छेदरहितम् । आद्यं सर्वाधिष्ठानत्वेन कारणम् ॥ १८ ॥

श्रोत्रस्य यः समुपयात्यपि कर्णभावं
यो वा मनश्च मनसोऽप्यथ वाक्च वाचः ॥
प्राणस्य प्राण इह चक्षुष एति चक्षु-
र्भावं तमेत्य खलु मुक्तिमुपैति धीरः ॥१९॥

पुनः श्रुतिस्तत्माप्त्युपायं वदति । श्रोत्रस्येति । यः श्रोत्रस्य सर्वेंद्रियस्य कर्णभावं श्रोत्रभावं समुपयाति श्रोत्रसाध्यशब्दज्ञानं करोति, तत्प्रकाशकत्वात् "श्रोत्रस्य श्रोत्रम्" इति श्रुतेः । य आत्मा मनस सविकल्पविकल्परूपस्य प्रकाशकं मनसो मनः "मनसो मन इतिश्रुते । वाचः वागिंद्रियस्य वाक् तत्प्रेरकत्वात्, "वाचोह वाचम्" इतिश्रुते द्वितीया प्रथमात्वेन परिणमते इति । प्राणस्य प्राणः तत्सत्ताप्रद प्राणचेष्टा चेतनाधिष्ठानपूर्विका अचेतनप्रवृत्तित्वात् रथादिप्रवृत्तिवदिति । इह इंद्रियैर्विषयग्रहणकाले चक्षुषः चक्षुरिंद्रियस्य चक्षुः तद्ग्रहणसाधकः। सर्वस्यैव करणकलापस्य यदर्थप्रवृत्तिस्तद्ब्रह्मेत्याशयेन त परमात्मानं एत्य प्रत्यक्त्वेन साक्षात्कृत्य धीरः साधनसंपन्नः मुक्तिमाप्नोतीत्यर्थः ॥ १९ ॥

अन्यत्र योऽस्ति विदिताविदितार्थयुग्मा-
दन्यत्र योऽस्ति च कृतादकृताच्च भूमा ॥
अन्यत्र भूतनिचयाच्च भविष्यतश्च
व्याख्यापदत्यमुपयाति ततो य ईशः ॥२०॥

ननु यद्यद्वस्तु तत्तत्प्रत्यक्षं भवत्येव ज्ञानेनेति कथं दुर्ज्ञेयत्वमत आह । अन्यत्रेति । य आत्मा विदिताविदितार्थयुग्मात् विदितश्चाविदितश्च तौ अर्थौ तयोर्युग्मं तस्मात् । श्रोत्रादिविदितात् अन्यदेव पृथगेव । विदितं नाम यद्विदिक्रियया ऽतिशयेन व्याप्तं तत्कर्मभूतं व्याकृतं तस्मादन्यदित्यर्थः । अविदितात् अव्याकृतात् व्याकृतबीजात् । वेदितुरन्यत्तद्विदितमविदितं चेति द्वयीमपि, ततो विदिताविदितत्वनिषेधेन वेदिस्वरूप ब्रह्मेति तात्पर्यम् । श्रुतिराह- "अन्यदेव तद्विदितादथो अविदितात्" इति । कृताकार्या

त् अकृतात्कारणात् अन्यथ भूतनिर्णयात् भूतस्य कार्त्स्न्यं निचयः समुदायः सर्वभूतकालस्तस्मादविषयतश्च । चाद्वर्तमानात्, द्वितीयचकारात् कालत्रयपरिच्छिन्नवस्तुमात्रात् । अन्यत्र स्वमहिम्नि । संकोचाभाव माह । भूमा परिपूर्णः । सभूमा कुत्र स्थितः । स्वे महिम्नीति श्रुतेः । सप्तमीं तु आधारांतरं निषिध्यैव चरितार्था । नन्वेवं बोधिते सति विषयतां गमीष्यतीत्यत आह । अव्याख्यापदत्वं व्याख्यायाः ' पदच्छेदः पदार्थोक्तिर्विग्रहो वाक्ययोजना ॥ आक्षेपस्य समाधानं व्याख्यानं पंचधा स्मृतम्' इत्याकारिकायाः पदत्वं विषयत्वं नोपयाति । तस्या द्वितीयागताविषय इति चेन्न पदवाच्यतायास्तत्र निषिद्धत्वात् । अनेन किमुक्तं भवत्यत आह । ततः यः सर्वथाप्याख्यानेऽपि न विषतां याति स ईशः परं ब्रह्मेत्यर्थः ॥ २० ॥

कालत्रये ऽपि य इहाभ्युदितो न वाचा
येनाभ्युदेति निखिलाऽपि च वाक् स आत्मा ॥
यं चेतसा न मनुते मतमाहुरत्र
येनेदृशं मतमुदीर्यत एष आत्मा ॥ २१ ॥

"यद्वाचानभ्युदितं येन वागभ्युद्यते तदेव ब्रह्मत्वं विद्धि" इति श्रुत्यर्थनिर्देशेनोपदिशति । कालत्रयेऽपीति । य आत्मा कालत्रयेऽपि वाचा वर्णाभिव्यञ्जकया करणभूतया वर्णाभिव्यंग्यशब्दरूपयाऽभ्युदितः प्रकाशितो न भवति । निखिलाऽपि वाग् येन ब्रह्मणा ऽभ्युदेति अर्थं प्रकाशते, वाचोऽहमित्युक्तत्वात् । वदन् वागिति चोक्तम् । "यन्मनसा न मनुते येनाहुर्मनो मतम्" इतिश्रुत्यर्थं दर्शयति । यमात्मानं चेतसा मनसा" ह्रीर्धीर्भीरित्येतत्सर्वं मन एव " इतिश्रुतेरंतकरणभूतेनामतमप्रशितं न मनुते संकल्पयति न निश्चिनोति । मनसोऽवभासकं ज्योतिर्लोकः येन ज्योतिषा ईदृशं सर्वं जगत् मत भावितमुदीर्यत एष आत्मा ॥ २१ ॥

यं चक्षुषा न परिपश्यति पश्यतीह
चक्षंषि येन स भवेच्छ्रुतिसिद्ध आत्मा ॥

श्रोत्रेण यन्नहि शृणोति शृणोति येन
श्रोत्रं सएव सुखबोधमयः किलात्मा ॥२२॥

'य चक्षुषा न पश्यति येन चक्षूंपि पश्यति' इत्यस्या अर्थेनोपदिशति। यं चक्षुषेति । लोको यमात्मानं चक्षुषा न परिपश्यति विषयीकरोति। पश्यतीह चक्षूंपि लोक अंतःकरणवृत्तिभेदसंभिन्नाश्चक्षुर्वृत्तिः प्रकाशयति चैतन्यात्मज्योतिर्विषयीकरोति स श्रुतिसिद्धःश्रुतिप्रतिपाद्यः आत्मा। यच्छ्रोत्रेण न शृणोतीत्यर्थमाह । श्रोत्रेण यद्वस्तु लोको न शृणोति शब्दवत् न विषयीकरोति । येन ब्रह्मणा प्रकाशरूपेण श्रोत्रं शृणोति शब्दं प्रकाशयति स एव सुखबोधमय. आनंदविद्घनपरमात्मा विद्यते श्रुतिसिद्ध आत्मा इत्यनुषंगः ॥ २२ ॥

प्राणेन यः कचन नानिति संप्रणीय-
ते प्राण एष खलु येन स एव चात्मा ॥
कामेन के ऽपि यदिदं समुपासतेज्ञाः
नात्माऽयमित्यचधृतिः श्रुतिशेषसिद्धाः ॥ २३ ॥

येन प्राणः प्रणीयते इत्यस्या अर्थेनोपदिशति । प्राणेनेति । यः परमात्मा प्राणेन नानिति न प्राणिति न चेष्टते "को ह्येवान्यात्क" प्राण्यादेष आकाश आनंदो न स्यादिति न प्राणेन नापानेन मर्त्यो जीवति कश्च" न" इत्यादिश्रुते" । एष प्राणो वायु" येनात्मना संप्रणीयते चेष्टयते स एव चात्मा । चशब्द अपानादिसमुच्चयार्थः । नेद यदिदमुपासते इतिश्रुतिभागेनोपदिशति । कामेनेति । केऽप्यज्ञा शास्त्रतात्पर्यानभिज्ञाः कामेन फलेच्छया यदिदं मत्यक्षविषयीभूतं जडवस्तु उपासते । नायमात्मादृश्यत्वात् घटवदिति अवधृति श्रुतिशेषसिद्धा एव निश्चयः श्रुतिप्रतिपाद्य इत्यर्थ" ॥ २३ ॥

यस्यामतो भवति तस्य मतोऽयमात्मा
जानंति ये न विदितोऽस्ति परः स तेषाम् ॥

जानंति ये न विदितः परमेष तेषाम्
सर्वाद्भुतैकनिधिरत्र न संशयो ऽस्ति ॥२४॥

शिष्याचार्यसंवादनिर्वृतमर्थमेव बोधयति श्रुतिर्या यस्यामतमित्यादिस्तदर्थनिरूपणेन उपदिशति । यस्यामत इति । यस्य ब्रह्मविदः अमतः अविज्ञातः घटादिवदज्ञातः तस्य पुरुषस्यायमात्मा मतः । मत्यक्षं ये जानंति इदंतया घटवद्विषयतया निश्चिन्वंति सः श्रुतिसिद्धः पर इंद्रियाद्यगोचरः तेषामिंद्रियमनोबुद्धिष्वेवात्मदर्शिनां न विदितः न साक्षात्कृतः "अविज्ञातं विजानताम्" इति श्रुतेः । "विज्ञातमविजानताम्" इतिश्रुत्यर्थमाह । जानंति इति । ये न जानंति विषयतया घटवत् न निश्चिन्वंति परं किंतु तेषां महात्मनां एष आत्मा विदितः साक्षात्कृतः । नन्वेवं सति विरोधोऽत्र आह । सर्वाद्भुतैकनिधिः सर्वाश्चर्यस्थानम् । तथा च स्मृतिः—'आश्चर्यवत्पश्यति कश्चिदेनम्,' इति । अविषयत्वेनैवात्मसाक्षात्कार इतिश्रुतेस्तात्पर्यात् । इति श्रुतिस्मृत्यनुभवसिद्धार्थे संशयो न कर्तव्यः शिष्टैरित्याह । अत्र न संशयोऽस्ति ॥ २४ ॥

शृण्वत्र तन्वि बहुना किमिहोदितेन
ज्ञानं प्रतीतिरथ धीर्धिषणा मनीषा ॥
चित्प्रत्ययोऽनुभव ईक्षणमासिरात्मा
प्रज्ञानमित्यभिधिया प्रतिपाद्य एव ॥ २५ ॥

नन्वेवमपि निर्विशेषस्य ज्ञानं दुर्घटं 'अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते' इतिस्मृतेरित्याशंक्यैहिकामुष्मिकविषयभोगतृष्णापिशाच्याविष्टानां दृढतरादृमाध्यासवशादुर्लभत्वेऽपि स्ववांतवत्परित्यक्तब्रह्मलोकसुखानां विरक्तानां वैराग्यबलाद् एव शिथिलीकृतदेहाध्यासानां परमहंसानां बाह्याभ्यंतरविषयवितृष्णानां तद्रूपब्रह्मापन्नानां वृत्तीनां सत्वान्न तथेत्याशयेन ता वृत्तीर्निरूपयितुमाह । शृण्वत्रेति । हे तन्वि, तनुमनस्त्वं मया हरिवर्णयितुं योग्येति संबुध्याशयः । इह मतविचारप्रसरे बहुनाऽधिकेनोदितेन किम् । परमसिद्धांतं शृणु आकर्णय । ज्ञानं

संज्ञानं श्रुतौ समोऽपि सत्वात्संज्ञानं संज्ञप्तिश्चेतनभावः, प्रतीतिरिंद्रियद्वारा सर्वविषयोपलब्धिः श्रुतौ दृष्टिशब्देनोक्ता, धीर्मतिर्मननं, धिषणा विज्ञानं कलादिपरिज्ञानं, मनीषा मनसो विषयेभ्यो व्यावर्तनं व्याख्यातं, संचित् आज्ञानमीश्वरभावः, प्रत्ययः स्मृतिः, अनुभवः प्रमाणं, ईक्षणं स्रष्टव्याकारा मायावृत्तिः, आप्तिः प्राप्तिः, आत्मा व्यापकविषयग्रहणं विषयभासकः सर्वसंततः, प्रज्ञानं प्रकृष्टाज्ञप्तिः । इदं च ब्रह्मणो विशेषणम् । अविषयत्वार्थं स्वप्रकाशचैतन्यं तदर्था तस्य विषयत्वे स्वप्रकाशत्वव्याघातात् । ब्रह्म अविषयः स्वप्रकाशत्वाद्यन्नैवं तन्नैवं यथा वृत्त्यादिर्ब्रह्म निर्विषयमनंतत्वात् सविषयत्वे स्वप्रकाशत्वव्याहतिः सविशयत्वे परिछिन्नत्वेनाब्रह्मत्वापत्तिरिति । एवमविषयस्य साक्षादिदंतया ज्ञानासंभवेऽपि संज्ञानाद्यंतःकरणवृत्तिसाक्षितया अविषयत्वेनैवस्योपलब्धेः संभवात् इत्याशयेनाह । अभिधया प्रतिपाद्य एवेति ॥ २५ ॥

> विज्ञानरूप इह यः प्रतिपत्तिमेति
> नांधो न पंगुरथ नो बधिरो न मूकः ॥
> न ब्राह्मणो न भुजभूर्न तथोरुजातः
> शूद्रोऽपि किं बहुगिरा श्वपचोऽपि नैव॥२६॥

एवं चिन्मात्र एवात्मा इति यः प्रतिपद्यते स एवात्मानं प्राप्नोतीत्याह । विज्ञानरूप इति । विज्ञानरूप एव यः प्रतिपत्तिमेति साक्षात्कारं प्राप्नोतीत्यर्थः । चक्षुरादिविकृतधर्मनिषेधेनापि ज्ञातुं शक्य इत्याह । नांध इति । नांधः विकृतचक्षुर्निष्ठधर्मरहितः । न बधिरः विकृतश्रोत्रनिष्ठबधिरत्वधर्मरहितः । न मूकः विकृतवाक् तद्धर्मरहितः । न पंगुः विकृतपादवान् खंजो न अन्येषां ज्ञानेंद्रियाणां कर्मेंद्रियाणां चोपलक्षणमिदम् । स्थूलदेहतद्धर्मनिषेधार्थमाह । न ब्राह्मणः प्रथमवर्गः । नापमात्मा न भुजभूः क्षत्रियोऽपि । न तथोरुजो वैश्योऽपि । न चतुर्थवर्णोऽपि । न मनुष्यमाननिषेधार्थमाह । किं बहुगिरा अधिककथनेन । श्वपचोऽपि न चांडालोऽपि नेव । उक्तं चाचार्यैः— 'नाहं मनुष्यो न च देवयक्षौ न

ब्राह्मणक्षत्रियवैश्यशूद्राः ॥ न ब्रह्मचारी न गृही वनस्थो भिक्षुर्न चाहं निजबोधरूपः" इति ॥ २६ ॥

विज्ञानमेतदखिलं परमद्वितीयं
निःसंगमाकृतिविहीनमसद्वितीयम् ॥
सद्रूपमंशरहितं परिणामहीन-
मानंदरूपमपरमतिभाव्यतत्त्वम् ॥ २७ ॥

न्वेवं सत्यपि कीदृक् तज्ज्ञेयमित्यत आह । विज्ञानमिति । एतदखिलं जगत् विज्ञानं चिन्मात्रं परं मायातत्कार्यसंबंधशून्यं अतएवाद्वितीयं सजातीयं विजातीयभेदरहितमतएवासंगं संबंधमात्ररहितम् । न चैवं कथं लक्षणायास्तत्र प्रवृत्तिरिति वाच्यम्, मायाकल्पितसंबंधेन प्रवृत्तेः स्वीकृतत्वात् । आकृतिहीनं सर्वे भावाः परिणामिन ऋते चितिशक्तेरिति मायातत्कार्यद्वैतरहितं "सत्यं ज्ञानमनंतं ब्रह्म, एकमेवाद्वितीयम्" इत्यादिश्रुतेः आनंदरूपमपरः मतिभाव्यतत्त्वं न मतिभाव्यं तत्त्वं परमार्थरूपं यस्य तत्तथा निराकारमसद्वितीयं, विजातीयद्वितीयवर्जितम् । शून्यमेव नेत्याह । सद्रूपमंशरहितं स्वगतभेदरहितं निष्कलमिति श्रुतेः ॥ २७ ॥

न स्थूलभावमुपयाति न चाणुभावं
नो ह्रस्वदीर्घतनुभृत्तदलोहितं च ॥
अस्नेहमुज्झिततमस्कमवायुरूपं
नो पावकं च तदनावरकं विसंगम् ॥ २८ ॥

अतएव परिणामहीनं बृहदारण्यके— "कस्मिन्नु खल्वाकाशः" इत्यादीनां व्याकृतादिगार्ग्या पृष्टं याज्ञवल्क्य उवाच । 'एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदंत्यस्थूलम्' इतिश्रुतिरशेषनिषेधावधित्वेन तदक्षराभिन्नत्वेन माक्षरास्तित्वं प्रतिपादयति तस्या अर्थं श्लोकद्वयेन निरूपयन्नाह । न स्थूलेति । तदक्षरं न स्थूलभावमुपयाति स्थूलाद्भिन्नम् । तर्ह्यस्त्वणु इत्यत आह । न चाण्विति । न चाणुभावमुपयाति । ह्रस्वदीर्घशरीरं

भवत्वत आह । नो ह्रस्वदीर्घतनुभृत् इति । द्रव्यत्वप्रयोजकपरिमाण-निषेधेन द्रव्यत्वं निषिद्धम् । रक्तरूपं भवत्वत आह । तदलोहितं लौहित्यमग्निरूपं तद्भिन्नम् । अव्रणो भवत्वत आह । अस्नेहमिति । मूर्तद्रव्यत्वं निषिद्धम् । तमोरूपं भवत्वत आह । उज्झितं तमो ध्वांतं येन, तत् । वायुस्वरूपमस्त्वत आह । अवायुरूपमिति । वायुरूपं नभो भवत्वत आह । तदनावरकं आवृणोति स्वकार्यमिति आवरकमाकाशं तद्भिन्नमनाकाशम् । वह्निर्भवत्वत आह । नो पावकं पूर्वं धर्मनिषेधोऽत्र धर्मिनिषेध इत्यपौनरुक्त्यम् । संगि भवत्वत आह । विसंगमिति । एवमुत्तरश्लोकेऽपि निषेधाशंकापूर्वकं तन्निषेधकपदानामुत्थानं बोद्धव्यमिति ॥ २८ ॥

संत्यक्तसर्वरसगंधमनेत्रमेत-
दश्रोत्रवाग्हृदयदीप्तिकमास्यहीनम् ॥
अप्राणमात्रकमनंतरमप्यबाह्यं
नाश्नाति किंचन कश्चन चैतदत्ति ॥ २९ ॥

संत्यक्तसर्वरसगंधं संत्यक्तः सर्वरसो गंधश्च येन तत्तथा । रूपादिनिषेधोपलक्षणमिदम् । एतदनेत्रमचक्षुः, तद्भिन्नं न विद्यते चक्षुर्यस्येति वा । अश्रोत्रवाग्हृदयदीप्तिकं श्रोत्रं च वाक्च हृदयं च दीप्तिश्च तत् न विद्यते यस्य तत्तथा श्रोत्रभिन्नं वाग्भिन्नं मनोभिन्नं वृत्तिलक्षणतेजोविहीनम् । आस्यहीनं मुखरहितम् । अप्राणमात्रकं प्राणश्च मात्रं च तत् न विद्यते यस्य तदप्राणमात्रकं अध्यात्मभिन्नम् । मीयतेऽनेन मात्रं मानं मेयान्वयरूपं न । अनंतरं अंतरं छिद्रं न विद्यते यस्य । अबाह्यं न विद्यते बाह्यं यस्येत्यबाह्यं पूर्णम् । अनंतानां व्यक्त्याऽनंत्येन प्रत्येकं निषेधे गौरवमालोच्य भोक्तृभोग्यरूपेणैकीकृत्य निषेधयति । नाश्नातीति । तदक्षरं किंचन किंविदपि विषयं नाश्नाति न भुंक्ते । उपाधिसंबंधेनैव आत्मेंद्रियमनोयुक्तं भोक्तेत्याहुरित्यनयाऽभिधानात्स्वतो भोक्तृत्वाभावेऽपि भोग्यत्वमेवास्त्वत आह । न चैतदत्तीति । तदक्षरं कश्चन नाचि न भुंक्ते इतिभोग्यत्वनिषेधः ॥ २९ ॥

पुंस्त्रीनपुंसकविभागविहीनमेत-
द्वर्णाश्रमोज्झितमजातिविशेषरूपम् ॥
सर्वोदयास्तमयहीनमहःस्वरूपं
स्तुत्यं न निंद्यमपि नो गुणदोषहीनम् ॥ ३० ॥

अय पुरुषः स्त्रीयं नपुंसकमिदमिति प्रतीतेर्लिङ्गविशिष्टत्वं प्रतीयते इ-त्याशङ्क्य लिङ्गस्य शब्दधर्मत्वात् शब्दमात्रावाच्ये ब्रह्मणि कथं पुमा-देशब्दप्रवृत्तिरित्याशयेनाह । पुंस्त्रीनपुंसकविभागहीनमिति । पुमांश्च विष्णुः शिवश्च स्त्री च देवी नपुंसकं च ब्रह्म तानि पुंस्त्रीनपुंसकानि तेषां विभागस्तेन विहीनं एतदक्षरं वर्णाश्रमोज्झितं वर्णाश्च ब्राह्मणादयः आश्रमा ब्रह्मचर्यादयो देहधर्मास्तैरुज्झितं त्यक्तं, अजातिविशेषरूपं जातिश्चानेकसमवेतत्वरूपा निर्विशेषे नास्ति । द्रव्यत्वाभावादेव वि-शेषरूपमपिनेत्यर्थः । अतएवाविनाशीति श्रुतेः । उदयास्तमयहीनं महः-स्वरूपं प्रकाशरूपं स्तुतिः श्रूयते परस्येति चेन्माययैव तस्या संभवः निर्गुणमिति श्रुतेः । न वस्तुतोऽस्येत्याह । स्तुत्यं न निंद्यमपि । कुतो नात आह । गुणदोषहीनमिति । सर्वोत्कर्षः स्तुतिः तमउत्कर्षे निंदा तयोरभावेन ते इत्यर्थः ॥ ३० ॥

जीवत्वमेति न न चैति परेश्वरत्वं
सर्वोपधानपरिवर्जितशुद्धरूपम् ॥
नांतो ऽस्य वस्तुत उदंचति नापि काला-
द्देशात्तथा न परं प्रथितश्चिदात्मा ॥ ३१ ॥

ननु जीवभावे ईश्वरभावे सति च कथं ते निषेद्धुं शक्ये इत्याशंक्य तयोरपि मायिकत्वमेवेत्याह । जीवत्वमेतीति । सर्वोपधानपरिवर्जितशु-द्धरूपमिति । मायाविद्यारूपसर्वोपाधिरहितं शुद्धं ब्रह्म न जीवत्वमेति, तदुपाधेरविद्याया अभावात् । न चैति परमेश्वरत्वम्, तदुपाधेर्मायाभावात् । तथानोक्तं वृद्धैः–' कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः कार्यकारणतां हित्वा पूर्णबोधोऽवशिष्यते' इति । शुद्धतामेवाह । नांत

इति। अस्य ब्रह्मणो-वस्तुतोऽतः परिछेदः न उदंचति न विद्यते, द्वितीयस्याभावात्। नापि कालात्परिछेदः नित्यत्वात्। देशात्तथा न देशतः परिछेदः पूर्णत्वात्। स ईदृशोऽपि परं किंतु मयितथ्रिराम श्रुतिविद्वदनुभवसिद्ध इत्यर्थः॥ ३१॥

अमलकमलनेत्रे तत्र या जीवता वा
परमपुरुषता वा स ह्युपाधेर्विलासः॥
वदसि क इव तस्मिन्स्यादुपाधिर्विसंगे
मदविसरदनंगे तत्समाकर्णयास्मत्॥ ३२॥

ननु यदि जीवभाव ईश्वरभावश्च नास्ति तदाधिकार्यभावात्फलदातृश्चाभवात् सर्वस्य कर्मकांडादेः शास्त्रस्याप्रामाण्यापत्तिरित्याशंक्य सर्वशास्त्रस्य साक्षात्परंपरया परमपुरुषार्थे तात्पर्यात् तत्प्राप्तौ तस्यासत्वापपत्तिरिष्टैव "यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्" इतिश्रुते, सर्वस्यात्ममात्रत्वात् जीवन्मुक्तात्पूर्वं परमहंसोपनिषद्दर्शितस्वरूपात्वेविधिनिषेधशास्त्रस्य निवृत्तिव्यवहारकाले तु जीवस्येश्वरस्य च तत्प्रतिपादकशास्त्रस्याविद्यावदधिकारिकत्वात्प्रामाण्योपपत्तिरित्याशयवानाचार्यो वनितात्वेन कल्पितां चित्तवृत्ति संबोध्याविद्यां निरूपयितुं प्रतिजानीते। अमलकमलनेत्रेति। अमलकमलवन्नेत्रे यस्याः सा तथा तत्संबुद्धौ हे अमलकमलनेत्रे। तत्र तस्मिन् विद्घने या जीवता परमपुरुषता ईश्वरता। हि प्रसिद्धिद्योतकः। सः सा जीवता ईश्वरता स इति विधेयलिंगत्वात्। उपाधेर्मायाविलासः 'मायामात्रमिदं द्वैतमद्वैतं परमार्थतः' इति वचनात्। ननु निरुपाधौ निर्गुणेऽसंगे कथमुपाधिरित्याशंकामनुवदति। वदसीति। हे मदविसरदनंगे मदेन विसरन्वर्तमान अनंगो मदनः कामो यस्याः सा तया तत्संबुद्धौ। वृत्तिरपि विषयासक्तया सकामा भवति। तथाच स्मृतिः-'संगात्संजायते कामः कामात्क्रोधोऽभिजायते॥ क्रोधाद्भवति संमोहः संमोहात्स्मृतिविभ्रमः॥ स्मृतिभ्रंशाद्बुद्धिनाशो बुद्धिनाशात्प्रणश्यति' इति। हं वदसि

तस्मिन्निसगे सर्वसबधशून्ये क इव-उपाधिः । इव क आक्षेपार्थे । निर्गुणे निरुपाधौ तत्संबंधे-तत्त्वव्याघात.. उपादधाति-स्वसमीपस्थं स्वसमानं करोतीत्युपाधि । तत्समाकर्णयास्मत् असगे ब्रह्मणि जीवत्वस्येश्वरत्वस्य च यथा वारानां प्रतीतिस्तत् अस्मत्सकाशात् शृणु ॥ ३२ ॥

इह भवति स कश्चित्सर्वसंसारबीजं
सुतनु परमुपाधिर्यावदीहा ऽस्त्यविद्या ॥
इयमपि न सती वा नासती वोभयात्मा
नहि जगुरिति विज्ञास्तामनिर्वाच्यरूपाम् ॥ ३३ ॥

असगमपि सगिनमिव या करोति तस्या स्वरूप निरूपयति नवभि । इह भवतीति । हे सुतनु ईहा ईहते चेष्टते ईहा, अविद्या न विद्यते विचार्यमाणा सा अविद्या । अतएवोक्तम्–' ईदृशी राम मायेयं या स्वनाशेन हर्षदा ॥ न लक्ष्यते स्वभावोऽस्या. प्रेक्ष्यमाणैव नश्यति' इति । वासनात्वेनापि वासिष्ठे निरूपिता–' मम पुत्रा मम धनमयं सोऽह इदं मम ॥ इतीयमिंद्रजालेन वासनैव विवल्गति इति । यावदिय विवल्गति जाग्रदादिरूपेण चेष्टावती अनित्यादौ नित्यत्वादिमतिकर्त्री पूर्ववर्णितरूपा कापाविद्यादिशब्दव्यवहृता अतिविद्यते तावत् इह व्यवहारकाले स कश्चित्तत्व सर्वससारबीजं सर्वस्य संसारस्य ईश्वरो हिरण्यगर्भो विराट् इत्यादिरूपस्य बीज मूलकारण पर किंतु उपाधिर्भवति तथाच जीवेशावाभासेन करोति माया चाविद्या च स्वयमेव भवति इति श्रुते । नन्वियमपि सद्रूपा असद्रूपा उभयरूपा वा नाद्य अनिर्मोक्षापत्ते , न द्वितीय भानत्वानुपपत्ते , ज्ञाननिवृत्त्यत्वानुपपत्तेर्जगत्कारणत्वानुपपत्तेश्च, न तृतीय विरोधात्, 'नासतो विद्यते भावो नाभावो विद्यते सत ' इति वचनात् सदसतोर्विरोधादुभयरूपत्वानुपपत्तिरित्याशयेनाह । इयमपीति । साक्षिवेद्या विज्ञा पडिता इति जगुर्वदति इति किमत उत्तरमाह । अनिर्वाच्यरूपा मिथ्याभूता न वस्तुसत्ता जगदुरित्यर्थ ॥ ३३ ॥

वरतनु चिदविद्यायोगमस्यैवमाहुः
क्षयमपि पुनरस्या यक्षनैवेद्यतुल्यम् ॥
सकलभुवनमालापादपस्याहुरेनां
श्रुतिचयविदूढाः पंडिता बीजभूताम् ॥ ३४ ॥

ननु इयं असंबद्धा संसारहेतुः संबद्धा वा नाद्यः असंभवात् न द्वितीयः स्वस्याहेतुत्वे आत्माश्रयापत्तेः स्वभिन्नायाः 'स्वीकारेऽनवस्थापत्तेरित्याशंक्य ' यादृशी शीतला देवी तादृश एव वाहनः ' इतिन्यायेन यादृशी माया तादृश एव संबंध इत्याह । वरतन्विति । हे वरतनु वरा श्रेष्ठाऽऽत्मविचारासंमुखा तनुः मूर्तिर्यस्याः सा तथा । चिदविद्यायोगमप्येवमाहुः चिता चैतन्येनाविद्या संबंधमेवमनिर्वचनीयमेवाहुः । अत्र विस्तरस्तु पूर्वमेवोक्तः । नन्वविद्या यादृशी तादृशी भवत्वस्या निवृत्तिः सत्या असत्या वा नाद्यः द्वैतोपपत्तेर्नान्त्यः संसारोन्मज्जनापत्तेरित्यत आह । क्षयमपि पुनरस्या यक्षनैवेद्यतुल्यं ' यादृशी अविद्या तादृशी तन्निवृत्तिर्यादृशो यक्षस्तादृशो बलिः' इति न्यायात् । अत्र ब्रह्मसिद्धिकाराः अधिष्ठानादेशो हि नाशः कल्पितवस्तुन इतिवचनादात्मरूपैवाविद्यानिवृत्तिः, नचैवं ज्ञानसाध्यत्वानुपपत्तिः यस्मिन्सत्युत्तरक्षणे यस्य सत्त्वं यद्व्यतिरेके यदभावस्तत्तत्साध्यमिति लक्षणानुरोधेन ज्ञाने सत्युत्तरक्षणे आत्मरूपाविद्यानिवृत्तिसत्वं तद्व्यतिरेके तत्प्रतियोग्यविद्यारूपस्तद्भाव इत्याहुः, आत्मन्यविद्यानिवृत्तिर्न सती ज्ञानसाध्यत्वानुपपत्तेर्नापि असती तत्त्वानुपपत्तेरेव न सदसद्रूपाविरोधात् नाप्यनिर्वाच्या तस्यासादित्वेनाज्ञानोपादानत्वनियमेन मुक्तावपि तदुपादानाज्ञानानुवृत्त्यापत्तेः ज्ञाननिवर्त्यत्वापत्तेश्च किंतु मोक्षशास्त्रप्रामाण्याय अप्रसिद्धपंचमप्रकारा इत्यानंदबोधाचार्या वदंति, अद्वैतविद्याचार्यास्तु ... घटादिध्वंसस्य क्षणिकभावविकाररूपत्ववदविद्यानिवृत्तिरपि ब्रह्मसाक्षात्कारोदयानंतरं क्षणवर्ती कश्चिद्भावविकारः तस्याप्युक्तावनुवृत्त्यभावान्न तदनिर्वाच्यत्वे कश्चिद्दोष इत्याहुः, एतन्मतेनैव ग्रंथकारेणाप्य

निर्वाच्यत्वं स्वीकृतमित्यलम्। ननु 'प्रक्षालनाद्धि पंचकस्य दूरादस्पर्शनं वरम्' इतिन्यायेन किमर्थं स्वीकर्तव्या इत्याशंक्य जगत्प्रतीतिनियामकत्वात्स्वीकर्तव्येत्याह । सकलेति । वेदांतसंग्रहवित्प्रधानाः पंडिताः संसारवृक्षस्यैनामविद्यां बीजभूतां परिणाम्युपादानभूतां वदंति ॥ ३४॥

सृष्टेः काले व्याकृतं सर्वमासी-
न्न्यग्रोधो वा ऽणुप्रमाणे स्वबीजे ॥
दृष्टांतो ऽयं साध्यहीनो मतश्चे-
त्तत्र ब्रूमो युक्तिमाकर्णयैताम् ॥ ३५ ॥

चिन्मात्राश्रिताज्ञानोपादानकत्वे प्रपंचस्य श्रुतिं प्रमाणयन् तदनुकूलां युक्तिं च प्रकटयन्नाह त्रिभिः । सृष्टेरिति । इदं सर्वं जगत्सृष्टेः प्राक्काले अव्याकृतमासीत् कार्यत्वात् वटवदित्यनुमानप्रयोगमाह । अव्याकृतं सर्वमासीन्न्यग्रोधो वटो वा, वाशब्द इवार्थे, अणुप्रमाणे स्वबीजे यथा तिष्ठति । ननु हेतुरस्तु साध्यं माभूदित्यप्रयोजकोऽयं हेतुः दृष्टांते साध्यविकलत्वादित्याशंकते । दृष्टांतोऽयं साध्यहीनो मतश्चेत् महान् वटः स्वबीजे ऽणुप्रमाणे नास्तीति साध्यहीनो दृष्टांत इत्युच्यते त्वया । तत्र वटो बीजे इत्यत्रैतां युक्तिमाकर्णय शृणु वयं ब्रूम इति ॥ ३५ ॥

न्यग्रोधश्चेत्तन्वि बीजे ऽत्र न स्या-
दत्यंतासन्नेव जायेत तस्मात् ॥
अत्यंतासन्नप्यमुष्माद्भवेचे-
त्किंतद्बीजात्स्यान्न चूतांकुरोऽपि ॥ ३६ ॥

विपक्षबाधकतर्करूपां युक्तिमेवाह । न्यग्रोधश्चेदिति । हे तन्वि अत्र बीजे न्यग्रोधश्चेद्यदि न स्यात् । वटबीजे वटोऽत्यंतासन्वंध्यापुत्र इव तस्माद्बीजान्नैव जायेत नोत्पद्येत । नन्वसन्नपि जायतामत आह । अत्यंतासन्नप्यमुष्माद्बीजाच्चेत्किं तद्बीजाच्चातः चूतांकुरः आम्रांकुरः किं न स्यात् । अत्यंतासतोऽपि वेद्भवेत्तदा वटबीजादाम्रांकुरोत्पत्त्यापत्तिः स्यादित्यर्थः ॥ ३६ ॥

तस्मात्कार्यं कारणाज्जायते स-
दित्येवैषा प्रक्रिया युक्तियुक्ता ॥
तस्माच्चिन्मात्राश्रिता ऽव्याकृताख्या
पूर्वप्रोक्ता स्यादविद्यैव तन्वि ॥ ३७ ॥

तर्हि प्रकृते किमायातमित्यतो निगमयति । तस्मादिति । तस्मात् पूर्वोक्ताद्धेतोः कारणादेव कार्यं जायते एषा प्रक्रिया युक्तियुक्ता श्रुत्यनुकूलयुक्तिसहिता ' सदेव सोम्येदमग्र आसीत् " इतिश्रुतेः । हे तन्वि तस्मात्केवलस्य शुद्धस्य ब्रह्मणः कारणत्वाभावात्केवलस्याऽव्याकृतस्यैव तत्त्वाभावाच्चिन्मात्राश्रिता चिन्मात्राधिष्ठिता ऽव्याकृताख्या ऽविद्यैव पूर्वप्रोक्ता प्रतिपादितस्वरूपा स्यात् । प्रपंचप्रतिपत्तौ निदानमिति भावः ॥ ३७॥

एतन्मात्रोपाधिकत्वेन जात-
श्चिन्मात्रात्मा ब्रह्मशब्दाभिधेयः ॥
ईशानं यं वशिनं प्राहुरार्याः
सर्वाधीशं सर्वभूताधिवासम् ॥ ३८ ॥

ईश्वरभावादिप्रयोजकत्वमपि मायायेत्याह । एतन्मात्रेति । चिन्मात्रात्मा चिन्मात्रमात्मस्वरूपं यस्य स तथा एतन्मात्रोपाधिकत्वेन मायामात्रोपाधिकत्वेन ब्रह्मशब्दाभिधेयः ब्रह्मशब्दवाच्यः ईश्वरः । आर्या ऋषयः यमीशानं वशिनं सर्वेशानत्वादेव सर्वस्य ब्रह्मेंद्रादेर्नियामकं स र्वाधीशं सर्वस्याधिष्ठातारं सर्वभूताधिवासं भूतमात्रे स्थावरजंगमात्मके अधिवसत्यधिष्ठानत्वेन तिष्ठतीति तथा तम् । तथाच श्रुतिः– "सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः" इति । एतस्मात्पूर्ववाक्ये "स वा एष महानज आत्मा प्राणेषु य एषोऽन्तर्हृदये नाकाशस्तस्मिंच्छेते" अत्रात्मत्वेन ज्योतिर्ब्राह्मणोक्तो जीवोऽभिमत ' इति द्योतयितुं विशेषणद्वयम् । योऽयं विज्ञानमयः प्राणेषु इति । उभयोरैक्यलक्षणो वाक्यार्थ सामानाधिकरण्येनाभिमत इति द्योतयितुमाह । य इति । य एषोऽन्तर्हृदये आकाशः परमात्माख्यो बुद्ध्याख्यो वा, तस्मिन्क्रमेण विज्ञा-

नमयः संप्रसादकाले शेते एकीभूतो वर्तते बुद्ध्यादि साक्षिरूपेण वर्तते ॥ ३८ ॥

भूतानां यं पालकं सेतुमेत-
द्धृत्यै लोकानामसंभेदहेतुम् ॥
सर्वाभिज्ञं सर्वशक्तिप्रतिष्ठं
सर्वोपास्यं सर्वलोकेशपालम् ॥ ३९ ॥

एतद्विज्ञानफलमाह । भूतानामिति । 'एतत्पूर्वं सन्साधुना कनीयान्' इति, स विद्वान् साधुना शास्त्रविहितेन कर्मणा पूर्वावस्थातो भूयान् न वर्धते नो एवासाधुना शास्त्रनिषिद्धेन कर्मणा नो एव कनीयान् अल्पो न भवति, यतो भूतानां पालकं जनिमत्कार्याणि यानि भूतानि तेषां स्वचैतन्यदानेन पालकम् । एतद्धृत्यै एतस्या वर्णाश्रमादिव्यवस्थाया धृतिर्धारणा तस्यै । लोकानां भूरादिब्रह्मलोकानामसंभेदस्यासंकरस्य एकवर्णनिवर्तनस्य हेतुम् । एतत्कथमत आह । सर्वाभिज्ञं सर्वानभितो जानातीति सर्वाभिज्ञस्तम् । ज्ञानमात्रेण कथमत आह । सर्वशक्तिप्रतिष्ठितम् । नन्वनादिवासनावासितस्य कथं रक्षणमत आह । सर्वोपास्यं वह्निरिव स्वसन्निहितम्, शीतार्तं जाड्यनिवृत्त्या रक्षति स-र्वोपासितः सर्वथा रक्षक इति । ननु ब्रह्मादि रक्षिष्यत्यत आह । सर्वलोकेशपालम् । विद्वांसः प्राहुरित्यनुषंगः । तथाच श्रुतिः–" एष भूतपाल एष सेतुर्विधारण एषां लोकानामसंभेदाय "इति ॥ ३९ ॥

बुद्धिप्रधानत्वमुपेत्य तस्मिन्-
हिरण्यगर्भव्यपदेश इष्टः ॥
मनः प्रधानत्वमपेक्ष्य चात्र
भवेच्च सूत्रव्यपदेशभाक्त्वम् ॥ ४० ॥

ननु हिरण्यगर्भप्रतिपादकानां मंत्राणां का गतिरित्याशंक्य तत्तदुपाधीनां देव एव व्यपदेशभाक् भवतीत्याह । बुद्धीति । तस्मिन् ब्रह्मणि बुद्धिप्रधानत्वमुपेत्य स्वीकृत्य हिरण्यगर्भो व्यपदिष्टः । हिर-

ण्यगर्भपदवाच्यत्वं भवतीत्यर्थः । च पुनरत्र ब्रह्मणि मनःप्रधानत्वमपेक्ष्य सूत्रव्यपदेशभाक्त्वं सूत्रनामत्वम् ॥ ४० ॥

हिरण्यगर्भः समवर्तताग्रे
भूतस्य जातः पतिरेक आसीत् ॥
स दाधार पृथिवीं द्यामुतेमां
कस्मै देवाय हविषा विधेम ॥ ४१ ॥

मत्रगतिस्तु नोक्ता अत आह । हिरण्यगर्भः अग्रे पूर्वं समवर्तत अजायत । जातः सन्नीश्वराज्ञया पतिर्बभूव । भूतस्य भूतग्रामस्य । स ईश्वरः हिरण्यगर्भभावं प्राप्त इमां पृथ्वीं तदधः सप्त लोकांतां द्यां स्वर्गतदुपरिलोकांश्च दाधार दधार । दीर्घश्छांदसः । कस्मै देवाय हिरण्यगर्भाय । हविषा स्वेष्टघृतादिद्रव्येण । विधेम परिचरेम इदमुपलक्षणं विष्णुशिवशक्तिगणेशादीनाम् ॥ ४१ ॥

इतिश्रुत्यैव तद्रूपं चित्तवृत्ते स्फुटीकृतम् ॥
स एव परमात्मेति कथ्यते व्यवहारिभिः ॥ ४२ ॥

उपाधिकृततत्तद्रूपत्ववर्णनमुपसंहरति । इतिश्रुत्यैवेति । हे चित्तवृत्ते इतिश्रुत्यैव तद्रूपं तस्य परमात्मनो रूपं स्फुटीकृतं प्रकटीकृतम् । स सर्वश्रुतिप्रसिद्धः, "एष यत्साक्षादपरोक्षात्" इतिश्रुतेः । साक्षादपरोक्ष आत्मा व्यवहारिभिः व्यवहारं स्वीकुर्वद्भिः परमात्मा वाचामगोचरोऽपि स्वतः मोक्षादिव्यवहारार्थं कथ्यते अद्वैते कथंचिद्भेदा स्यादित्येतदर्थं श्रुतिभिस्तद्व्यपदेशैः प्रतिपाद्यते ॥ ४२ ॥

यथोर्णनाभिः स्वकृतैः तंतुजालैः समुच्चरेत् ॥
यथाग्नेर्व्युच्चरंतीमेऽतिक्षुद्रा विस्फुलिंगकाः ॥ ४३ ॥

आत्मनोऽद्वितीयत्वं प्रकटयितुं श्रुत्युक्तदृष्टांतावाह द्वाभ्याम् । यथोर्णनाभिरिति । ऊर्णनाभिर्लूतारूपकीटविशेषः असहायः सन्स्वकृतैस्तंतुजालैरुच्चरेदुद्गच्छेत् । यथा वा अग्नेरेकरूपात् एकस्मात् क्षुद्राः विस्फुलिंगाः अग्न्यवयवाः व्युच्चरंति विविधं नानामुखेनोच्चरंति उद्गच्छंति ॥ ४३ ॥

व्युचरंत्येवमेवास्मात्सर्वे प्राणाः परात्मनः ॥
सर्वे लोकाः सर्वदेवा भूतान्येतान्यशेषतः ॥ ४४ ॥

एवमेवास्माद्विज्ञानमयस्य प्रबोधात्प्राक् स्वापे स्वरूपभूत आकाश इति य उक्तः एवमस्मादेवात्मनः सकाशात्सर्वे प्राणा वागादयः सर्वे लोका भूरादयः सर्वकर्मफलभूताः सर्वे देवाः प्राणलोकाधिष्ठातारः अग्न्यादय एतानि भूतानि ब्रह्मादिस्तंबपर्यंतानि प्राणिजातानि जलबुद्बुदादिवत् स्थितिं लयं च यस्मिन्गच्छंति । अशेषतः ततो ऽस्मादात्मनो न किंचिदवशिष्यते । श्रुत्यंतरम्– "मय्येव सकलं जातं मयि सर्वं प्रतिष्ठितम् ॥ मयि सर्वं लयं याति तद्ब्रह्माद्वयमस्म्यहम्" इति ॥ ४४ ॥

यत्किंचेदं जगत्सर्वं स्थावरांतं वरानने ॥
तत्र सर्वत्र कर्तृत्वं तस्यैवेत्यवधारय ॥ ४५ ॥

ननु विस्फुलिंगदृष्टांतेनोपादानत्वं भवत्वात्मन अन्यकर्तृत्वं भविष्यतीत्याशंक्य यथा लूतायां निमित्तमुपादानत्वं च तथाऽऽत्मन एव कर्तृत्वमपीत्याह । यत्किंचेति । हे वरानने यत्किंचेदमनविशिष्टं सर्वं स्थावरांतं जगत् तत्र तस्मिन् जगति सर्वत्र निरवशेषे तस्यैवाधिष्ठानभूतस्यात्मनः कर्तृत्वमुपादानत्वं चेत्यवधारय निश्चिनु । तथाच तस्योभयविधत्वे श्रुती–" स ऐक्षत इमान् लोकानु सृजै " इति " एकोऽहं बहु स्याम् " इति । एतेन प्रधानपरमाणवादेर्प्यवच्छेदः ॥ ४५ ॥

उदासीनादसंगाच चिन्मात्राद्भियते यथा ॥
परेशो यत्र वा विद्या तन्मया ते निरूपितम् ॥ ४६ ॥

अद्वितीये द्वितीयत्वं निर्गुणे गुणता यथा असंगे संगता उदासीने कर्तृता ईश्वरे यथा भेदोविद्यया तत्राविद्या यथा इति ते निरूपितमित्याह । उदासीनादिति । उदासीनात् जगदुत्पत्तिस्थितिलयेषु सत्स्वपि निःसंकल्पात्कूटस्थात् असंगात् सर्वसंबंधरहितात् चिन्मात्रात् यथा परेशो ब्रह्म भिद्यते चिन्मात्रं कूटस्थमसंगं स्वरूपं विहायैवाविद्यया भिद्यते

इव यत्र यस्मिन् चिन्मात्रे यथा तत्ते तुभ्यं मया निरूपितम् ॥ ४६ ॥

जगद्धिरण्यगर्भादिस्थावरांतं वरानने ॥
आविद्यकं विभात्येतदद्वितीये चिदात्मनि ॥ ४७ ॥

ननु निष्प्रपंचे प्रपंचः कथमित्याशंक्य प्रपंचसत्यत्वे उपालभ्येमहि तन्मिथ्यात्वेनोपालब्ध इत्याह । जगदिति । हे वरानने हिरण्यगर्भादि स्थावरांतमेतज्जगदद्वितीये चिदात्मनि पूर्णे आविद्यकं मायामात्रं प्रातीतिकं भाति, न वास्तवमिति ॥ ४७ ॥

रूपं समष्ट्यादि तथा नामसूत्रादि यत्किल ॥
बुद्धिसंकल्पकार्यत्वात्तदुपाधौ न विद्यते ॥ ४८ ॥

नन्वेवमपि मायिका एव धर्मा आत्मनि संत्वित्यत आह । रूपमिति समष्ट्यादि समष्टिः आदिर्यस्या व्यष्टेस्तत्समष्ट्यादि । रूपं रूपप्रपंचः तथ नामसूत्रादि यत्किल निश्चयेन यत्सूत्रमादिर्यस्य तत् । अथवा सूत्रस्या दिकारणमीश्वरः समष्टिमायोपाधिकः बुद्ध्युपाधिर्हिरण्यगर्भः मनउपाधि सूत्रं पंचीकृतभूतकार्योपाधिर्विराड्व्यष्टिकारणोधिः मनउपाधिस्तैजस स्थूलदेहोपाधिरिंद्रियाधीनज्ञानवान्विश्वः इत्यादिनामप्रपंचः । बुद्धिसंकल्पकार्यत्वात् बुद्धिश्च संकल्पश्च तौ तयोः कार्यं तस्य भावः तत्त्वं तस्मात् । बुद्धिशब्देन समष्टिबुद्धिस्तत्कारणं चोच्यते, नेश्वरहिरण्यगर्भादि नाम संपन्नम् । संकल्पशब्देन मनस्तत्कार्यं च स्थूलं तेन समष्टिसूत्रं व्यष्टिनामोच्यते । तदुपाधौ तौ बुद्धिसंकल्पौ उपाधी यस्य स तदुपाधिः आत्मा तस्मिन् शुद्धे ब्रह्मणि न विद्यते । पूर्वोक्त उपाधिस्तत्प्रयोज्यव्यवहारश्च नास्तीत्यर्थः । नहि रक्तस्फटिक इति व्यवहारे वस्तुतो रक्तो स्फटिके लगति तथा ऽत्रापीति भावः । किल्शब्द वल्मेक्षायाम् । न नामवस्तु नामव्यवहारार्थमेव मायैव परिवलगति जगदिमित्यर्थः ॥ ४८ ॥

ब्रह्मादीनां शरीराणि श्वशूकरशरीरवत् ॥
सुरेश्वरोक्तिरेषाऽप्याविद्यावैभववादिनी ॥ ४९ ॥

ब्रह्मादिशरीराणामाविद्यकत्वे प्रमाणमाह । ब्रह्मादीनामिति । “अशूकर-शरीरवत् विरक्तैर्यथैहिके शरीरे जिहासा क्रियते तथा प्राकृतैरूर्ध्वलोकशरीरेऽपि । एतेन दिव्यदेहो भूत्वोर्ध्वलोके निवासं कृत्वा स्थास्यामीतीच्छा मुमुक्षूणां निरस्ता, आविद्यकत्वाविशेषात् । अत्रैषां शरीराणामाविद्यकत्वे एषा सुरेश्वरोक्तिः सुरेश्वरस्य विश्वरूपाचार्यस्य ब्रह्मावतारस्योक्तिरविद्यावैभववादिनी अविद्याया वैभवं सामर्थ्यं तत्कथनशीला । प्रमाणमिति शेषः ॥ ४९ ॥

**तस्माच्चिन्मात्राश्रया ऽथ चिन्मात्रविषया सती ॥**
**अविद्या दर्शयत्यतेज्जगद्रज्जुभुजंगवत् ॥ ५० ॥**

चिदधिष्ठिताविद्यैव प्रपंचं दर्शयतीत्युपसंहरति । तस्मादिति । चिन्मात्राश्रया चिन्मात्रं शुद्धं ब्रह्म आश्रयो यस्याः सा तथा, सोपाधिकस्याश्रयत्वे आत्माश्रयापत्तेः । चिन्मात्रविषया चिन्मात्रं विषयो यस्याः सा तथा सती प्रतीतिमात्रशरीरा जगत् दर्शयति । कीदृशं जगत् सत्यमसत्यं वा, नाद्य. ज्ञाननिवर्त्यत्वानुपपत्तेः, न द्वितीय शशशृंगतुल्यस्यापि तत्त्वानुपपत्तेरित्यत आह । रज्जुभुजंगवत् रज्जुः अनिर्वचनीयं सर्पं दर्शयति यथा ॥ ५० ॥

**ज्ञानाज्ञानविरोधेऽत्र प्रसिद्धे सति सर्वथा ॥**
**ज्ञानात्मा ऽऽश्रयतां यात्यज्ञानमित्युचितं भवेत् ॥५१॥**

ननु यत्राविद्यातमस्तिष्ठति तत्र स्वकार्यं विक्षेपादिकं करोत्येव यदि श्रुद्धस्वव्याघातभिया न तत्र तिष्ठति तदा आश्रयत्वविषयत्वभागिनीति पूर्वाचार्यवचनविरोधो ग्रंथकर्तुश्चेत्याशक्य मध्याह्नकालिके निरावरणे ज्येष्ठसूर्ये घूककल्पिततमोवत् कल्पितप्रपंचदर्शने तत्कारणीभूतज्ञाकल्पने तमोवज्ज्ञानवोधार्थं मता सा वार्योक्तिरित्याशयेनाह । ज्ञानाज्ञानेति । सर्वथा ज्ञानाज्ञानविरोधे, सति तम प्रकाशवत्प्रसिद्धे ज्ञानात्मा ज्ञानस्वरूप ब्रह्म आश्रयतां याति । अज्ञानमित्युचितं भवेत् इयमज्ञानस्यैव योग्यतेति, शुद्धे चेदज्ञानकल्पनमिति भावः ॥ ५१ ॥

प्रमाणानि प्रवर्तंते बहून्यत्र सुमध्यमे ॥
इंद्रो मायाभिरित्येव मंत्रस्तां किल भाषते ॥ ५५ ॥

अत्र परमार्थतो विद्यायां प्रमाणं नास्तीति पृच्छ्यते व्यवहारतो वाद्ये इष्टापत्तेः ' सिद्धांतोऽध्यात्मशास्त्राणां सर्वापह्नव एव हि॥ नाविद्यास्तीह नो माया सर्वं ब्रह्मेदमक्रमम् ' इति ' न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः ॥ न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता ' इत्युक्तत्वादिति तद्दशायां तदभावस्य पूर्वाचार्यैः स्वीकृतत्वाद्वितीये त्वाह । प्रमाणानीति । हे सुमध्यमे अत्राविद्यायां बहूनि प्रमाणानि प्रवर्तंते । तानि कानि इत्यत आह । " इंद्रो मायाभिः पुरुरूप ईयते " इंद्रः आत्मा मायाभिरविद्याशक्तिभिः पुरुरूपो बहुरूप इत्येवं मंत्रः किल तां भाषते ता मायां वदति । किलेति व्यावहारिकप्रसिद्धिद्योतनार्थः । ' तरत्यविद्यां विततां हृदि यस्मिन्निवेशिते ॥ योगी मायाममेयाय तस्मै ज्ञानात्मने नम ' इति । योगी निष्कामकर्मयोगेन शुद्धस्वांतोऽष्टांगयोगेनोपासनया वा प्राप्तयोगः यस्मिन्प्रत्यग्रूपेण ब्रह्मणि हृदि निवेशिते साक्षात्कृते सति विततां प्रपंचरूपेण विस्तारं गतां मायामविद्यां तरति तत्कालमेवेति स्थूलतूलराशौ वह्निरिव नाशयति, तस्मै अमेयाय सकलप्रमाणागम्याय । हेतुगर्भं विशेषणम् । ज्ञानात्मने ज्ञानरूपाय स्वयंप्रकाशाय नमः । तस्यैव पूर्णस्योत्कर्षं इत्यस्मिन्वाक्ये मायाविद्ययोरेकत्वश्रवणादिति शब्दस्य प्रकाशार्थत्वात्तत्र वचनांतरमप्युदाहृतमिति ॥ ५५ ॥

न तं विदाथेति तथाऽज्ञामेकामिति चापरः ॥
दैवी ह्येषा गुणमयी मम माया दुरत्यया ॥ ५६ ॥

श्रुत्यंतरमविद्यायां प्रमाणमित्याह । न तं विदाथेति । ' न तं विदाथ य इमा जजानान्यद्युष्माकमंतरं बभूव ' इतः पूर्वं सांबशिवस्य सर्वात्मकत्वं प्रतिपादितम्, सांप्रतं तस्य जीवे नैक्यं परिज्ञातुं श्रीगुरुपादविमुखानां

१ परमार्थदशायाम् । २ प्रमाणाभावस्य ।

ज्ञानजन्यः परिणामश्चेतसः समुदेति यः ॥
सोऽज्ञानस्य विरोध्यस्ति न चिच्छुद्धा वरानने॥५२॥

मूढकल्पितमज्ञानं स्वकार्ये स्थातुं न शक्नोति सोपाधिके पूर्वदूषणभिया न तिष्ठति तथाऽप्यनन्यगत्या स्वप्रकाशे शुद्धे तिष्ठतीति वाच्यं तथाच तत्रापि तस्य निर्भाग्यस्य स्थितिर्दुर्लभा विरोधित्वादित्यत आह । ज्ञानजन्य इति । यः ज्ञानजन्य वेदांतवाक्यज्ञानजन्यः चैतन्यात्मकज्ञानजन्यो वा चेतस परिणामो वृत्त्यात्मक. सोऽज्ञानस्य विरोधी निवर्तको भवति । न शुद्धा चित् अन्यथा सर्वस्य कृतकृत्यत्वापत्तेरिति॥५२॥

उदासीनमसंगं च चैतन्यं जगदाश्रयम् ॥
ज्ञानोपाधिप्रसंगेन बाध्यबाध्यकतां गतम् ॥ ५३ ॥

नन्वेवमपि चैतन्य कथ बाधकमित्याशंक्य यथा लोके केवलस्याग्नेर्दाहकत्वाभावेऽपि काष्ठाद्यारूढस्य दाहकत्वं तथा वृत्त्यारूढस्य चैतन्यस्याज्ञानविरोधित्वमित्याह । उदासीनमिति । उदास्ते सर्वदा सर्वव्यवहारेषु उदासीनं निर्विकारचैतन्यमतएवासंगम् । जगदाश्रय. जगदाधार जगदाश्रयो यस्येति वा तम्, घटोऽस्ति घटो भाति इत्यादिप्रतीते. । अत आह।ज्ञानोपाधिप्रसंगेन बाध्यबाधकता गतं घटाद्युपाधिप्रसंगेन घटादिबाधेन बाध्यतामज्ञाननाशकवृत्त्युपाधिना बाधकता गतमिति॥५३॥

तस्मान्न जगदारोपे शंकाशूकोऽस्ति भामिनि ॥
न चाविद्यैव नास्तीह मानाभावादितीरय ॥ ५४ ॥

परिपूर्णे ब्रह्मण्यज्ञानकल्पितं जगदित्युपसंहरन्नाह । तस्मादिति । हे भामिनि तस्मात् पूर्वोक्ताद्धेतोर्जगदारोपे अज्ञानेन ब्रह्मणि जगत्कल्पने शंकाशूक. शंकालेशो नास्ति । चित्तवृत्तिराशंकते । न चेति । हे स्वामिन्नविद्यैव नास्ति इह अविद्यायां मानाभावात् इति प्रमाणसत्त्वे सत्यत्वापत्तेर्ज्ञाननिवर्त्यत्वाभावे नानिर्मोक्षापत्ते नास्तित्वेऽप्यनिर्मोक्षापत्तेरित्याशयेनाह । ईरय कथयेत्यर्थ ॥ ५४ ॥

**प्रमाणानि प्रवर्तंते बहून्यत्र सुमध्यमे ॥**
**इंद्रो मायाभिरित्येव मंत्रस्तां किल भाषते ॥ ९५ ॥**

अत्र परमार्थतो विद्यायां प्रमाणं नास्तीति पृच्छ्यते व्यवहारतो बाधे इष्टापत्तेः ' सिद्धांतोऽध्यात्मशास्त्राणां सर्वापह्नव एव हि ॥ नाविद्यास्तीह नो माया सर्वं ब्रह्मेदमक्रमम् ' इति ' न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः ॥ न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता ' इत्युक्तत्वादिति तद्दशायां तदभावस्य पूर्वाचार्यैः स्वीकृतत्वाद्वितीये त्वाह । प्रमाणानीति । हे सुमध्यमे अत्राविद्यायां बहूनि प्रमाणानि प्रवर्तंते । तानि कानि इत्यत आह । " इंद्रो मायाभिः पुरुरूप ईयते " इंद्रः आत्मा मायाभिरविद्याशक्तिभिः पुरुरूपो बहुरूप इत्येवं मंत्र· किल तां भाषते ता मायां वदति । किलेति व्यावहारिकप्रसिद्धिद्योतनार्थः । ' तरत्यविद्यां विततां हृदि यस्मिन्निवेशिते ॥ योगी मायाममेयाय तस्मै ज्ञानात्मने नम ' इति । योगी निष्कामकर्मयोगेन शुद्धसत्वोऽष्टांगयोगेनोपासनया वा भक्तयोगः यस्मिन्प्रत्यग्रूपेण ब्रह्मणि हृदि निवेशिते साक्षात्कृते सति विततां प्रपंचरूपेण विस्तारं गतां मायामविद्यां तरति तत्काल मेवेति स्थूलतूलराशौ वह्निरिव नाशयति, तस्मै अमेयाय सकलप्रमाणागम्याय । हेतुगर्भं विशेषणम् । ज्ञानात्मने ज्ञानरूपाय स्वयंप्रकाशाय नमः । तस्यैव पूर्णस्योत्कर्ष इत्यस्मिन्वाक्ये मायाविद्ययोरेकत्वश्रवणादिति शब्दस्य प्रकाशार्थत्वात्तत्र वचनांतरमप्युदाहृतमिति ॥ ९५ ॥

**न तं विदाथेति तथाऽजामेकामिति चापरः ॥**
**दैवी ह्येषा गुणमयी मम माया दुरत्यया ॥ ९६ ॥**

श्रुत्यंतरमविद्यायां प्रमाणमित्याह । न त विदाथेति । ' न तं विदाथ य इमा जजानान्यद्युष्माकमंतरं बभूव ' इतः पूर्वं सांबशिवस्य सर्वात्मकत्वं प्रतिपादितम्, सांप्रतं तस्य जीवे नैक्यं परिज्ञातुं श्रीगुरुपादविमुखानां

---

१ परमार्थदशायाम् । २ प्रमाणाभावस्य ।

सामर्थ्यं नास्तीति द्योतयितुमथवर्तते । न तमिति । यो विश्वकर्मा इमानि भूतजातानि जजान उत्पादितवान्तं विश्वकर्माणं हे जीवा यूयं न विदाथ । ननु देवदत्तो ऽहं यज्ञदत्तो ऽहमिति वयमात्मानं जानीम इति चेन्न नह्यहं प्रत्ययगम्यं चैवंरूपं परमेश्वरतत्त्वं किंतु, युष्माकमहं प्रत्ययगम्यानां जीवानामंतरं बभूव । वास्तवं तुरीयं शिवतत्त्वमन्यद्भवदपि तत्रैवास्ति। कुतो न विद्म इति चेन्न भवतामंतर्विद्यमानत्वात् । अंतर्विद्यमानमपि कुतो न ज्ञायते ऽत आह । नीहारेण प्रावृता यूयं नीहारदृशेन अनिर्वचनीयेनाज्ञानेनावृतत्वान्न जानीथ । पुनः कथंभूता यूयम् । जल्प्या चासुतृपः जल्पनं जल्पिः तया, देवोऽहं नरोऽहं ममेदं गृहक्षेत्रमित्याद्यनृतजल्पनेन व्याप्ताश्च । पुनरसुतृपः असव असून्या तृप्यंति असुतृपः प्राणान् भृत्वा तावतैव तृप्यंति, नतु शिवमात्मानं विचारयंति, न केवलमैहिकभोगेन तृप्ति किंतूक्थशासश्चरंति परलोकभोगान्सपादयितुं यज्ञेषु तानि शंसंति । उक्थशासः शास्त्रस्तोतारः शंसेक्विप्यनिहितामिति न लोपः संहितायां दीर्घः । ऐहिकामुष्मिकभोगप्रकृतानामज्ञानमिथ्याज्ञानपराधीनानां भवतां नास्ति तत्प्रज्ञानमित्यर्थः । अपरं तत्र प्रमाणमाह । "अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः॥ अजोह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः" इति। अजां मायां लोहितशुक्लकृष्णां समानरूपाः सत्वरजस्तमोगुणात्मिकां सरूपाः बह्वीः प्रजाः सृजमानामधिष्ठानसत्तया उत्पादयन्तीमेकोऽजः पुरुषो जुषमाणः सेवमान- कार्यकारणसंघाताभिमानी अनुशेते ऽजामात्मत्वेनावगम्य तत्कार्यबुद्धिनिष्ठसुखदु-खादिकमनुभवति अहं सुखी दुःखीति मन्यते, अन्योऽजो विवेकी भुक्तभोगां कृतभोगविवेकज्ञो तां जहाति, त्यक्त्वा मुच्यते इत्यर्थः । तत्र भगवत्स्मृतिमप्याह । दैवी दैवस्य परमेश्वरस्य शक्तिरेषा साक्षिप्रत्यक्षसिद्धा गुणमयी सत्वाद्यात्मिका मम माया भगवतः माया इंद्रजालिकमायावत् मिथ्याभूताऽपि विचित्रप्रपचरचनां दर्शयंती पराधीना मत्कृपा ईश्वरानुग्रहं विना दुस्तरेतिभावः ॥ ५६ ॥

भगवद्वचनं चेत्थं तां प्रकाशयति स्फुटम् ॥
अज्ञानेनावृतं ज्ञानमित्यपि प्रकटं वचः ॥ ९७ ॥

इति भगवद्वचनं मायां वदतीत्याह । भगवदिति । च पुनस्तां मायां पूर्वश्लोकोक्तभगवद्गीतावाक्यं तां स्फुटं स्पष्टं भासते । अन्यदपि गीतावाक्यमाह । अज्ञानेनावृतं श्रुतौ नीहारपदवोच्येनावरणात्मकेन ज्ञानं चैतन्यमावृतमाच्छादितं तेनावरणेनाहंममेति संसरंति जना इत्यपि प्रकटं स्फुटं वचः प्रवर्तते । इत्यपी समुच्चायकौ । 'मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरम् ॥ मम योनिर्महद्ब्रह्म' इत्यादीनामिति ॥९७॥

जीव एको ऽथवा नानेत्यास्ते यस्तव संशयः ॥
तं श्रुतिस्मृतिवृद्धोक्तैर्दृष्टांतैर्दूरतः कुरु ॥ ९८ ॥

ननु जीवो नाना एको वाऽत्र संशयो वर्तते इत्यत्राह । जीव इति । जीव एकोऽस्ति, तेनैव स्वाज्ञानेन जगत्कल्पितं, तस्यैव ज्ञानेन मोक्षो भविष्यति, तत्कल्पिताश्चान्ये स्वप्नात्प्रबुद्धस्येव मोक्ष्यते इत्येकजीववादम् । अन्ये बंधमोक्षव्यवस्थार्थं नानाजीवान्कल्पयंति । हे चित्तवृत्ते इति यस्तव संशयः तं स्वमनःस्थं संदेहं श्रुतिस्मृतिवृद्धोक्तिदृष्टांतैः श्रुतिश्च स्मृतिश्च वृद्धोक्तिश्च दृष्टांतश्च तैर्मया वक्ष्यमाणैर्दूरमुत्सारय॥९८॥

एको देवः सर्वभूतेषु गूढः
सर्वव्यापी सर्वभूतांतरात्मा ॥
कर्माध्यक्षः सर्वभूताधिवासः ॥
साक्षी चेताः केवलो निर्गुणश्च ॥ ९८ ॥

तेषु मध्ये तावच्छ्रुतीः शृणु । एको देव इति । मूर्तित्रयस्य ब्रह्मरुद्रायात्मनो भेदं मत्याह । एक इति । जाड्यं मत्याह । देव इति । ज्ञानघन इत्यर्थः । अत्र विशेषो देवनिर्णये द्रष्टव्यः । आदित्यादिवैषम्यं मत्याह । सर्वभूतेष्विति । तर्हि किमिति न मतीयते ऽत आह । गूढ इति । अनादिमायया छन्न इत्यर्थः । तवद्भूतावच्छिन्नत्वेन परिच्छिन्नत्वं किं नेत्याह । सर्वव्यापीति । तमोवत्ताऽस्थं वारयति । सर्वभूतांतरात्मेति । सर्व-

भूतस्यस्य भूतक्रियया कर्तृत्वं स्यादित्यत आह । कर्माध्यक्षः सर्वकर्मसाक्षी । सर्वभूतेष्वित्यत्र भूतानां पृथगुक्ते सद्वितीयत्वमत आह । सर्वभूतेति । सर्वभूताधिष्ठानं कल्पितस्याधिष्ठानादर्थांतरत्वाभावादित्यर्थः । न केवलं कर्माध्यक्ष एव तत् कर्तॄणामपीत्याह । साक्षीति । साक्षित्वे हेतुमाह । चेताः चित्स्वभावः, केवलो दृश्यवर्जितः अद्वितीयः, निर्गुणो ज्ञानादिगुणरहितः । चकारो दोषाभावसमुच्चयार्थः । तथा चात्मैकत्वे सर्वप्रमाणशिरोमणिश्रुतिप्रमाणमित्यर्थः ॥ ५९ ॥

एक एव हि भूतात्मा भूतेभूते व्यवस्थितः ॥
एकधा बहुधा चैव दृश्यते जलचंद्रवत् ॥ ६० ॥

तत्रैव वचनांतरं श्रुतिराह । एक इति । एक द्वितीयरहितः । ननु प्राणिनो भिन्नाः प्रतीयंते इत्याशंक्योपाधिभेदादेव भेदो न वस्तुतोऽस्तीत्याह । भूतात्मेति । भूताधिष्ठानमित्यर्थः । भूतेभूते व्यवस्थितः सर्वभूतेषु व्यवस्थितः उपाधिना विविधं प्रतीयते । तत्र दृष्टांतमाह । एकधा एक एव सन् जलचंद्रवत् जलप्रतिबिंबितचंद्र इवेत्यर्थः । तं भाव भगवतो बादरायणस्य सूत्रं अतएवोपमा सूर्यकादिवत् । 'यत एव परप्रतिषेधोपदेशो यमात्मा निर्विशेष एवातएवौपाधिकं सविशेषत्वमादाय जलसूर्यकादिवत्' सूर्य इव सूर्यकइवे प्रतिकृतौ । इति इवार्थे कन् । सूर्यसदृशः प्रतिबिंबितसूर्यः तद्वदित्यर्थः । तथाच श्रुतिः– "यथा ह्ययं ज्योतिरात्मा विवस्वानपो भिन्ना बहुधैकोऽनुगच्छन् ॥ उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजोऽयमात्मा" इति । ज्योतिःस्वभावो विवस्वानेकोऽपि तत्तत्पात्रगता भिन्ना अपोऽनुगच्छन् बहुधा क्रियते, एवमात्मा देवः स्वप्रकाशो ऽजः कूटस्थः नित्य एको भिन्नेषु क्षेत्रेषु अनुगच्छन् उपाधिना भेदरूपः क्रियते । तथा चैतद्दृष्टांतेन ग्रहणः स्वतो निर्विशेषत्वमेवेति सूत्रतात्पर्यमिति ॥ ६० ॥

घृतमिव पयसि निगूढं भूतेभूते च वसति विज्ञानम् ॥
सततं मंथयितव्यं मनसा मंथानभूतेन ॥ ६१ ॥

ननु यदि भूतेभूते व्यवस्थितः तदा कथं न प्रतीयते इत्याशंक्य यथा काष्ठे स्थितोऽप्यग्निरुपायं विना नोपलभ्यते तथा मायातत्कार्ये स्थित आत्मा शुद्धांतःकरणेन जितेंद्रियेण तत्परेण लभ्यते इत्याह । घृतमिव भूतेभूते ब्रह्मादिस्थावरांतभूतेषु विज्ञानमात्मा ' विज्ञानमानंदं ब्रह्म " इतिश्रुतेः । विज्ञायते विज्ञानम्, भावे ल्युट् इति निर्वचनाच्च । निगूढं भूताकारपरिणतमायया छन्नमिव वसति तदधिष्ठानत्वेन तिष्ठति । तर्हि किं करणीयमत आह । घृतमिव मनसा मंथानभूतेन मथ्ना न दंडसदृशेन सततमादरनैरंतर्येण मंथयितव्यम् । यथा दुग्धे स्थितमपि सर्पिर्यत्नं विना नोपलभ्यते तथा वैराग्याभ्यासादिकं विनाऽऽत्मा न प्राप्यते इत्यर्थः ॥ ६१ ॥

यत्कृत्स्नं ब्रह्म पूर्वोक्तं तदेवेदमविद्यया ॥
एकधा नैकधा मूढैः कल्प्यते व्योमचित्रवत् ॥ ६२ ॥

ननु तथापि निराकारे निर्विकारे जगदाकारता केन कृतेत्याशंक्य मायानटीं विना का चित्रं प्रदर्शयेत् इत्याह । यदिति । यत्पूर्वोक्तं कृत्स्नं भूमाख्यं ब्रह्म तदेवेदं जगत् । अविद्यया सुरनरतिर्यगादिभेदेन एकधा एकं सदपि अनेकधा जडचेतनादिभेदेन चराचररूपेण मूढैः मायानटीमोहितैः व्योमचित्रवत् कल्प्यते ॥ ६२ ॥

एक एव तु विश्वात्मा मायया मोहयन् जगत् ॥
एकतां बहुतामेति कुंभवन्मणिसंश्रयात् ॥ ६३ ॥

दृष्टांतैरप्येकस्य बहुभावं दर्शयति । एक इति । एक एव न द्वितीयः विश्वात्मा विश्वाधिष्ठान ऐंद्रजालिकवत् मायया जगन्मोहयन् एकतां बहुतामेति । यथा नटः कदाचिदेको भवति कदाचिन्मायया बहुत्वं गच्छति । मणिसंश्रयात् मणिसामीप्यात् कुंभवत् घट इव यथा रक्तमणिसंश्रयाद्रक्तः कुंभः, पीतसंश्रयात्पीतः, नीलसंबंधान्नीलः । यथा चैकोऽपि कुंभो नानामणिसंबंधात् नाना भवति तत्संबंधाभावे एकतां याति तथा विश्वात्मा मायपेति भावः ॥ ६३ ॥

स्वाभासवर्त्मनैवैतत्स्वात्माऽज्ञानजभूमिषु ॥
द्वित्वं बहुत्वमेकं सद्वियद्वद्धटादिषु ॥ ६४ ॥

तत्रैव दृष्टांतांतरमाह । स्वाभासेति । स्वस्य चिदात्मनः आभासः प्रतिबिंबो मायायां सत्वरजस्तमोरूपायां यथा विष्णुब्रह्मादिरूपतां गतः, तेन वर्त्मना तेनैव मार्गेणैतद्ब्रह्म स्वात्माज्ञानजभूमिषु स्वात्मनो यदज्ञानं तज्जन्या भूमयोऽतःकरणानि तासु एकं सत्, वस्तुत एकमपि यद्वत् तथा वियदाकाशमेकमपि घटादिषु भिन्नेषु भिन्नमिव भाति तथांऽतःकरणादिभेदेन द्वित्वं बहुत्वं यातीत्यर्थः । एतेन सुखदुःखादिव्यवस्था बंधमोक्षव्यवस्था च पालिता इति ॥ ६४ ॥

तस्मात्तत्तदहंकारमुकुरः प्रतिबिंबितः ॥
एक एव चिदात्मा ऽयं जीवतां बहुतां गतः ॥ ६५ ॥

पुनरपीममेवार्थं स्फुटयन्नुपसंहरतीव दृष्टांतपूर्वकं दार्ष्टांतमाह द्वाभ्याम् । तस्मादिति । तस्मात् पूर्वोक्तहेतोः तत्तदहंकारमुकुरप्रतिबिंबितः तत्तत्स्थूलराद्यहंकारा मुकुरा दर्पणानि इव तत्र प्रतिबिंबितः एक एव चिदात्माऽयमपरोक्षः जीवतां प्राणाद्युपाधिषु जीवभावं तद्भेदेन बहुभावं च गतः ॥ ६५ ॥

कर्ता भोक्ता प्रमाताऽहंकारेणैक्यमुपागतः ॥
कर्तृभोक्तृप्रमातृत्वान्मात्मन्येव निरीक्षते ॥ ६६ ॥

संसारं च प्राप्त इत्याह । कर्ता इति । अहंकारेणैक्यं तादात्म्यमुपागतः कर्तृत्वभोक्तृत्वप्रमातृत्वानि चिदात्मन्येव निरीक्षते ऽनादिमायाजन्यभ्रमेण पश्यति कथं निरीक्षते ऽत आह । कर्ता कर्मेंद्रियव्यापारवानहम्, भोक्ता अंतःकरणसहितज्ञानेंद्रियव्यापारवानहम् , प्रमाता प्रमारूपवृत्तिज्ञानवानहमित्यादिनिरीक्षते संसरतीत्यर्थः ॥ ६६ ॥

लोहतादात्म्यमापन्नस्ताड्यते ऽग्निर्यथा घनैः ॥
अहंकारैकतां प्राप्ता संसारैः पीड्यतेऽत्र चित् ॥ ६७ ॥

नन्वात्मनो निर्विकारत्वादंतःकरणादेर्जडत्वात् अहं जानामि सुख्यहमि-

त्यादिप्रत्ययः किंनिबंधनं इत्यत आह। लोहेति। यथा ऽग्निर्लोहतादात्म्यं लोहेनैकतां गतो घनैर्लोहसंघैस्ताड्यते। तथा अहंकारैकतामहंकारतादात्म्यं प्राप्ता अध्यासमापन्ना चित् निपीड्यते। कैः। संसारैः सुखदुःखाद्यनुभवैः। न चैवमपि चितः शुद्धत्वात्कथं पीडा इति वाच्यम्, परमार्थतस्तदभावस्येष्टापत्तिग्रस्तत्वात्। अज्ञाने सति संसारपीडाया विषयाधीनत्वात्। अतस्तज्जन्यभ्रमस्यैव सर्वव्यवहारसाधकत्वादिति॥६७॥

किं वक्तव्यमविद्याया विलासात्मकमद्भुतम्॥
कलत्रपुत्रवैकल्यैः साकल्यैश्चिन्निपीड्यते॥ ६८॥

चाज्ञाध्यासमप्यविद्यैव करोतीत्याह। किमिति। अविद्याया न विद्यते विचार्यमाणा या सा ऽविद्या तस्या अद्भुतमाश्चर्यं विलासात्मकं किं वक्तव्यम्। यतः स्वयमसती विचित्रं कार्यं दर्शयति। कीदृशमद्भुतमत आह। कलत्रपुत्रवैकल्यैः साकल्यैश्चिन्निपीड्यते कलत्रे विकलेऽहमेव विकलः पुत्रे विकले ऽहमेव विकलः तस्मिन्सकलेऽहमेव सकलः इत्याद्यविद्ययैवाभिमन्यते॥ ६८॥

अतो जीवत्वमभ्येति चिदहंकृतिमिश्रणात्॥
कामादीन्मानसान्धर्मानात्मस्थत्वेन पश्यति॥ ६९॥

यतो ऽविद्यैवाहंकारद्वारा सर्वसंसारहेतुरित्याह। अत इति। अहंकृतिमिश्रणात् अहंकारेण तादात्म्याध्यासात् चिच्छुद्धचैतन्यं जीवभावं प्राप्नोति। कथं जीवभाव इत्याशंक्यास्मिन्नन्यधर्मावभास एव इत्याह। कामादीनिति। कामादीन् मानसान् धर्मान् " कामः संकल्पः " इत्यादिश्रुतेः आत्मस्थत्वेन पश्यति आत्मधर्मा एवैते इति पश्यति॥ ६९॥

वस्तुतस्तु चिदात्मत्वाज्जीव आनंदवारिधिः॥
तं तथाविधमासाद्य विशोका भव शोभने॥ ७०॥

नन्वेवं जीवस्य वास्तवं निजस्वरूपमत आह। वस्तुत इति। जीव आनंदवारिधिः निरतिशयानंदरूपत्वं चिदात्मत्वात् चित्स्वरूपत्वात्। तर्हि किं कुर्यामित आह। तमिति। तं तथाविधं

तदेवाहमस्मीति साक्षात्कृत्य विशोका विगतशोका भव " तरति शोकमात्मवित् " इति श्रुतेः। एतेन जीवो ब्रह्मणो न भिद्यते चित्त्वाद्ब्रह्मवदिति सूचितम्। न चेदमप्रयोजकममेदश्रुतीनां पीडापत्तेरिति ॥ ७० ॥

सर्वज्ञो जगदीशानः किंचिज्ज्ञो जीवसंज्ञितः ॥
सर्वकर्ता जगन्नाथो जीवः किंचित्करो मतः ॥ ७१ ॥

ननु यदि भेदो नास्ति तर्हि ईश्वरो जीव इति व्यवहारः किंनिमित्त इत्याशंक्य मायाविद्याभ्यामेव तादृशव्यवहार इत्यनेकैर्वचनैः पूर्वं प्रतिपादितं त्वया श्रुतमिति उपसंहरन्नाह द्वाभ्याम्। सर्वज्ञ इति। सर्वज्ञः सर्वप्रकाशः जगदीशानः जगन्नियामकः मायोपाधिकः किंचिज्ज्ञ जीवसंज्ञितः अविद्योपाधिकोऽन्तःकरणोपाधिको वा जगन्नाथः जगदीश्वरः सर्वकर्ता सर्वकरणप्रेरकः किंचित्करो जीवः बुध्युपाधिकः व्यवहारार्थी विद्वद्भिः स्वीकृतः ॥ ७१ ॥

चिन्मात्ररूपयोरेवं प्रकाशातपयोर्भिदा ॥
अज्ञानतज्जकृत्यं तदित्यवेहि मृगेक्षणे ॥ ७२ ॥

हे मृगेक्षणे एवं यथा प्रकाशातपयोर्भिदा प्रकाशश्च तेजोविशेषः, आतपश्च प्रभारूपः तयोर्भिदा भेदः कल्पितः। एवं चिन्मात्ररूपयोः चिन्मात्ररूपं वास्तवं ययोर्जीवेशयोर्भिदा अज्ञानतज्जकृत्यं तत् इति अज्ञानं माया तदुपाधिकत्वेनेश्वर इति सर्वज्ञ इति सर्वकर्ता इत्यादिव्यवहारः अज्ञानजांतःकरणोपाधिकत्वेन जीव इति कार्योपाधिरयं जीवः कारणोपाधिरीश्वर इति वचनस्योक्तत्वात्। मायाविद्ये विहाय शुद्धचिन्मात्रं स्वरूप आत्मानमवेहि जानीहि। इत्येवं सर्ववेदार्थ इति तात्पर्यार्थः ॥ ७२ ॥

एवं प्रबोधिता चित्तवृत्तिर्हृष्टा सती पुनः ॥
पप्रच्छ स्वानुजं किंचिद्विहस्योत्फुल्ललोचना ॥ ७३ ॥

एवमुपदिष्टा चित्तवृत्तिः किं चकारात आह। एवमिति। एवं पूर्वोक्तेन प्रकारेण विवेकाश्रमभिक्षुणा प्रबोधिता प्रबोधोन्मुखं गमिता हृष्टा विषय-

विमुखत्वात्तोषं गता। अतएव हृष्टत्वव्यंजकं विशेषणम्। उत्फुल्ललोचने उत्फुल्ले विकाशंगते लोचने यस्याः सा। एतेन प्रसन्नवदनत्वं मुमुक्षोर्लिंगमुक्तमिति। चित्तवृत्तिः किंचिद्विहस्य मंदहास्यं कृत्वा स्वानुजं विवेकाश्रमं पप्रच्छ॥ ७३॥

**चिदद्वैतमिदं वत्स यत्त्वयोक्तं तथैव तत्॥**
**अत्र विप्रतिपत्तिर्मे प्राप्ता गगनपुष्पताम्॥ ७४॥**

स्वनिश्चयमुद्घाटयंती पप्रच्छाग्रिमश्लिदद्वैतमित्यादिभिः। हे वत्स। अनुजत्वात्संबोधनम्। यत्त्वयोक्तमिदं जगच्चिदद्वैतं चिन्मात्रं तत् श्रुतिवाक्यैर्निश्चितं तथैव सत्यमस्ति। अत्रास्मिन्नर्थे विप्रतिपत्तिर्विरुद्धाप्रतिपत्तिः संशयरूपा वा गगनपुष्पतां आकाशकुसुमतुल्यतां गता॥७४॥

**जगताविद्यकेनात्मा स द्वितीयः कथं भवेत्॥**
**स्वप्नोपलब्धदाराद्यैः कुटुंबी कोऽस्ति वस्तुतः॥ ७५॥**

स्वनिश्चयमेवाह। जगता इति। आविद्यकेन अविद्यया प्रतीयमानेन प्रपंचेन मिथ्याभूतेन जगता आत्मा सद्वितीयः कथं भवेत्, अपितु न भवेदित्यर्थः। तत्र दृष्टांतः। स्वप्नोपलब्धदाराद्यैः स्वप्नप्राप्तस्त्र्यादिभिर्वस्तुतः व्यावहारिकः कुटुंबी कोऽस्ति, अपितु नास्त्येवेत्यर्थः॥ ७५॥

**रज्जुसर्पेण सर्पश्चेत्सद्वितीयत्वमाश्रयेत्॥**
**गोबंधनादौ तस्या स्यान्नोपयोगः कथंचन॥ ७६॥**

मिथ्यात्वमेव जगतो दृष्टांतेन प्रतिपादयति। रज्जुरिति। सर्पो व्यावहारिको भुजंगः चेद्यदि रज्जुसर्पेण सद्वितीयत्वमाश्रयेत् द्वितीयस्तादृशो व्यावहारिकः सर्पो भवेत्। तस्या रज्ज्वा गोबंधनादौ उपयोगः प्रयोजनं कथंचन केनापिप्रकारेण न स्यात्॥ ७६॥

**तथापि तत्त्वबोधेन बाधो यस्यापरे क्षणे॥**
**आविद्यकं तदेवोक्तं जगच्चेतादृशं नहि॥ ७७॥**

एवं प्रपंचस्य मिथ्यात्वे निश्चिते का शंकाऽवशिष्टेत्यत आह। तथापीति। एवं सत्यपि तत्त्वबोधेनाधिष्ठानज्ञानेन यस्योत्तरक्षणे बाधः

स्यार्थ्यथा शुक्तिरजतस्यो तदेवाविद्याकाले प्रतीयमानं जगच्चैतादृशं प्रातीतिकं नहि किंतु व्यावहारिकं जगत् सत्यम्, अर्थक्रियाकारित्वादन्यैवं तत्रैवं यथा शुक्तिरजतमिति ॥ ७७ ॥

क्षयित्वाद्यंतवैरस्य मात्रादाविद्यकं यदि ॥
जगत्स्यान्न भवेद्भेदो रज्जुवल्मीकसर्पयो ॥ ७८ ॥

ननु क्षयित्वादिहेतुभिराविद्यकत्वं स्यादित्यत आह । क्षयित्वादिति । यदि क्षयित्वात् आद्यंतवैरस्य मात्रात् आदिश्च अंतश्च आद्यंतौ तयोर्वैरस्य मात्रात् अभावात् 'आदावंते च यन्नास्ति वर्तमानेऽपि तत्तथा' इत्युक्ते । स्मृतिरपि–'अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत ॥ अव्यक्तनिधनान्येव तत्र का परिदेवना' इति । अथवाऽऽदित्वात् आदीयते आदि तस्मात् अतत्त्वात् परिछिन्नत्वात् वैरस्य मात्रात् परिणामित्वाद्देहादिजगदाविद्यकं स्यात् तदा रज्जुवल्मीकसर्पयो रज्जुसर्पप्रातीतिकः वल्मीकसर्पो व्यावहारिक इति भेदो न स्यात् । तथा वृद्धोक्तेरपि–एकं परमार्थं वस्तु द्वितीयं व्यावहारिकं तृतीयमनिर्वचनीयमिति । आद्यं ब्रह्म द्वितीयं घटादि तृतीयं रज्जुसर्पादीति ॥७८॥

आविद्यकत्वं सर्वत्र बाधधीगम्यमेव हि ॥
बाधाभावेऽपि तत्स्याचेत्प्रसरेत्र कथं चितिः ॥ ७९ ॥

अपच सत्यं बाध्यत्वाभावात् ब्रह्मवदिति न च स्वरूपासिद्धिः प्रपंचो बाधायोग्य अनाविद्यकत्वात्त्रैव तत्रैव यथा शुक्तिरजतमित्यभिप्रायेणाविद्यकत्वं लक्षयति । आविद्यकत्वमिति । सर्वत्र व्यवहारे आविद्यकत्वं अविद्याकाले प्रतीयमानत्वम् । न तु सर्वदा इत्याशयेनाह । बाधधीगम्यमेव हीति । बाधज्ञाने गमनशील, बाधज्ञानकाले प्रतीयमानत्वं, यथा श्रुते शुक्तिकादावतिप्रसक्ते । न च बाध्यत्वाविद्यकत्वे व्यभिचरिते अन्वयव्यभिचारो व्यतिरेको वा, नाद्य शुक्तिरजतादौ व्याप्तेर्दृष्टत्वात् न द्वितीय इत्याह । बाधाभावेऽपि सत् आविद्यकत्वं स्यात् । चेत् चिति ब्रह्मणि कथं न प्रसरेत् ब्रह्मणोऽप्याविद्यकत्वापत्तेरिति ॥ ७९ ॥

तद्विवेकाश्रम ब्रूहि जगद्धीबाधिकां धियम् ॥
येन शंकांकुरं हित्वा स्यामहं प्रत्यगाश्रया ॥ ८० ॥

प्रश्नमुपसंहरति । तदिति । हे विवेकाश्रम तत् पूर्वोक्तहेतोः जगद्धीबाधिकां जगद्भ्रमनिवर्तिकां बुद्धिं ब्रूहि । येन उपदेशेन शंकांकुरं भ्रांतिं हित्वा त्यक्त्वा अहं प्रत्यगाश्रया स्यां आत्मनिष्ठा भवेयम् ॥ ८० ॥

इति तस्या वचः श्रुत्वा विवेकाश्रमयोगिराट् ॥
वशीकृताचित्तवृत्तिरिति तुष्ट उवाच ताम् ॥ ८१ ॥

एवं श्रुत्वा परिव्राट् किमुवाच इत्यत आह । इति तस्या इति । विवेकाश्रमयोगिराट् परमहंसशिरोमणिः चित्तवृत्तिर्वशीकृता इति हेतोस्तुष्टः स्ववचनपरिश्रमसाफल्येन तोषं प्राप्तः तां चित्तवृत्तिं उवाच । अयीत्यादिभिः द्वासप्ततिश्लोकैः । पुनः परमसिद्धांतमुपनिषदर्थमुपदिदेशेत्यर्थः ॥ ८१ ॥

अयि चिद्रूप एवात्मा कूटस्थोंतत्रयोज्झितः ॥
अद्वितीयोऽशनायादिवर्जितो निर्मलः स्वराट् ॥८२॥

चित्तवृत्तिनिश्चितमनुवदति त्रिभिः । अयीति । अयीति कोमलामंत्रणे । चित्तवृत्ते आत्मा चिद्रूप एव प्रकाशरूप एव । कूटस्थो निर्विकारः । अंतत्रयोज्झितः अंतानां परिच्छेदानां देशकालवस्तुरूपाणां त्रयमंतत्रयं तेनोज्झितः रहितः, अत एवाद्वितीयः द्वितीयरहितः । अशनायादिभिर्विजितः अशनायापिपासे बुभुक्षापिपासे जरामरणे शोकमोहौ तैर्वर्जितो निर्मलः मायारहितः । स्वराट् स्वयंप्रकाशः ॥ ८२ ॥

वर्धते कर्मणा नायं कनीयान्नैव कर्मणा ॥
महिमा नित्य एवैष बुभूषोर्ब्रह्मणः परः ॥ ८३ ॥

" सदेतदृचाभ्युक्तमेष नित्यो महिमा ब्राह्मणस्य " इति श्रुतिमर्थतः पठति । कर्मणेति । बुभूषोर्ब्रह्मणः ब्रह्मविदस्त्यक्तसर्वैषणस्य एषणासाम्ने निस्पृहः यः परः स्वरूपभूतो महिमा ऐश्वर्यविशेषः स्वाभाविकत्वान्नित्यः । कुतः, यतः कर्मणा शुभकर्मणा एव महिमा न वर्धते वृद्धिलक्षणां

विक्रियां न गच्छति । कर्मणा अशुभेन कनीयान्न कामप्यपक्षयलक्षणां विक्रियां प्राप्नोति ॥ ८३ ॥

**उपाधिकं चिदाश्रित्यायमेव स्यात्परेश्वरः ॥**
**कंचिच्चोपाधिमाश्रित्य जीवतामेष गच्छति ॥ ८४ ॥**

उपाधिना एव जीव ईश्वर इति व्यवहार इत्याह । उपाधिकमिति । कंचिदुपाधिमाश्रित्य मायारूपमयमात्मा स्वभावतः शुद्धोऽपि परमेश्वरः स्यात् । किंचिदुपाधिमंतःकरणरूपमाश्रित्य एषः सदापरोक्षः आत्मा जीवतां जीवभावं प्राप्नोति ॥ ८४ ॥

**इति यत्कथितं सर्वं त्वया तदवधारितम् ॥**
**इतःपरं तव प्रश्नप्रत्युत्तरविवक्षया ॥ ८५ ॥**

चित्तवृत्तिप्रश्नप्रत्युत्तरकथनं प्रतिजानीते सार्धेन । इति यदिति । हे चित्तवृत्ते यन्मया कथितं तत्सर्वं त्वया ऽवधारितम् । इत परं तव प्रश्नप्रत्युत्तरविवक्षया ॥ ८५ ॥

**यदहं कथयिष्यामि तदिहैकमनाः शृणु ॥**
**उपाधिमंतःकरणं प्राप्य चिज्जीवतां गता ॥ ८६ ॥**

यदहं कथयिष्यामि इह व्यवहारकाले त्वमेकमनाः एकस्मिन्मनो यस्याः सा तथा शृणु । मत्कथनप्रयासं सफलं कुरु इति भावः । चित् आत्मा अंतःकरण उपाधिं प्राप्य अंतःकरणेनैक्यं तादात्म्यरूपं लब्ध्वा जीवतां जीवभावं प्राप्ता ॥ ८६ ॥

**जाग्रत्स्वप्नसुषुप्त्याख्यमवस्थात्रयमृच्छति ॥**
**तत्र जाग्रदवस्थायां चिदात्माऽत्र शरीरके ॥ ८७ ॥**

जाग्रत्स्वप्नसुषुप्त्याख्यमवस्थात्रयमृच्छति जाग्रदाद्यवस्थावानिव भवति । तथाच श्रुतिः– "ध्यायतीव लेलायतीव" इति । बादरायणेनापि– 'बुद्धेर्जागरणं स्वप्नः सुषुप्तिरिति चोच्यते ॥ मायामात्रमिदं राजन्नानात्वं प्रत्यगात्मनि' इत्युक्तम् । तथाहि सूर्यादिदेवतानुगृहीतैः चक्षुरादींद्रियैर्गंधाद्यर्थोपलब्धिर्जागरितं, तज्ज- सविषयः स्वप्नः, सर्वेंद्रियतत्वद्रि-

षयोपसंहारवती बाह्यज्ञानरहिता केवलाज्ञानप्रधानानंदप्रचुरा सुषुप्तिः कारणरूपा, इमा अवस्था बुद्धेरेव नतु कूटस्थस्य चिदात्मनः इति । अतएवोक्तं वृद्धैः–'कार्यकारणबद्धौ ताविष्येते विश्वतैजसौ ॥ प्राज्ञः कारणबद्धस्तु द्वौ तौ तुर्ये न सिद्धयत' इति । अत्र सर्वोऽपि पुरंजनकथाऽनुसंधेया भागवतोक्तेति । तत्र तावत्त्वंपदार्थशोधनार्थं जाग्रदवस्थां निरूपयति । तत्रेति सार्धद्वयेन । तत्रावस्थात्रयमध्ये जाग्रदवस्थायां अत्र शरीरके ब्रह्मादिस्तंबपर्यंतदेहेषु चिदात्मा श्रुतौ स एष इति॥८७॥

प्रविष्ट आनखाग्रेभ्यः क्षुरधाने यथा क्षुरः ॥
विश्वंभरः कुलाये स्वे तथैव स्वेन तेजसा ॥ ८८ ॥

शब्दनिर्दिष्ट अव्याकृते नामरूपे व्याकुर्वन्प्रविष्टः सूर्यादिवत्प्रतिबिंबितः। तयावेशप्रत्यगभिधायकयोः स एष इति शब्दयोः सामानाधिकरण्येनोक्तैक्ये प्रविष्ट इति हेतूक्तिः । प्रवेशमर्यादामाह । आनखाग्रेभ्य इति । नखाग्रं मर्यादीकृत्य प्रविष्टः । तत्र दृष्टांतद्वयमाह । क्षुरधाने यथा क्षुरः क्षुरो निधीयतेऽस्मिन्नापितोपस्कराधाने एकदेशे ऽवहितः प्रवेशितः स्थितः स्यात् । यथा वा विश्वंभरः कुलाये स्वे विश्वंभरोऽग्निर्जाठरत्वेन सर्वभरणात् । स्वे कुलाये विश्वंभरकुलाये अग्न्याधारभूतकाष्ठादिलक्षणे नीडे व्याप्य स्थितस्तथाऽऽत्मा सामान्यतः स्फूर्त्यात्मना देहं संव्याप्य स्थितः विशेषतश्च द्रष्टाश्रोतेत्यात्मनो देहमभिव्याप्य तदेकदेशे चक्षुःश्रोत्रादिनाडीषु स्थितः । स्वेन तेजसा चैतन्यात्मकेन ॥ ८८ ॥

बाह्यं शब्दादिकं सर्वं कामाद्यंतःस्थितं च यत् ॥
प्रकाशयति तद्ब्रध्नो ब्रह्मांडमिव सर्वतः ॥ ८९ ॥

बाह्यं शब्दादिकं सर्वं प्रकाशयति । च पुनः यदंतःस्थितं कामादि तत्सर्वं प्रकाशयति । तत्र प्रकाशे दृष्टांतः । ब्रध्नः–सूर्यः सर्वतः 'सामान्यतः ज्ञात्रादिभावमाप्ति विनैव यथा ब्रह्मांडं प्रकाशयति तथेत्यर्थः॥८९॥

अथ जाग्रद्दशायां यदनुभूतं तु किंचन ॥
तद्वासनासहायः सन् स्वप्नान्पश्यति भूरिशः ॥९०॥

स्वप्नं निरूपयति । अथेति । अथ जाग्रदनंतरम् । स्वप्नो निरूप्यते इ-
ति शेषः । जाग्रद्दशायां चक्षुरादिबाह्येंद्रियतद्विषयप्रधानावस्थायां
यत्किंचनानुभूतं चक्षुरादिना विषयीकृतं तद्वासनासहायः जाग्रदनु-
भूतपदार्थवासनासहायः सन्स्वप्नान् वासनामयान् पश्यति प्रकाशयति ।
भूरिशः नानाप्रकारान् । हेतुर्वैलक्षण्यार्थे ॥ ९० ॥

अंतर्हृदि परं ज्योतिर्विज्ञानमय एव सः ॥
विज्ञानानींद्रियार्थानि रूपसंहृत्य सर्वतः ॥ ९१ ॥

भास्यानि भासयन् निर्विकार एवात्मा इत्याह । अंतरिति । अंतर्हृदि
हृदंत· परंज्योतिर्निर्विकारं स एव विज्ञानमयः प्रकाशरूप आत्मा ।
विज्ञानानि बाह्यविषयज्ञानानि तत्साधनानि इंद्रियार्थानि सर्वत उ-
पसंहृत्य ॥ ९१ ॥

तत्तदाकारसंपन्नां बुद्धिमेव प्रकाशयन् ॥
संपद्यते स्वयंज्योतिरत्रायं पुरुषः किल ॥ ९२ ॥

यदि बाह्योपसंहारः कथं तत्र तत्प्रतीतिरित्यत आह । तत्तदेति । त-
त्तदाकारसंपन्नां तत्तद्गजरथाद्याकारेण परिणतां बुद्धिमेव प्रकाशयन्
विषयाणां तु बुद्धिस्वरूपत्वादेव तत्प्रकाशेनैव प्रकाशसिद्धिरित्येवार्थ
इति संपद्यते । स्वयंज्योतिरत्रायं सदापरोक्षः पुरुषः पूर्णोऽत्र स्वप्नाव-
स्थायां स्वयंज्योतिः स्वयंप्रकाशः सूर्यादिबाह्यतेजसामभावात् इंद्रि-
याणामुपसंहाराद्बुद्धेः पदार्थाकारतामापन्नत्वात् आत्मैव स्वयंज्योतिः
संपद्यते । किलेति श्रुतिनिश्चितोर्थः इति ॥ ९२ ॥

एवं सति महामत्स्यो नद्याः कूले उभे अपि ॥
संचरत्येवमास्माऽयं स्वप्नजागरिते तथा ॥ ९३ ॥

स्वप्ने बुद्ध्यंतयो· संचरन्नप्यात्मा स यत्तत्र किंचित्पश्यत्यनन्वागतेन
भवति "असंगो ह्ययं पुरुषः" इत्यादिश्रुतेरसंगत्वात्तद्धर्मैरवशीकृत
एवेत्यत्र दृष्टांतपूर्वं स्माह । एवमिति । महामत्स्यो नद्या· कूले उभे
अपि संचरति, महांश्चासौ मत्स्यो नादेयः स्रोतसा अवशीकृतो नद्या

उभे कूले पूर्वं चापरं चेत्युभे कूले तीरे क्रमेण संचरति-ताभ्यां भिन्नस्तद्धर्मासंस्पृष्टः । एवमयमात्मा स्वप्नं जागरितं तथा महामत्स्यवदसंगस्तद्धर्मैरवशीकृतश्चरति ॥ ९३ ॥

**अथ श्येनो यथाऽऽकाशे परिभ्रमणपीडितः ॥**
**श्रांतः संहृत्य पक्षौ द्रौ विश्रांत्यै नीडमृच्छति॥९४॥**

शरीरद्वयावस्थाद्वयतद्धर्मादिनानात्मनः स्वाभाविकः संबंध इत्युक्तं सुषुप्ते व्याकृताख्ये स्वकारणे लीनत्वात्, सुतरां तद्धर्मैरसंगस्तत्त्वादेव कारणात्तद्धर्मैरसंग इति दर्शयितुं सुषुप्तं निरूपयति त्रयोदशभिः, तत्र तावद्दृष्टांतमाह । अथेति । यथाऽऽकाशे प्रसिद्धः श्येनो महाकायो ऽमंदवेगः श्रुतौ सुपर्णोऽपि दृष्टांतितो वेगतरो ऽल्पविग्रहः पक्षी परिभ्रमणपीडितः परितो भ्रमणेन पीडितः श्रमं प्राप्तः खिन्नः पक्षौ संहृत्य संप्रसार्य श्रुतौ सल्लयशब्दितं नीडमृच्छति प्राप्नोति ॥ ९४ ॥

**एवं जागरणस्वप्नपरिभ्रमणपीडितः ॥**
**बुद्धिमप्युपसंहृत्य स्थानं तदभिवांच्छति ॥ ९५ ॥**

यथाऽयं दृष्टांत एवमेवायं जीवः जाग्रत्स्वप्नपरिभ्रमणेन पीडितः जाग्रत्स्वप्नव्यवहाराश्रयभूतां बुद्धिमप्युपसंहृत्य तत्स्थानं स्थीयते श्रमापनोदार्थमस्मिन्निति स्थानं श्रुतावंतशब्दनिर्दिष्टमज्ञातं ब्रह्म अभिवांच्छति । तस्यैव सर्वाभिलषणीयत्वादिति भावः ॥ ९५ ॥

**यत्र सुप्तः कामयते काममेष कथंचन ॥**
**न कंचन यथा स्वप्नं पश्यत्युन्मीलिताशयः ॥ ९६ ॥**

ननु तत्र विश्रांत्यर्थं गतः किं तत्र सुखप्राप्तिकारणं सुखसाधनानामैहिकामुष्मिकविषयाणामभावात् इत्याशंक्य सर्वमात्रानंदाधिष्ठानभूतस्थानस्य दर्शितत्वात्सर्वदुःखकारणस्य कामस्याभावस्तत्र सुखमाप्तिसाधनमित्याह । यत्रेति । यत्र यस्मिन्नंतशब्दनिर्दिष्टे शेते ब्रह्मणि सुप्तः एषः पुरुषः कथंचन केनापिप्रकारेण कंचन काम्यते ऽभिलष्यते —। कामो-ऽभिलषणीयो विषयस्तं न कामयते न कंचन स्वप्नं स्वप्नपदार्थान्

पश्यति प्रकाशयति । तेषामभावादेव उन्मीलिताशयः उन्मीलित उद्गत आशय अंतःकरणं यस्य स इत्यर्थः ॥ ९६ ॥

**महाराजो यथा लोके महाब्राह्मण एववा ॥**
**कुमारो वा शिशुः काष्ठामानंदस्य परां गतः ॥ ९७ ॥**

उक्तं शयनं दृष्टांतपूर्वकमाह । महाराज इति । महाराजो यथा ऽत्यंतवश्यप्रकृतिकः कुमारो वा शिशुरत्यंतबालः महाब्रह्मणो ऽत्यंतपरिपक्वविद्याविनयसंपन्नो यथोक्तकारी आनंदस्य परां काष्ठां श्रुतावतिघ्नीमशब्दनिर्दिष्टामतिशयेन दुःखं हंतीति निरुक्तिमभिप्रेत्य गतः प्राप्तः ॥ ९७ ॥

**शेते तन्वि तथैवात्मा लोकं परममाश्रित. ॥**
**यत्राहमेवेदमिति सर्वो ऽस्मीति च मन्यते ॥ ९८ ॥**

दार्ष्टांतमाह । शेते इति । हे तन्वि परमं लोकं दुःखाननुविद्धमाश्रित आत्मा शेते । यत्र यस्मिन्निरवच्छिन्न आत्मलोके स्थितः अहमेवेदमिति सर्वोऽस्मीति च मन्यते । प्राज्ञेश्वरयोरभेदादिति भावः ॥ ९८ ॥

**यथाऽयं संपरिष्वक्तः स्त्रियाऽतिप्रियया पुमान् ॥**
**न बाह्यं वेद किमपि नांतरं वेद कश्चन ॥ ९९ ॥**

परिच्छिन्नज्ञानाभावसिद्ध्यर्थं तत्रैवान्यदृष्टांतमाह । यथाऽयमिति । यथ ऽयं पुमान् नीरोगो युवातिभोगी अतिप्रियया स्त्रिया परिष्वक्तो दृढमालिंगितः न बाह्यघटादिकं किमपि वेद जानाति, न किंचनांतरं मानसं दुःखादिक वेद ॥ ९९ ॥

**एवं तस्यामवस्थायां प्राज्ञात्मा लिंगितः किल ॥**
**पुरुषोऽयं न जानाति बाह्यं किंचन नांतरम् ॥ १०० ॥**

दार्ष्टांतमाह । एवमिति । एवं तस्यां संप्रसादावस्थायां प्राज्ञात्मालिंगितः प्राज्ञतां गतः पुरुषोऽयं बाह्यं किंचन किमपि वस्तुजातं न वेद, नांतरं वेद ॥ १०० ॥

**नद्वै रूपमतिच्छंदं पुंसो ऽपहतपातकम् ॥**
**अभयं चाऽपूर्वकाममात्मकाममकामकम् ॥ १०१ ॥**

माहेश्वरयोर्भेदावस्थारूपमाह । तद्वै इति । तद्वेदांतेषु प्रसिद्धं पुंसो रूपमतिच्छंदमतिक्रांतः छंदः कामो यस्मात्तत्तथा । अपहतपातकं पुण्यपापास्पृष्टं " असंगो नहि सज्जते " इतिश्रुतेः । अभयं च द्वितीयाभावात् । पूर्वं कामा अतिक्रांता इत्युक्तमपूर्वमकाममिति बोध्यम् । तद्रूपमकामम् । कुतो ऽकामम् । मनोधर्मत्वेन निष्क्रांतत्वात्कामानां तेनैव सहेति । कुतो निष्क्रांता अत आह । आप्तकाममगमापायित्वेन समाप्तत्वात् । कुतः संप्राप्ताः । यतस्तद्रूपं विचार्यमाणे आत्मकामं यत्काम्यमानं तत्तत्सर्वमात्मनि कल्पितत्वादात्मैवेति भावः ॥ १०१ ॥

**शोकांतरमिति प्राह भवत्यत्र पिताऽपिता ॥**
**माताऽमाता तथा लोका अलोका असुरासुराः ॥२॥**

एतदनंतरं पद्यपादादौ शोकांतरमिति पाठः श्रुत्यनुसारात् । तस्य पूर्वेणान्वयोऽतोपहतपापत्वात् । अकामः स एव शोकांतरं शोकशून्यमित्यर्थः । एवं प्रत्यक्षतः कामादिसंबंधराहित्यमुक्त्वेदानीं तद्धेतुकर्मात्म्यविचारदितत्वमाह । अत्रेति श्रुतिः । प्राह– अत्र सुषुप्ते स्थाने प्रकृतरूपस्यात्मनः पिता जनयिता अपिता भवति कर्महेतुकं हि जनकत्वं वदति । कर्म च अपहतपातकमित्युक्तः । तथा माता जनयित्र्यपि अमाता तद्धेतुकर्माभावात् । लोकाः कर्मविधाभ्यां जिता जेतव्याश्चालोकाः कर्मसंबंधात्ययात् । सुरा देवाः कर्मांगभूताः असुराः साध्यसाधनसंबंधाभिधायकाः ॥ २ ॥

**वेदा अवेदा अत्र स्युस्तेनो ऽस्तेनश्च जायते ॥**
**भ्रूणहा ऽभ्रूणहा चांडालो ऽचांडालश्च पौष्कसः ॥३॥**

वेदाः अवेदाः अत्र सुषुप्तौ स्युः संपद्यते । स्तेनो ब्राह्मणसुवर्णहर्ता अस्तेनः, तत्कर्तृत्वाभावात् । भ्रूणहा ब्राह्मणं हंता अभ्रूणहा । न केवलमागंतुकेन विनिर्मुक्तोऽपितु सहजेनापीत्याह । चांडालः ब्राह्मण्यां शूद्राज्जातः जात्या चांडाल एव सोऽचांडाल एव, तज्जातिनिमित्तकर्मासंबंधात् । शूद्रायां ब्राह्मणाज्जातो निषादस्तस्मात् क्षत्रियायां जातः पुल्कसः ॥ ३ ॥

अपौल्कसोऽस्ति श्रमणो श्रमणस्तापसोऽन्यथा ॥
पुण्यं पापं तथाऽन्वेति न तदा हृदयस्थितान् ॥ ४ ॥
सर्वान् शोकचयांस्तीर्णस्तदा स्यात्स्वे सुखेस्थितः ॥
शरत्सलिल इव स्वच्छ एको द्रष्टा ऽद्वितीयकः ॥ ५ ॥

स एव पौल्कसोऽपि अपौल्कसः । श्रमणः परिव्राट् स यत्कर्मनिमित्तो भवति तेन तदा विनिर्मुक्तत्वात् अश्रमणः । तापसो वानप्रस्थः सोऽन्यथा अतापसः तदाश्रमविहितकर्मसंबंधाभावादित्यर्थः । सर्वबंधजनकानां कर्मणामानत्यात् द्विधोपसंहृत्य तदवीतत्वमाह । पुण्यमिति । पुण्यं शास्त्रविहितं कर्म न अन्वेति न संबध्यते । पापं विहिताकरणनिषिद्धक्रियाकरणलक्षणं नान्वेति न संबध्यते । " नन्वागतं पुण्येनान्वागतं पापेन " इतिश्रुतेः । कुत एतद्धेतुकामाभावात् । तदा सुषुप्ते हृदयस्थितान् सर्वान् शोकचयान् तीर्णं इत्यनंतरायपादेन संबंधः । यस्मादिति वाक्योक्तरूप आत्मा तदा तस्मिन्सुषुप्तकाले हृदयस्याया बुद्धेः संबंधिनः सर्वान् शोकान् तद्धेतुभूतान्कामान् तीर्णोऽतिक्रांतो भवतीत्यर्थः । तदा तस्मिन्काले स्वे सुखे स्थितः बाह्यसुखसाधनाभावात् । कामाभावादेव शरत्सलिल इव स्वच्छः शरत्काले निर्मले जलमिव शुद्धः मलिनताया आगंतुकत्वात्तद्धेत्वभावात् तदभावः । एकः सजातीयस्य द्वितीयस्याभावात् । अद्वितीयकः विजातीयस्याभावात् । द्रष्टा साक्षान्मन संबंधाभावेऽप्यलुप्तप्रकाशः । अनेन स्वगतभेदाभावोऽपि सूचितः । तथाच श्रुतिः—' नहि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते अविनाशित्वात्, नतु तत् द्वितीयमस्ति ततो ऽन्यद्विभक्तं यत्पश्येत् ' इति ॥ ४ ॥ ५ ॥

गतिरेषा ऽस्य परमा संपदेषा पराऽस्य च ॥
एषो ऽस्य परमो लोक आनंदः परमो ऽस्य च ॥ ६ ॥

जनकयाज्ञवल्क्यसंवादरूपां श्रुतिमर्थतः पठति । गतिरिति । अस्य बुद्ध्युपाधिकस्य एषा ऽतिछंदआस्योक्ता परमा नैष्ठिकी गतिः, अन्या अप्यादिगतयस्त्वपरमास्तासामत्रैव समाप्तेः । एषाऽस्य विज्ञानमयस्य

परमोत्कृष्टा संपद्विभूतिरकृतकत्वात् । अस्य विज्ञानमयस्यैव यथोक्तः सुषुप्तौ परमात्मैक्यलक्षणः परमो मोक्षरूपो लोकनाल्लोकः स्वयञ्ज्योतिःस्वभावः । आनंदः परमोऽस्य सुषुप्तस्य एषः स्वरूपानुभवलक्षणः आनंदः परमः साधनासाध्यो निरतिशयः ॥ ६ ॥

**अस्यैवानंदरूपस्य भूतान्यन्यानि भामिनि ॥-**
**मात्रांश मुपजीवंतीत्येष दृष्टांत ईरितः ॥ ७ ॥**

" एतस्यैवानंदस्यान्यानि भूतानि मात्रामुपजीवंति " इतीमां श्रुतिमर्थत. पठति । अस्येवेति । हे भामिनि । अस्यैव ब्रह्मानंदस्य मात्रां कलां विषयेंद्रियसंबंधकाले प्रतीयमानां अन्यानि भूतानि आविद्यकानि ब्रह्मादिस्तंबपर्यंतानि उपजीवंति उपभुंजते । वस्तुतोऽस्मादन्यस्यानंदस्याभावात् । एष श्रुत्युक्तो दृष्टांत ईरितः ॥ ७ ॥

**दार्ष्टांतिकं चित्तवृत्ते यथावदवधारय ॥**
**नानाजन्मकृतासंख्यकर्मसंस्कारसंस्कृतः ॥ ८ ॥**

अथानादिकालमारभ्य संसारसागरेऽतिगंभीरे सुखदुःखादिरूपे जन्ममरणजले शोकमोहादितरंगाकुले निमज्जतो जीवस्य संसारं दर्शयित्वा यथा पुण्यवशात्कल्याणं भवति तथाऽते वैराग्योपसंहारपूर्वकं दर्शयति, दार्ष्टांतिकमित्यादिभिर्द्विचत्वारिंशद्भिः श्लोकै' । हे चित्तवृत्ते दार्ष्टांतिकमुदाहरणं यथावदवधारय निश्चिनु । एकस्मिन्नुदाहरणे निश्चितोऽर्थोऽन्यत्रापि निश्चेतुं शक्यते इत्यभिप्रायेण दार्ष्टांतिकावधारणमिति तदेवाह । नानाजन्मकृतासंख्यकर्मसंस्कारसंस्कृतः नानाजन्मभिः कृतानि असंख्यानि कर्माणि तेषां संस्कारा' तैः संस्कृतः । तद्विषयकसंस्कारविशिष्ट इत्यर्थः ॥ ८ ॥

**ब्राह्मणादिशरीराणि धर्मयोग्यान्युपागतः ॥**
**लोकवृत्तानुसारेणाधीतवेद इति स्मरन् ॥ ९ ॥**

पुन. कीदृशीं दशां प्राप्तो ऽत॰आह । ब्राह्मणादीति । धर्मयोग्यानि धर्मसंपादनसामर्थ्ययुक्तानि ब्राह्मणादिशरीराण्युपागतः । आदिना क्षत्रि-

यवेऽस्पयोर्ग्रहणम्, त्रैवर्णिकस्यैव वेदाधिकारात् । लोकवृत्तानुसारेण लोकानां वृत्तमाचारः द्विजा वेदं पठंत्येवात्मकस्तदनुसारः तदनुसरणमपि वेदं पठिष्ये इत्यात्मकस्तेन अधीतवेद इति स्मरन् लोकवृत्तं ध्यायन्नित्यर्थः ॥ ९ ॥

अध्यापनं करिष्यामि शिष्याः स्युर्बहवो मम ॥
ततो धनं गृहीत्वाऽहं भविष्यामि धनाधिकः ॥११०॥

लोकवृत्तानुसारमेव दर्शयति । अध्यापनमिति । अध्यापनं करिष्यामि। मम बहवः शिष्या भवेयुः । ततोऽध्यापितेभ्यः शिष्येभ्यो धनं गृहीत्वा धनाधिको धनवृद्धो भविष्यामि ॥ ११० ॥

याजनैरर्जितधनस्ततोऽप्यधिकवित्तयुक् ॥
कुलाद्याचार्यतां गत्वा संपत्पारमुपागतः ॥ ११ ॥

पुनः कीदृशो ऽत आह । याजनैरर्जितधनः संपादितवित्तः ततः पूर्वसंपादितात् अधिकवित्तयुक् अधिकधनसंपन्नः कुलाद्याचार्यताम् । आदिना वर्णादिपरिग्रहः । गत्वा आचार्यत्वं स्वीकृत्य संपत्पारं संपदां समृद्धीनां पारमंतं प्राप्तः ॥ ११ ॥

तर्पयिष्यामि गृहिणीं वस्त्रालंकारभोजनैः ॥
वंचयित्वाऽपि पितरौ खाद्यैः परिमलैरिति ॥ १२ ॥

संसारमेव विवृणोति । तर्पयिष्यामीति । वस्त्रालंकारभोजनैः वस्त्राणि चार्वोवस्त्रादीनि अलंकाराः कर्णघ्राणभूषणादीनि भोजनानि भुजिक्रियायोग्यानि खंडघृतदुग्धादीनि तैः । ननु पित्रादिभ्यो दातव्यं धर्मशास्त्रानुसारादित्याशंक्य धर्मः कोपभोक्ष्यते तत्कालमैहिकफलमेव कृत्यं करिष्यामीत्याह । वंचयित्वाऽपि वर्जयित्वापि । पितरौ माता च पिता च तौ । खाद्यैः खादितुं भक्षयितुं योग्याः खाद्या अपूपलड्डुकादयः तैः । परिमलैर्जनमनोहरैः गंधैः 'विमर्दोत्थे परिमलो गंधे जनमनोहरे' इत्यमरः ॥ १२ ॥

दर्शनानि पठंत्येवं लाभं पूजां यशः स्मरन् ॥
कृतोद्वाहोऽथ कलत्रं पित्रा मात्रा ऽग्रजेन वा ॥१३॥

नन्वीदृशस्य शास्त्राण्युपकरिष्यंति नेत्याह। दर्शनानीति। दर्शनानि शास्त्राणि एवं पठंति। एवं कथम्। लाभं पूजां यशः स्मरन्, लाभार्थमेव शास्त्राणि चरितार्थानि। ननु परलोकोपकारीणीत्यर्थः। अथानंतरं गृहिणीमिति पूर्ववासनां साधयन् कृतोद्वाहः कृतपरिणयनः। साक्षान्मायावतारगृहिणीसंबंधे जाते एव पित्रा मात्रा ऽग्रजेन ज्येष्ठेन वा इत्यादित्रितीयांतानामनंतरपूर्वार्धेनान्वयः। कलनं कलहम्॥ १३॥

अन्येन वा पालकेन सह कृत्वा पृथक् स्थितः॥
गृहे गृहिण्यैवाक्रांते तदीयत्वेन विश्रुते॥ १४॥

अन्येन वा पालकेनान्नादिदात्रा सह कलहं कृत्वा पृथक्स्थितो विभक्तः। यथा मायया जीवो विभाजितस्तथा ऽयमपीति भावः। श्लोविंशं प्रासस्य स्वरादिसादृश्यं सार्धेनाह। गृहे इति। हे तन्वि पुरुषः त्वत्प्रसादेन प्रायशः गृहे वसति। अहंताममतादिवृत्त्यैव वशीकृतो गृहाश्रमी भवतीत्यर्थः। बाहुल्येन सामान्यतो ग्रहासक्तानां व्यवहारः। कीदृशे गृहे। गृहिण्यैव गृहाधिष्ठात्र्या पत्न्या स्वायत्तीकृते। पुनः तदीयत्वेन विश्रुते 'गृहिण्या एव गृहम्' इति प्रसिद्धे, गृहिणीशब्दयोगशक्तेस्तस्यामेव संभवात्। गृहं विद्यते यस्याः सा गृहिणीतिनिरुक्तेः॥ १४॥

खरगोश्वबिडालानुचरभावमुपागतः॥
वसति प्रायशस्तन्वि त्वत्प्रसादेन पूरुषः॥ १५॥

एवं सति पुरुषः कीदृशः। खरगोश्वबिडालानुचरभावमुपागतः खरो गर्दभः, गौर्बलीवर्दः,श्वा सारमेयः, बिडालो मार्जारः, तेषां अनुचरभावं शिष्यभावं तद्वद्गृहीतवृत्तिकत्वम्। यथा खरः खर्या पादताडितोऽपि तां न त्यजति। यथा बलीवर्दः त्यक्तभारोऽपि शकटीमनुगच्छत्येव। श्वनको यथा काष्ठादिना ताडितोऽपि गृहं न मुंचति। मार्जारः कदाचित् दुग्धादिरसमनुभूय पुनस्ताडितोऽपि न तद्गृहं त्यजति। इंद्रियजितस्य गृहिणो ऽर्चनादिकमपि बिडालध्यानवदेवामुपकदर्शनमेव ध्यायतीते प्रसाद इति भावः॥ १५॥

अथ जातेष्वपत्येषु तन्मूत्रामेध्यचर्चितः ॥
जनेषु श्लाघतेऽत्यर्थमेषा मे कन्यका खलु ॥ १६ ॥

संप्रति जातपुत्रस्य धनाशां वर्णयति । अथेति सार्धद्वयेन । अथ अनंतरमपत्येषु पुत्रादिषु जातेषु तन्मूत्रामेध्यचर्चितः अपत्यमूत्रामेध्याभ्यां मूत्रपुरीषाभ्यां संयुक्तः सन् जनेषु लोकेषु स्थित्वा ऽत्यर्थमतिशयेन श्लाघते स्वौत्कृष्ट्यं वर्णयति । कथं श्लाघते । एषा मे कन्यका खलु स्वभर्तृवंशविवर्धनी । अहो मे भाग्यं पश्यत लोका-यन्ममांगेषु पुत्रसूत्रमेध्यचर्चनं, पुत्रादिकं विना कुत ईदृशी दशेति ॥ १६ ॥

पंचमासस्तुतश्चायं गृहिण्यस्ति गुरूदरी ॥
इत्येवमादिभिः कृत्यैर्नरा दारादितत्पराः ॥ १७ ॥

केन चित्पृष्ट-पुत्रोऽस्ति कुलालंकार इति । उत्तरमुवाच-अयं भवतां चरणारविंदमधुकरः चिरंजीवी पंचमासस्तुतो वर्तते-। अन्योऽप्यस्ति किमत आह । गृहिण्यस्ति गुरूदरी, स्थूलगर्भिणीत्यर्थ । इत्येवमादिभिः कृत्यैः कार्यविशेषैः दारादितत्पराः दारपंति-दाराः आदिर्येषां पुत्रादीनां नरा दारादयः तेषु तत्पराः । अहर्निश तद्योगक्षेमचिंतातुरा नराः । इत्यस्यानंतरपूर्वार्धेनान्वयः ॥ १७ ॥

नयंति यौवने कालं स्वर्णालभ्यक्षणं परम् ॥
अथ वृद्धत्वमापन्ने प्रिया त्यक्त्वांगमुत्तमम् ॥ १८ ॥
डिंडीरपिंडसदृशं मुखं सर्पविलोपमम् ॥
कार्पासबीजसदृशे नेत्रयोः कृष्णतारके ॥ १९ ॥

यौवने स्वर्णालभ्यक्षणं परं कालं नयंतीति संबंधः। स्वर्णेनालभ्यः क्षणो यस्य तत्तथा । स्वर्णेनापि न प्राप्यते स क्षणः चेत् परब्रह्मपरायणता यस्मिन् क्षणे भवेत् तर्हि वृथैव कालं नयंतीति भावः । संप्रति दुःखबहुलां वृद्धावस्थां निरूपयति । अथेति सार्धसप्तभिः । अथेत्यनंतरं वृद्धत्वमापन्ने तस्मिन्पुरुषे तस्य प्रिया प्रेमपात्रीभूता पत्नी तं परित्यजतीत्युत्तरत्र सप्तमेनान्वयः । किं कृत्वा । तस्य भर्तुः उत्तममंगं शिर

डिंडिरपिंडसदृशं डिंडीरस्य फेनस्य पिंडः समूहः तेन तुल्यं 'डिंडीरोऽब्धिकफः फेनः' इत्यभिधानात्। वीक्ष्य दृष्ट्वा। इत्यतो द्वितीयांतानामनयैव संबंधः। तथाहि पुनः किं कृत्वा। सर्पविलोपमं सर्पस्य विलमुपमा यस्य तन्मुखं वीक्ष्य। पुनः कार्पासबीजसदृशे कार्पासस्य बीजं तत्तुल्ये नेत्रयोः कृष्णतारके कनीनके 'तारकाऽक्ष्णः कनीनका' इत्यमरः॥ १८॥ १९॥

**रिक्तपेशीसमाकृत्ति दरीतुल्यमथोदरम्॥**
**चलपत्रदलप्रख्यां कंधरां धमनिश्रिताम्॥ १२०॥**

पुनः रिक्तपेशीसमाकृतिं रिक्ता चासौ पेशी अंडः तत्समा तुल्या समंताकृतिश्चर्म शरीरत्वक् ताम्। पुनः दरीतुल्यमथोदरं दरी चर्मनिर्मिता नदीतरणसाधनं तत्तुल्यमुदरम्। पुनः चलपत्रदलप्रख्यां चलपत्रोऽश्वत्थः तस्य दलं पत्रं सदाचलं तेन प्रख्यां सदृशीं कंधरां ग्रीवां धमनिसंश्रितां धमनिभिर्नाडीभिः संश्रितां धृताम्॥ १२०॥

**कंठं घुरघुराशब्दयुक्तं व्याघ्रगलोपमम्॥**
**अधिज्यधनुषातुल्यं पृष्ठं वंशास्थिसंभृतम्॥ २१॥**

कंठं घुरघुरा इत्यनुकरशब्दयुक्तम्। कस्य शब्दवत्। व्याघ्रगलोपमं व्याघ्रः सिंहः तस्य गलं कंठो यथा घुरघुराशब्दमव्यक्तरवं करोति तथाऽस्य कंठम्। अधिज्यधनुषा अधिगता ज्या यस्य तदधिगतज्यं तच्च धनुः तेन सदृशं पृष्ठ पृष्ठभागं, वंशास्थिसंभृतं वंशेन युक्तानि अस्थीनि तैः भृतं संपादितम्॥ २१॥

**तूलगोलसमं शिश्नं नितंबं मुष्टिसंमतम्॥**
**नासां गलच्छ्लेष्मबिंदुमुक्ताफलविभूषिताम्॥ २२॥**

तूलगोलसमं शिश्नं तूलस्य कार्पासस्य गोलः तेन समं तुल्यं, शिश्नं मेढ्रम्। मुष्टिसंमतं मुष्टिपरिमितं नितंबं पृष्ठाधोभागे मांसपिंडद्वयम्। नासां गलत्श्लेष्मबिंदुमुक्ताफलविभूषितां, गलन्नासिकाछिद्रात् पतन् श्लेष्मा कफः तस्य बिंदुः मुक्ताफलमिव तेन विभूषितामलंकृताम्॥२२॥

नष्टकूष्मांडगंधाढ्यं वीक्ष्यास्यानिलमन्वहम् ॥
चंडालस्पर्शसदृशं मत्वा तत्स्पर्शमात्मनि ॥ २३ ॥

नष्टकूष्मांडगंधाढ्यं नष्टं गलितं कूष्मांडस्य फलं तस्य गंधः पूतिगंधस्तेनाढ्यं युक्तमास्यानिलं मुखवायुं वीक्ष्याघ्राय अन्वहं प्रतिदिनमात्मनि स्वदेहे तत्स्पर्शं पतिदेहस्पर्शं चाण्डालस्पर्शसदृशं चांडालस्य स्पर्शोऽतिनिषिद्धः तेन सदृशं मत्वा ॥ २३ ॥

परित्यजति तं स्वामी यथा दासमशक्तिकम् ॥
पुत्रा उपहसंत्येनं सुतरां च स्नुषा ऽसती ॥ २४ ॥

तं भर्तारं परित्यजति । कथं परित्यजति । स्वामी राजादिः यथाऽशक्तिकं न शक्तिर्यस्य तथा तं दासं सेवकं परित्यजति तथा । पुत्रा उपहसति । एनं पितरम् । च पुनः स्नुषा पुत्रवधूः असती हसति । सती चेत्कथं हसेत् अत अकारच्छेदः कर्तव्यः ॥ २४ ॥

कदाचित्कश्चिदप्येतत्पालितेषु जनेषु तम् ॥
भूतोपयोगमपि न प्रतिपत्त्यापि सेवते ॥ २५ ॥

कदाचित्कस्मिंश्चिदपि काले पालितेषु रक्षितेषु पुत्रादिषु जनेषु तं भूतोपयोगमपि भूतो जात उपयोगो रक्षणादिरूपो यस्य तमपि प्रतिपत्त्यापि वयमुपकृताऽनेनेति प्रतिपत्त्या ज्ञानेनापि न सेवते न भजते इत्यर्थः ॥ १२५ ॥

प्रासे सन्निहिते मृत्यौ यथा ऽनः सुसमाहितम् ॥
उत्सृजयात्येवमात्मा शरीरस्योर्द्ध्वमुच्छ्रसन् ॥ २६ ॥

स्वप्नजागरणमाभिवच्छोकांतरमाह श्रुत्युक्तदृष्टांतपूर्वकमाह सार्धद्वयेन । प्रासे इति । सन्निहिते मृत्यौ मरणे प्रासे यथाऽनः लोके अनः शकटं सुसमाहितं सुष्ठुभृशं वा मुसलादिगृहोपस्करैः सपन्नं सत् उत्सर्जयाति नानाविध शब्दं कुर्वन् गच्छेत् । यथाऽयं दृष्टांतः एवमेवायं शरीरस्यैवं वी आत्मा लिंगात्मा आत्माविष्टं लिंगं वा उर्ध्वं उच्छ्रसन् उर्ध्वोच्छ्वासी भवति ॥ २६ ॥

**याति प्राज्ञेनात्मना समन्वारूढः सुलोचने ॥**
**आम्रमौदुंबरं वाऽपि पिप्पलं वाऽन्यवृक्षतः ॥ २७ ॥**

हे सुलोचने प्राज्ञेन स्वयंज्योतिःस्वभावेनात्मना स्वचिदाभासद्वाराऽन्वारूढो व्याप्तो भातुना स्वप्रतिबिंबद्वारोदपात्रवत् मरणकालिकानेकवेदनार्तः सन् उत्सृजन् हिक्कादिशब्दं कुर्वन् याति गच्छति। एवं सति यदोत्सर्जयाति तदा कथं शरीरं त्यजतीति विवक्षायां तत्सदृष्टांतमाह। आम्रमिति। आम्रस्य फलमाम्रमुदुंबरस्य फलमौदुंबरं पिप्पलं वाऽन्यत्फलम् ॥ २७ ॥

**प्रमुच्यते तथाऽयं ना स्वांगेभ्योऽपि प्रमुच्यते ॥**
**ततोऽवस्थामंतकाले तस्याकर्णय भामिनि ॥ २८ ॥**

बंधनात् वातादिनिमित्तवशात् प्रमुच्यते विमुच्यते विछिद्यते यथा तथा ऽयं ना पुरुषः पूर्वोक्तचिदाभासप्रकाशितः सन्स्वांगेभ्यः देहावयवेभ्यश्चक्षुरादींद्रियस्थानेभ्यः संप्रमुच्यते सम्यगेकीभावेन प्रकर्षेण निर्लेपेन मुच्यते। कथंभूत आत्मा अक्षतः निर्विकारः सन्नेवं देहं त्यजति। ननु फलं तु क्षतमपि भवतीति चेन्नाक्षतफलस्यैव दृष्टांतत्वेन विवक्षितत्वादिति अंतकाले ऽवस्थां वर्णयितुं प्रतिजानीते। तत इति। हे भामिनि तस्य पूर्वोक्तस्य परलोकादिगंतुरात्मनोंऽतकालेऽऽवस्थामंतकालदशामाकर्णय शृणु ॥ २८ ॥

**न वदति न शृणोति नेक्षते ऽसौ**
**न रसयते मनुते न जिघ्रतीह ॥**
**स्पृशति न किमपीति नोविजाना-**
**त्यपिकिमपीति वदत्सु बंधुपूर्वैः ॥ २९ ॥**

अंतकालावस्था कीदृशीत्यत आह। न वदतीति। इति बंधुपूर्वैस्स्वरेण वदत्सु कथयत्सु या दशा भवति सा ज्ञेयांऽतकालावस्थेति शेषः। बंधवः समागत्य तत्र किं वदत्यंतं आह। न वदतीति। असौ वाग्व्यापारं न करोति। न शृणोति शब्दमिति शेषः। नेक्षते न पश्यति। अहं चे

मिथः पुत्रः अहं ते मियो भ्रातेत्यादिशब्दैः प्रेरितोऽपि न वदनादिव्यापारं करोति । न रसयते रसनाव्यापारमपि न करोति । कटुत्यक्तादिरसं नानुभवतीत्यर्थः । न जिघ्रति गंधो नोपादत्ते । किमपि न स्पृशति, किमपि शीतमुष्णं नानुभवतीत्यर्थः । न मनुते संकल्प विकल्पं वा न करोति । संकोचे मानाभावादाह । नो विजानाति किमपि सामान्यज्ञानं नास्तीति । वक्तुः श्रोतुः द्रष्टुः रसयितुर्मंतुर्घ्रातुः स्प्रष्टुर्विज्ञातुश्चाभावादिति भावः ॥ २९ ॥

जलायुका तृणस्यांतं गत्वा ऽऽक्रम्य तृणांतरम् ॥
यथोपसंहरत्यात्मस्वरूपं प्राक्तृणस्थितम् ॥ १३० ॥

उत्सर्जच्चातीत्यस्य शाकटवत्कि संभारस्थानीयं पाथेयं किंवा गंतव्यशरीरारंभकमित्यत उक्तं श्रुतौ तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा चेति, विद्याशब्देन विहितप्रतिसिद्धादिरूपमात्मज्ञानव्यतिरिक्तं ज्ञानमात्रमुच्यते, वाङ्मनःसाध्यं सर्वकर्मशब्देनोच्यते, तदुत्पन्नफलभोगजनितः संस्कारः पूर्वप्रज्ञाकार्यकारणयोर्द्वंद्विध्यार्थं समासः, तदकरणे परलोकाय गच्छंतं विद्याकर्मणी अनुगच्छतः पूर्वप्रज्ञा चेति त्रयं शुभमेवानुग्रेपमिति तात्पर्यार्थमेवं संभृतसंभारो देहांतरं प्रतिपद्यमानः कथं प्रतिपद्यते ऽतः श्रुत्युक्तदृष्टांतपूर्वकमाह द्वाभ्याम् । जलायुकेति । यथा तृणजलूका पूर्वतृणस्थितमात्मस्वरूपं पूर्वावयवमुपसंहरति ॥ ३० ॥

तथा ऽयं पुरुषो देहांतरमाक्रम्य कर्मतः ॥
पूर्वदेहात्स्वस्वरूपमुपसंहरति क्षणात् ॥ ३१ ॥

तथा तृणजलूकावदयं पुरुषः पूर्वदेहात् पूर्वोपात्तं देहं निहत्य स्वप्नप्रतिपत्स्विव पातयित्वा ऽविद्यां गमयित्वा ऽचेतनं कृत्वा देहांतरं शरीरांतरमाक्रम्य कर्मतः कर्मफलभूतं प्रसारितया वासनयैव केवलं गृहित्वा स्वस्वरूपं क्षणात् तत्क्षणमेवोपसंहरति । यदेवं तत्रैवाहमित्यात्मभावं प्रतिपद्यते न तु पूर्वदेहे । एतादृशावेव ग्रहणत्यागौ न विपरीतार्थकावित्यर्थः ॥ ३१ ॥

पेशस्कारी यथा पेशो मात्रामात्रमुपागतः ॥
अन्यन्नवतरं रूपं कल्याणं कुरुते जवात् ॥ ३२ ॥

एवं शरीरांतरमुपादत्ते भूतपंचकारभ्यमाणं प्रतिगच्छति, तत्किं भूतपंचकम्, नित्योपात्तमेव पूर्वदेहोपमर्देन पुनर्देहांतरमारभ्यते, अहोस्विदन्यदन्यद्देहमारभ्यते इति संदेहे द्वितीये पक्षे नानाभावादित्यभिप्रेत्य प्रथमपक्षमेवांगीकृत्य श्रुत्युक्तदृष्टांतं कथयन्नाह त्रिभिः। पेशस्कारीति। तत्र दृष्टांतो यथा लोके पेशः सुवर्णं तत्करोतीति पेशस्कारी सुवर्णकारः पेशस सुवर्णस्य मात्रामात्रमुपागतः सुवर्णभागं गृहीत्वा अन्यत् नवतरं पूर्वस्माद्रचनाविशेषात् नवादपि नवतरमभिनवतरं कल्याणात् कल्याणतरं रूपं कुरुते तनुते निर्मिनोति जवात् ॥ ३२ ॥

तथैव पुरुषः पूर्वं परित्यज्य कलेवरम् ॥
अन्यन्नवतरं रूपं कल्याणं कुरुते स्वकम् ॥ ३३ ॥

दार्ष्टांतमाह। तथैवेति। पुरुषस्तथैव पूर्वं कलेवरं शरीरं परित्यज्य अन्यन्नवतरं कल्याणं रूपं स्वकं स्वीयं स्वरूपं कुरुते निर्मिमीते॥ ३३॥

पित्र्यं गांधर्वमथवा दैवं ब्राह्म्यमथापि वा ॥
प्राजापत्यमथाऽन्येषां भूतानां च यथाक्रियम् ॥३४॥

किं तदित्यत आह। पित्र्यमिति। पितृभ्यो हितं पितृलोकभोगयोग्यम्, अथवा गांधर्वं, दैवं, ब्राह्मं ब्रह्मा हिरण्यगर्भः तल्लोकभोगयोग्यं, प्राजापत्यं विराड्लोकभोगयोग्यम्। किंबहुना यथाकर्म यथाश्रुतमन्येषां भूतानां प्रेततिर्यगादिशरीरं कुरुते इति प्रत्येकं संबध्यते। यथाक्रियं क्रियते इति क्रिया व्यापारमात्रं तामनतिक्रम्य यथाक्रियं कर्मानुसारादुत्कृष्टानुत्कृष्टदेहमिति भावः॥ ३४ ॥

एवं परिभ्रमन्नस्मिँल्लोके मुंचिमश्च सर्वदा ॥
अविद्यावुद्धिनिर्मग्नो नोन्मज्जति कदाचन॥ ३५ ॥

नन्वेवं संसारसागरे निमग्नः सन् कदाचिदुन्मज्जेदपीत्यत आह। एवमिति। एवं पूर्वोक्तप्रकारेणास्मिन् लोके ऽमुष्मिंश्च परलोके सर्वदा

परिभ्रमन् अविद्याबुद्धिनिर्मग्नः अविद्या मूलाज्ञानं बुद्धिश्च तज्जन्यभ्रांतिः तत्र निर्मग्नो भ्रांतिविषयग्रस्तो भ्रांतिविषयानेव पश्यति । ननु स्वरूपमपीत्याशयेनाह । नोन्मज्जति कदाचन ईश्वरानुग्रहं विना न विमुच्यत इत्यर्थः ॥ ३९ ॥

कुर्वतः कर्म कर्मैव श्रेयोरूपं वदंति ये ॥
मूढाः कापुरुषा भूयो जरां मृत्युं प्रयांति ते ॥३६॥

नन्वीश्वरानुग्रहेणैव चेत् ज्ञानं तदा 'कर्मणैव हि संसिद्धिमास्थिता जनकादयः' इत्यादिस्मृतेः का गतिरित्याशंक्येश्वरार्पितकर्मपरत्वात्स्मृतेः केवलकर्मणः संसारहेतुत्वमेवेत्याशयेनाह । कुर्वत इति । ये कर्म कुर्वतः । ईश्वरार्पणबुद्धिं विनेति शेषः । कर्मैव श्रेयोरूपं श्रेयःसाधनं वदंति । मूढा बाल्याः कापुरुषाः कुत्सिताः पुरुषाः " पुरुषे त्वेव आविस्तरामात्मा " इतिश्रुतिप्रतिपादिताविर्भावसाधनपुरुषदेहफलात्मज्ञानाभावात् । भूयः पुनःपुनः जरां मृत्युं मरणं ते प्राप्नुवंति । तथाच श्रुतिः–"पराचः कामाननुयंति बाल्यास्ते मृत्योर्यांति विततस्य पाशम् " इति । मृत्योरविद्यादिसमुदायस्य विततस्य विस्तीर्णस्य पाशं पाश्यंते बध्यंते ऽनेन पाशः तं पाशं देहेंद्रियादिसंयोगवियोगलक्षणम्, अनवरतं जन्ममरणजरारोगाद्यनेकानर्थव्रातं प्रतिपद्यंत इत्यर्थः ॥३६॥

पराग्वृत्तीनींद्रियाणि कृत्वा हिंसितवान् विभुः ॥
अतः पराग् जनः पश्यन्नांतरात्मानमीक्षते ॥ ३७॥

ननु भावानां जन्ममरणं कथमिति तत्राह । परागिति । विभुः परमेश्वरः इंद्रियाणि पराग्वृत्तीनि पराक्षु बाह्येषु विषयेषु वृत्तिर्येषां तानि कृत्वा हिंसितवान् हननं कृतवान् । कथं तेषां हननं नाशः नष्टानां च न विषयोपनयनद्वारा ऽनर्थहेतुता इति चेद्यदींद्रियाण्यंतर्मुखानि स्युस्तदा तान्यात्मनिष्ठतया अमृतत्वसाधनानि इत्यत इंद्रियाणि बहिर्मुखानि सृष्टानीति यत्तेषां हननमेव कृतमितिभावः। अतः पराङ्मुखत्वादेव जनः पराग् पराक्‌पान् शब्दादिविषयानेव पश्यन् उपलभ्यते, नांतरात्मानमी-

क्षते । तथाच श्रुतिः– "पराञ्चि खानि व्यतृणत्स्वयंभूस्तस्मात्पराङ् पश्यति नांतरात्मन्" इति । परमात्मा खानींद्रियाणि परांचि बहिर्मुखानि व्यतृणत् हिंसितवान् । तस्माज्जनः पराङ् बाह्यान् विषयान् पश्यति । नांतरात्मानमिति विभक्तिलोपश्छांदस इति तदर्थः ॥ ३७ ॥

जन्मजन्मांतराभ्यस्तपुण्योपचयवान् पुनः ॥
ईक्षते प्रत्यगात्मानमावृताक्षो ऽमृतेच्छया ॥ ३८ ॥

नन्वेवं सत्यनिर्मोक्षापत्तिरित्यत आह । जन्मेति । जन्मजन्मांतराभ्यस्तपुण्योपचयवान् अनेकजन्मस्वभ्यस्तानि पुण्यानि पुण्योत्पादकानि ईश्वरार्पणबुद्ध्यानुष्ठितानि नित्यादीनि तेषामुपचयः समूहस्तद्वान् । 'अनेकजन्मसंसिद्धस्ततो याति परां गतिम्' इतिस्मृतेः । पुनः शुद्धांतःकरणः । प्रत्यगात्मानं प्रत्यक् चासावात्मा चेति प्रत्यगात्मा । प्रतीच्येवात्मशब्दस्य रूढत्वात् । योगेनापि आप्नोति आत्मा व्यापकः, आदत्ते सर्वमुपसंहरति आत्मा, सर्वोपादानं विषयानत्ति उपलभते आत्मा, अतति सातत्येन गच्छति आत्मा, निरंतरमकाशोऽधिष्ठानभूतो जगतोऽतिरिक्तसत्ताभावात् पूर्णः । उक्तंच–"यदाप्नोति यदादत्ते यच्चात्ति विषयानिह ॥ यच्चास्य संततो भावस्तस्मादात्मेति कीर्त्यते" इति । ईक्षते साक्षात्करोति । कीदृशः । आवृताक्षः संयतेंद्रियः । कया, अमृतेच्छया आत्मनो नित्यस्वभावेच्छया । तथाच श्रुतिः–" कश्चिद्धीरः प्रत्यगात्मानमैक्षद् आवृत्तचक्षुरमृतत्वमिच्छन् " इति ॥ ३८ ॥

भ्रांतः परिभ्रमणतश्चक्रे संसारसंज्ञिके ॥
मोक्षं वांच्छन् क्रमेणायमकृतो नैव लभ्यते ॥ ३९ ॥

ननु पुण्योपचयवान् प्रत्यगात्मानमीक्षते इत्युक्तं साधनचतुष्टयं विना कथमात्मदर्शनमित्याशंक्य साधनचतुष्टयाभिव्यंजकपुण्योत्पत्त्यात्मदर्शनाधिकारी भवतीत्याह । भ्रांत इति । संसारसंज्ञिके चक्रे परिभ्रमणतः ऊर्ध्वाधो गमनतः भ्रांतः भ्रमवान् जातः ।

मोक्षं वांच्छन् । मुमुक्षावान् कर्मणा कथं न लभ्यतेऽत आह । कृतेन अनुष्ठितेन कर्मणा अयमात्मा नैव लभ्यते । अकृतः नित्य आत्मरूपो मोक्ष इत्यर्थः ॥ ३९ ॥

**इति निश्चित्य विज्ञानात्तल्लाभमवधार्य च ॥**
**विज्ञानार्थं गुरुं याति श्रोत्रियं ब्रह्मवित्तमम् ॥४०॥**

मुमुक्षां लब्ध्वा किं करोति इत्यत आह । इति निश्चित्येति । अकृतः कृतेन न लभ्यते इति निश्चित्य । च पुनः विज्ञानात्तल्लाभमवधार्य विज्ञानार्थं श्रोत्रियं वेदांतनिष्णातं ब्रह्मवित्तमं ब्रह्म विदुत्तमं गुरुं याति ॥ ४० ॥

**समित्पाणिर्यतो वेदाचार्यवान्पुरुषः परम् ॥**
**ब्रह्मवित्परमाप्नोति ह्युपश्रुत्य श्रुतेः शिखाम् ॥४१॥**

कीदृशो यातीत्याह । समित्पाणिरिति । समित्पाणिर्गुरुं यातीति पूर्वेण संबंधः । आचार्यवान् पुरुषः परं वेद साक्षात्कारवान् ब्रह्मवित् परमाप्नोति । हि यस्मात् श्रुतेः शिखां श्रुतेः वेदस्य शिखामंतं वेदांतवाक्यमुपश्रुत्य ब्रह्मवित् ब्रह्मसाक्षात्कारवान् परं ब्रह्म प्राप्नोति । मुक्तो भवतीत्यर्थः ॥ ४१ ॥

**ब्रह्म वेद भवेद्ब्रह्मेत्यपरामवधार्य च ॥**
**नावेदविन्मनुते बृहंतमिति चापराम् ॥ ४२ ॥**

एतदर्थकं श्रुत्यंतरमाह । ब्रह्मेति । ब्रह्म यः प्रत्यगात्मानं ब्रह्म सर्वाधिष्ठानं वेद साक्षात्करोति स ब्रह्म भवेत् भवति " ब्रह्मवित् ब्रह्मैव भवति " इतिश्रुतेः । इत्यपरामेतदर्थकामवधार्येति निश्चित्य तं बृहंतं परिपूर्णमवेदविदवेदार्थवित् न मनुते न पश्यति । चेति अपरामवधार्य इत्येवं निश्चिनुते इत्युत्तरेणान्वयः । चशब्दः समुच्चयार्थः । " तं त्वौपनिषदं पुरुषं पृच्छामि " इत्यादीनामिति ॥ ४२ ॥

**तमेव धीरो विज्ञाय प्रज्ञां कुर्यादितीतराम् ॥**
**तं विदित्वाऽत्येति मृत्युं पंथा नान्यस्तदाश्रये॥४३॥**

आत्मज्ञानमेव निःश्रेयससाधनमस्मिन्नर्थे साक्षीभूते अन्ये श्रुती आह ।

तमेवेति । धीरो धीमान् ब्राह्मणस्तमेवोक्तरूपमात्मानं विज्ञाय पदार्थशुद्धिं संपाद्य शास्त्रतः उपदेशतश्च प्रज्ञां वाक्यार्थभूतामनेकशोकाकांक्षाशांतिलक्षणां स्वरूपाभिव्यक्तिरूपमोक्षसंपादिकां कुर्यात् संपादयेत् । तस्मान्मो साधनांतरं निषेधति । तमिति । तमात्मानं त्वंपदलक्ष्यं तत्पदलक्ष्यत्वेन विदित्वा साक्षात्कृत्य मृत्युं जन्ममरणलक्षणसंसारमत्येति अतिक्रामति । तदाप्तये ब्रह्मप्राप्तयेऽन्यः पंथा मार्गो न विद्यते ॥ ४३ ॥

इत्यर्थबोधिकां चान्यामेवं निश्चिनुते नरः ॥
ब्रह्मज्ञानं परं मुक्तिसाधनं किंच नापरम् ॥ ४४ ॥

नरः अधिकारिजनः एवं निश्चिनुते निश्चयं करोति । एवं कथम् । इत्यर्थबोधिकाम् । इतीति किम् । ब्रह्मज्ञानं परं साक्षान्मुक्तिसाधनं, नापरम् । अन्यस्य कर्मादेः साक्षात् मुक्तिसाधनत्वाभावादित्यर्थः ॥ ४४ ॥

ज्ञानादेव तु कैवल्यमिति मे निश्चयः परः ॥
ज्ञानं तु तन्न स्वरूपरूपं भवितुमर्हति ॥ ४५ ॥

एवं मोक्षस्य ज्ञानसाध्यत्वे प्रमाणानि निरोच्याधुना मोक्षसाधनं ज्ञानं ब्रह्मरूपं चिदाभासरूपं वेति विचारयति चतुर्भिः । ज्ञानादिति । ज्ञानादेव न तु कर्मादितः कैवल्यं केवलभावो ब्रह्मभावः । अनेन सर्वेतुष्टयपक्षो न सिद्धांत इति सूचितमित्याशयेनाह । इति मे निश्चयः परः परमसिद्धांतः । तत्र न तावदाद्य इत्याह । ज्ञानं त्विति । तुराक्षेपकः । तत् ज्ञानं स्वरूपरूपं ब्रह्मणः स्वरूपमेव रूपं यस्य न तद्भवितुमर्हति ॥ ४५ ॥

उपायोपेययोरैक्यापत्तेः[1] किंच स्वरूपतः ॥ यदि
स्वरूपप्राप्तिः स्यात् कादाचित्का न सा भवेत् ॥ ४६ ॥

प्रतिज्ञायां हेतुमाह । उपायेति । उपायश्च उपेयश्च उपायोपेयौ साधनफले तयोरैक्यापत्तेरभेदापत्तेः । अस्मिन्नेव पक्षे दूषणांतरमाह । किंचेति । स्वरूपतः स्वरूपेण यदि स्वरूपप्राप्तिः साधनफलयोरैकत्वे स-

1 तत्भीप्त्यादिमु[illegible]

ज्ञानात्पत्तिरस्त्येव सा प्राप्तिः कादाचित्का न भवेत् । अपितु सर्वदा साधनं विनाऽपि मोक्षापत्तेरित्यर्थः ॥ ४६॥

वृत्तिरूपो चिदाभासः सर्वदैव प्रकाशते ॥
अतोऽपि ब्रह्मणोऽवाप्तिर्न कदाचित्कतां व्रजेत् ॥ ४७ ॥

द्वितीयपक्षेऽपि दूषणमित्याह । वृत्तीति । वृत्तिरूपो चिदाभासः वृत्तिफलितश्चिदाभासः सर्वदैव प्रकाशते, यदा वृत्तिरुत्पद्यते तदा चैतन्यदीपितैव जायते, चैतन्यस्य नित्यपरिपूर्णत्वात् । यथा घट उत्पद्यमान आकाशपूर्ण एव उत्पद्यते तथा । अतोऽपि ब्रह्मणः प्राप्तिर्न कदाचित्कतां व्रजेत्सर्वस्य मोक्षापत्ते । साधनवैयर्थ्यापत्तेरिति भाव ॥४७॥

तस्माद्वृत्त्या तया भाव्यं या विलीनप्रपंचकम् ॥
गाहते ब्रह्म यत्साक्षादपरोक्षाच्छ्रुतीरितम् ॥ ४८ ॥

तर्हि कीदृशी वृत्तिरित्यत आह । तस्मादिति । यद्ब्रह्म साक्षादपरोक्षात् साक्षादपरोक्षं श्रुतीरितं यत् साक्षादपरोक्षादितिश्रुतिप्रतिपादितं कूटस्थं निर्विकारं त्वंपदलक्ष्यं तत्पदलक्ष्यरूपं ब्रह्म । या वृत्तिः । विलीनप्रपंचकं विलीनः प्रपंचो यत्र तत् । अवगाहते विषयीकरोति । स्वस्या अपि प्रपंचांतर्गतत्वेन विलीनत्वं विवक्ष्यते तया वृत्त्या भाव्यम् । न च नाशकाभावात्कथं तस्या नाश इति वाच्यम् । कतकरजोवत् दग्धलोहपीतांबुवत् दग्धतृणकूटवह्निवच, तस्याः स्वनाशेऽन्यानपेक्षणात् । उक्तं च—' तृणादेर्भासिकाऽप्येषा सूर्यदीप्तिस्तृणं दहेत् ॥ सर्पकातमुपारुह्य तं न्यायं तत्र योजयेत् ' इति ॥ ४८ ॥

तद्धेतुमानं च मया स्वयं ज्ञातुं न शक्यते ॥
तत आचार्यमेवाहमनुसृत्य कृतार्थताम् ॥ ४९ ॥
गमिष्यामीति शरणं गुरुं शिष्यो ऽभ्युपेति तम् ॥
इतःपरं चित्तवृत्ते त्वदधीनमिवेक्ष्यते ॥ १५० ॥

"समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्" इतिश्रुत्यपदिष्टं गुरूपसदनमाह

सार्धेन । तद्धेतुमानमिति । तद्धेतुश्च मानं च तद्धेतुमानं तत्र हेतुं प्रमाणं च मया स्वयं ज्ञातुं न शक्यते तत आचार्यं ब्रह्मोपदेशकं स्वयं ब्रह्मनिष्ठमेवानुसृत्य तत्समीपं गत्वा कृतार्थतां कृतकृत्यतां गमिष्यामीति । शरणं शृणाति हिनस्ति मायां तत्कार्यं शरणम् । कथमित्याशंक्य ब्रह्मोपदेशेनेत्याह । गुरुं गृणाति ब्रह्मोपदिशतीति निरुक्तेः । शिष्यः साधनसंपन्नः तं गुरुमभ्युपेति 'तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया' इत्यादिविध्युपादिष्टप्रकारेणोपसीदतीत्यर्थः ॥ ४९ ॥ ५० ॥

प्रयोजनं यदस्माकं यदर्थं चास्मदुद्भवः ॥
जगदाविद्यकत्वे यो हेतुः पृष्टस्त्वया सति ॥ ५१ ॥

'मन एव मनुष्याणां कारणं बंधमोक्षयोः ॥ बंधाय विषयासक्तं मोक्षे निर्विषयं स्मृतम्' इतिश्रुत्युपदिष्टं मनोनिरोधाधीनमेव सर्वसाधनजातमित्याह सार्धद्वयेन । इत इति । हे चित्तवृत्ते यदस्माकं प्रयोजनम्, च पुनः यदर्थमस्मदुद्भवः विवेकादीनामुत्पत्तिः । इतःपरं त्वदधीनमिवेक्ष्यते त्वदधीनमिव प्रतिभाति । इवशब्देन त्वन्नाशाधीनमित्यर्थः । वस्तुनाशाधीनेऽप्यधीनत्वमेव नाशं प्रतियोगिनः कारणादिति । सर्वथाऽस्या एव स्वातंत्र्ये अनिर्मोक्षापत्तेः । तन्निरोधाधीनत्वे योगश्चित्तवृत्तिनिरोध इति सूत्रस्यापि प्रमाणत्वात् । हे सति जगदाविद्यकत्वे जगतो मायामात्रत्वे यस्त्वया हेतुः पृष्टः ॥ ५१ ॥

विचारे क्रियमाणे स न त्वदन्यो निरीक्ष्यते ॥
साधनं बाधनं वाऽपि जगतो यद्वशे तव ॥ ५२ ॥

विचारे क्रियमाणे स हेतुः त्वदन्यो न निरीक्ष्यते । साधनं बाधनं वापि जगतः साधनं रचना बाधनं निवृत्तिर्यत् तत्तव वशे वर्तते । तथाच वसिष्ठः-'मनो विस्पन्दमात्रेण दुःखशांतिरवाप्यते ॥ मनो मननमात्रेण दुःखं परमवाप्यते ॥ दुःखमुत्पादयत्युच्चैरुत्थितश्चित्तराक्षसः ॥ सुखायानंतभोगाय तं प्रयत्नेन पातय ॥ भोगैकवासनां त्यक्त्वा त्यज त्वं भेदवासनाम् ॥ भावाभावौ ततस्त्यक्त्वा निर्विकल्पः सुखी भव' इति ॥ ५२ ॥

इत्युक्ता सा ऽब्रवीद्भिक्षुमनुजं चासितेक्षणा ॥
भक्त्या स्निग्धतया वाक्या प्रसन्ना शारदेंदुवत् ॥५३॥

चित्तवृत्तिरेवं भिक्षुणोक्ता किमवदित्यत आह । इत्युक्तेति । सा ऽसितेक्षणा ऽनुजं जनु पश्चाज्जायते ऽनुजः कनिष्ठभ्राता तं भिक्षुं शारदेंदुवत् प्रसन्ना स्वच्छा भक्त्याख्या भक्तिश्चाराध्यत्वेन ज्ञानं तया युक्ता स्निग्धतया प्रीतिभावेन वाक्या ऽब्रवीत् अनुजाय व-चनं व्याजहार ॥ ५३ ॥

काकं निक्षिपसि भ्रातः किं कार्तस्वरपंजरे ॥
शुकं विहाय रुचिररूपं मंजुलभाषितम् ॥ ५४ ॥

किमब्रवीदत आह । काकमिति । हे भ्रातः कार्तस्वरपंजरे स्वर्णपंजरे रुचिररूपं कमनीयस्वरूप मंजुलभाषितं मधुरवचनं शुकं विहाय काकं श्यामवर्णं कठोरवचन निक्षिपसि स्थापयसि ॥ ५४ ॥

पद्माकरे दिवाभीतं कुतो निक्षिपसि स्वयम् ॥
हित्वा हंसं शुद्धपक्षं रक्तचंच्वंघ्रिलोचनम् ॥ ५५ ॥

तादृशमयोग्यमेव दृष्टांतमाह । पद्माकरेति । रक्तचंच्वंघ्रिलोचनं चंचुश्च अंघ्रिश्च लोचनं च तेषां समाहारः चंच्वंघ्रिलोचनं रक्तं चंच्वंघ्रिलोचनं यस्य स तथा तम् । शुद्धपक्षं श्वेतपक्षं हंसं मरालं कमलाकरस्थि-तियोग्यं हित्वा त्यक्त्वा दिवाभीतं दिवांधमुलूकमतिनिंदितं पद्माकरे प-द्माकरे निक्षिपसि ॥ ५५ ॥

नियोजयसि किं श्राद्धे शुनकं प्रथमासने ॥
पठंतं द्विजमुत्सृज्य सूक्तान्याचारमंथरम् ॥ ५६ ॥

अयोग्यमेव दृष्टांतमाह । नियोजयसीति । आचारमंथरं स्वराद्यहीनं यथा स्यात्तथा सूक्तानि वेदभागान् पठंतं द्विजं गायत्रीसंस्काराद्ध-श्च द्विजत्वं ब्राह्मणमुत्सृज्य त्यक्त्वा प्रथमासने श्राद्धे शुनकं श्वानम-योग्यं नियोजयसि विधेयं करोषि ॥ ५६ ॥

लक्षहोमादिहोमेषु पलाण्डुलशुनं तथा ॥
हविष्ट्वेन किमादत्से संत्यक्तघृतपायसः ॥ ५७ ॥

अयोग्यमेव दृष्टांतमाह । लक्षहोमादिहोमेषु लक्षहोम आदिर्येषां ते लक्षहोमादयस्ते लक्षहोमादयश्च ये होमास्ते तथा तेषु वेदविहितेषु पलांडुः सुकंदकं 'पलांडुस्तु सुकंदकः' इत्यमरात् । अभक्ष्यतया मन्वादिशिष्टैर्विगर्हितं तथा लशुनमपि तादृशमेव हविष्ट्वेन किं वेदनिषिद्धमादत्से चर्वादिस्थाने गृह्णासि । संत्यक्तघृतपायसः घृतं च पायसं च घृतपायसं संत्यक्तं येन स तथा 'परमान्नं तु पायसम्' इत्यभिधानात् । दुग्धतंडुलनिर्मितमन्नं पायसमिति ॥ ५७ ॥

यन्मां विषयजैर्लब्धैः करंवितकलेवराम् ॥
जगत्क्षये मुक्तिपथे नियोजयसि सादरम् ॥ ५८ ॥

दृष्टांतानुक्त्वा दार्ष्टांतमाह । यन्मामिति । यत् यस्माद्धेतोः विषयजैर्लब्धैः सुखलवैः करंवितकलेवरामुपचितशरीरां विषयभोगमात्रजीवनां विषयशरीरां जगत्क्षये प्रपंचनिवृत्त्युपलक्षिते मुक्तिमंडपे परमहंसयोग्ये सादरं यथा स्यात्तथा नियोजयसि प्रेरयसि । यथा काकस्य स्वर्णपंजरे दिवाभीतस्य पद्माकरे शुनः श्राद्धे होमे लशुनस्य तथा विषयासक्तायाः मम योग्यता नास्तीत्यर्थः । एतेन रागिणो ज्ञानेऽधिकारो नास्तीति सूचितम् ॥ ५८ ॥

अनुतापपरामेवमग्रजामनुजो ऽब्रवीत् ॥
मामैवं वद चार्वंगि स्ववृत्तमवधारय ॥ ५९ ॥

चित्तवृत्तेर्वचनं श्रुत्वा किमब्रवीदत आह । अनुतापेति । अनुजो भिक्षुरेवं पूर्वोक्तप्रकारेणानुतापपरां पश्चात्तापं कुर्वतीमग्रजां ज्येष्ठभगिनीमब्रवीत् । किमब्रवीत् अत आह । हे चार्वंगि । एवं मां वद स्वस्य वृत्तांतमवधारय निश्चिनु इत्यर्थः ॥ ५९ ॥

स्फटिकस्यामलत्वं यद्गुणो दोषापत्ते ऽत्र सः ॥
सन्निधौ मलिनस्यैव विधत्ते मलिनप्रभाम् ॥ ६० ॥

हे भिक्षो कीदृशं स्वच्छत्वमवधारयामीत्यत आह । स्फटिकस्येति । चित्तवृत्ते यत्स्फटिकस्यामलत्वं निर्मलत्वं गुणोऽस्मिन्व्यवहारे दोषाय दोष इव प्रतिभाति स गुणः । को दोषोऽत आह । संनिधौ मलिनस्य वस्तुनः सामीप्ये मलिनप्रभां मलिनकांतिं विधत्ते धारयति ॥ ६०

तथा त्वयाऽपि स्वच्छत्वं दोषायैव प्रकल्प्यते ॥
यद्यत्संनिहितं तत्तन्मयत्वं येन दृश्यते ॥ ६१ ॥

सद्दृष्टांतेन दृष्टांतेन मयि किमायातमत आह । तथेति । हे चित्तवृत्ते तथा स्फटिकवत् त्वयाऽपि स्वच्छत्वं दोषायैव प्रकल्प्यते स्वीक्रियते येन स्वच्छत्वेन यद्यत्संनिहितं वस्तु तत्तन्मयत्वं दृश्यते । चिदात्मन इति शेषः । त्वत्संबंधिनः शुद्धस्य निर्विकारस्य संसारः प्रतिभातीत्यर्थः ॥ ६१ ॥

त्यक्त्वा ततो विषयसंगमसंगमेक-
मात्मानमाकलय शुद्धमहःस्वरूपम् ॥
एवंविधे च विषये सचिवत्वमेष्य-
त्यभ्यस्यमानमिह तत्त्वमसीति वाक्यम् ॥ ६२ ॥

तर्हि मम को दोष इत्याशंक्य विषयसंग एव दोष इत्याह । त्यक्त्वेति । ततो दोषत्वात् विषयसंगं त्यक्त्वा एकमद्वितीयमसंगम् " असंगो नहि सज्जते " इतिश्रुतेः । सर्वसंगवर्जितं शुद्धं निर्मलमात्मानं प्रत्यग्रूपं कूटस्थं महःस्वरूपं पूर्णब्रह्मरूपमाकलय विचारय । आत्मनो ब्रह्मरूपत्वे किं प्रमाणमत आह । एवंविधे इति । ब्रह्मणोरैक्ये ऽभ्यस्यमानं तत्त्वमसीति वाक्यं सचिवत्वं सहायत्वमेष्यति प्रमाणतां गमिष्यति इत्यर्थः। यथा नाना दृष्टांतैः मधुकरानीतरसनद्युद्रमागमनदीवृक्षच्छेदवटनाशवटबीजोदकप्रक्षिप्तलवणघोरबद्धनेत्रोपदिष्टगांधारोपदेशदीपदीप्तवस्तुवद्विद्विछोर्कासरागमनतप्तपरशुग्रहणरूपैर्नवकृत्वोभ्यस्तं वाक्यं श्वेतकेतोः सहायतां गतं तथेत्यर्थः ॥ ६२ ॥

उदीरितां महावाक्यैरतां ब्रह्मात्मैक्यगोचराम् ॥
जगत्संत्यक्ष्यति क्षिप्रेण रज्जुबुद्धिमिवाहिराट् ॥ ६३ ॥

नन्वयं महान्प्रपंचः कथं लयमेष्यतीत्याशंक्य रविप्रभां वीक्ष्य तम इव महावाक्यसवित्रां त्वां दृष्ट्वैव जगल्लीनं भविष्यतीत्याह। उद्दीपितामिति। महावाक्यैरुद्दीपितां तज्जन्यां ब्रह्मात्मैक्यगोचरामखंडाकारां निर्विकल्पा त्वां वीक्ष्यैव प्राप्यैव। अहिराट् सर्पराजः रज्जुबुद्धिं वीक्ष्यैव जगन्नंक्ष्यति मृतकरी यथा नभो नीलिमवत् दृश्यते मानमेकं गमिष्यति॥ ६३॥

**तदा निवृत्तानर्था स्युः प्राप्तानंदाश्च भिक्षवः॥**
**भद्रे तव प्रसादेन माविलंबं विधेहि तत्॥ ६४॥**

ततोऽपि किं भविष्यतीत्यत आह। तदेति। भिक्षवः कर्मंदिनः निवृत्तानर्थाः निवृत्तो ऽनर्थो अविवेको येषां ते तथा। नन्वेवं तार्किकाभिमतमोक्षेऽतिप्रसंगोऽत आह। प्राप्तानंदाश्च प्राप्तः परिपूर्णो निरतिशय आनंदो यैः ते तथा। हे भद्रे तव प्रसादेन भविष्यंति तत्तस्मात्त्वदधीनत्वात् मा विलंबं विधेहि चिरं मा कुरु॥ ६४॥

**बहूनामुपकाराय स्वनाशो ऽप्युचितः सताम्॥**
**स्वयं मृत्वा रसेंद्रो हि संजीवयति देहिनम्॥ ६५॥**

ननु विषयत्यागे मृतिर्मे ऽवश्यं भविष्यतीत्यत आह। बहूनामिति। सता परोपकृतिधृतदेहानां स्वनाशोऽप्युचितः। कस्मै प्रयोजनाय। बहूनामुपकाराय। अत्र दृष्टांतमाह। स्वयं मृत्वा रसेंद्रो हि रसेंद्रः पारदः 'रसो रसेंद्रः सूतश्च पारदो मिश्रकस्तथा॥ इति पंचविधो जातः क्षेत्रभेदेन शंभुजः' इत्युक्ते रसेंद्रो यथा स्वनाशं प्राप्य देहिनः प्राणिनो जीवयति। हि शब्दो वैद्यकप्रसिद्धिद्योतनार्थः। परोपकाराय दधीचिना देवेभ्यो ऽस्थीनि दत्तानि, बहमागताय व्याधाय पक्षिणा स्वशरीरं दत्तम्, शिबिना कपोतोपकाराय स्वमांसखंडं कृत्वा श्येनायार्पितम्, अतीवार्षि काशी अगस्त्येन देवोपकृतये त्यक्ता। अतएवोक्तं स्कांदे 'परोपकर्णं येषां जागर्ति हृदये सताम्॥ विपदश्च नश्यंति संपदः स्युः पदे पदे' इति। तस्मात्परोपकृत्यर्थं स्वनाशोऽप्युचितः सतामिति। त्वयाऽपि भिक्षूपकाराय स्वदेहस्त्यक्तव्य इति भावः॥ ६५॥

जीवितं मरणं तन्वि परोपकृतिवर्जितम् ॥
मरणं जीवितं मन्ये यत्परोपकृतिक्षमम् ॥ ६६ ॥

परोपकारं विना जीवितं न शोभते इत्याह । जीवितमिति । हे तन्वि परोपकृतिवर्जितं जीवितं मरणं यत्परोपकृतिक्षमं परोपकारे समर्थं मरणं जीवितं मन्ये ॥ ६६ ॥

इति प्रबोधिता चित्तवृत्तिस्तेनात्र योगिना ॥
विरक्ता विषयेभ्यः सा ब्रह्मात्मैक्यमुपाददे ॥ ६७ ॥

एवमुपदिष्टा चित्तवृत्तिः किमकरोदित्याशंक्य न किमप्यकरोत्कर्तृत्वनिदानाज्ञाननिवर्तकब्रह्मात्मभावमेव प्राप इत्याह । इतीति । तेन योगिना परिव्राजा ऽत्र व्यवहारदशायामिति पूर्वोक्तप्रकारेण विषयेभ्यो विरक्ता ऐहिकामुष्मिकभोगान् वांत इव त्यक्त्वा प्रबोधिता उपदिष्टा सती ब्रह्मात्मैक्यं ब्रह्मसाक्षात्कारमुपाददे प्राप इति ॥ ६७ ॥

प्राप्तस्यैवानंदवार्धेस्तदाप्ति-
स्त्यक्तस्यैव क्लेशवार्धेस्तदा ऽभूत् ॥
त्यागो यस्मिंस्तत्त्वमस्यादिवाक्यै-
र्जाता काले तादृशी चित्तवृत्तिः ॥ ६८ ॥

ननु पूर्णानंदस्यैक्यज्ञानात्पूर्वमपि स्वरूपेण प्राप्तत्वात्तदुद्देशेन तदुपाये प्रवृत्तिर्व्यर्था इत्याशंक्य विस्मृतचामीकरवत् प्राप्तस्यैवोपचारिकी प्राप्तिर्ज्ञानकाले निवृत्तिरित्याशयेनाह । प्राप्तस्यैवेति । यस्मिन्काले तत्त्वमस्यादिवाक्यैस्तादृशी चित्तवृत्तिरखंडाकारा निर्विकल्पका जाता तदा तस्मिन्काले प्राप्तस्यैवानंदवार्धेर्निरतिशयपरिपूर्णानंदसमुद्रस्य प्राप्तिः। त्यक्तस्यैव क्लेशवार्धेः क्लेशानामविद्यास्मितारागद्वेषाभिनिवेशानां वार्धिः समुद्रस्तस्य त्यागो निवृत्तिः, आविद्यकत्वात् यदविषयं यद्भासते तद्विषया तन्निवृत्तिरिति न्यायाद्रज्जुसर्पादौ दृष्टत्वात्। नन्वेवमपि तदाप्तेर्ज्ञानसाध्यत्वं कथमिति चेदत्राहुः । यस्मिन्सत्युत्तरक्षणे संबंधो यस्य तत्तत्साध्यमिति न्यायानुरोधेन ज्ञाने सत्युत्तरक्षणे निरतिशयानंदत्वं ज्ञानाभावे निर-

तिशयानंदाभावसत्वमिति साध्यलक्षणसत्वान्निरतिशयानंदस्य प्राप्तस्यापि योगक्षेमसाधारण्यात् प्राप्तेः सत्वात्साध्यत्वोपपत्तेरिति । नन्वेवमप्यविद्यानिवृत्तेः क्षणिकत्वे मोक्षः स्थिरपुरुषार्थो न स्यादिति चेन्न । अविद्यानिवृत्तेः स्वतः पुरुषार्थत्वाभावेन तन्निवृत्त्याविर्भूताखंडानंदस्य सर्वदुःखोच्छेदस्य च पुरुषार्थत्वेन साध्यत्वादात्मरूपत्वेन स्थिरत्वादिति भावः ॥ ६८ ॥

स हरिहरसरस्वतीयतींद्र-
द्युमणिकराभिहताज्ञतांधकारः ॥
जयति परमहंसयोगिवर्यो-
नरहरिसंज्ञचिदात्मसक्तचित्तः ॥ ६९ ॥
जिताहारो जितक्रोधो जगन्नाथसरस्वती ॥
येनाहं रचितो ग्रंथः अद्वैतामृतसंज्ञकः ॥ १७० ॥

मंगलादीनि मंगलमध्यानि मंगलांतानि शास्त्राणि प्रथंत इति महाभाष्योक्तेः ग्रंथांते 'यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ॥ तस्यैते कथिता ह्यर्थाः प्रकाशंते महात्मनः' इतिश्रुतेर्गुरूपकारं कथयन् तच्चिंतनरूपं स्वोपास्यचिंतनरूपं मंगलं सूचयंश्च यथार्थनामको ग्रंथो ऽद्वैतामृतसंज्ञको मया समापित इत्याह । स हरिहरेति द्वाभ्याम् । येनायमद्वैतामृतसंज्ञको ग्रंथो रचितः स जगन्नाथसरस्वती जयतीति संबंधः । कथंभूतः जगन्नाथसरस्वती । हरिहरसरस्वतीयतींद्रद्युमणिकराभिहतांधकारः हरिहरसरस्वतीयतींद्रो द्युमणिः सूर्य इव तस्य कराः किरणाः वाक्यं तेनाभिहतो नष्टो ऽज्ञता एवांधकारो यस्य सः । पुनः परमहंसयोगिषु वर्यः श्रेष्ठः । नरहरिसंज्ञचिदात्मसक्तचित्तः नृसिंहपदमसिद्धा चित् ईश्वरः तत्पदार्थः स एवात्मा त्वंपदलक्ष्यस्तत्र सक्तं चित्तं यस्य सः । एतेनोपमहत्मेयो दर्शितः । जिताहारः वशीकृतरसनेंद्रियः । जितक्रोधः कामाभावात्क्रोधाभाव ॥ ६९ ॥ ७० ॥

एतस्य कवलान्यं चास्वाद्य सादरतां गताः ॥
अमृतत्वं प्रयांत्वाशु विबुधा यतिसत्तमाः ॥१७१॥

एतद्ग्रंथविचारफलनिर्देशपूर्वकं मंगलांतानि शास्त्राणि प्रथंते इतिवचनादंते आशीर्वादात्मकं मंगलमाचरति । एतस्येति । एतस्याद्वैतामृतसंज्ञस्य पंचकवलानास्वाद्य पंचकवलप्रतिपाद्याद्वैतानंदमनुभूय । अथवा । पंचभूतग्रासान् आस्वाद्य प्रत्यगात्मनि अंतर्भाव्य यथाभुक्तमन्नं स्वातिरिक्तं न मन्यते तथेदमपि स्वातिरिक्तं नेति निश्चित्य सादरतां गताः जगद्विस्मरणपूर्वकाद्वैतानंदमीतिनिर्भरनिमग्नाः आशु शीघ्रं वृत्त्युदयकालमेवामृतत्वं मोक्षं प्रयांतु । विबुधाः विवेकिनः । यतिसत्तमाः परमहंसपरिव्राजका इति ॥ १७१ ॥ ॥ श्रुत्यंतार्थप्रधाने हि कवले पंचमे शुभो ॥ व्याख्यातया प्रसन्नोऽस्तु कवलः प्रतिपादितः ॥ १ ॥ श्रीशिवसहायसद्गुरुचरणाब्ज आलंबनेन निर्मायि ॥ टीकाऽल्पमतिहिताद्वैतामृततरंगिणीनाम ॥ २ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यहरिहरसरस्वतीप्रियाशिष्यपरमहंसजगन्नाथसरस्वतविरचिते ऽद्वैतामृते पंचमः कवलः संपूर्णः ॥ ५ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यजगन्नाथसरस्वतीविरचिते ऽद्वैतामृते ऽमृततरंगिणीटीकायां पंचमः कवलः संपूर्णः ॥ ५ ॥ शुभं भवतु ॥ ॥